UNIVERSITY OF MYSORE

ORIENTAL LIBRARY PUBLICATIONS

SANSKRIT SERIES No. 59

# श्रीमद्ब्रह्मसूत्रभाष्यम्.

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

श्रीमज्जयतीर्थ-व्यासतीर्थ-राघवेन्द्रतीर्थानां

टीकाभिस्समलङ्कृतम्.

चतुर्थसम्पुटम्

# THE BRAHMASŪTRA BHĀSHYA

OF

Sri Madvachārya with Glosess of Sri Jayatirtha, Sri Vyāsatirtha and Rāghavendratirtha

Vol. IV

EDITED BY

R. RAGHAVENDRACHARYA

*Resident Pandit Govt Oriental. Library, Mysore.*



MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS

1922



## EDITORIAL NOTE.

As this work has since been completely printed in the Nirnayasagara Press, Bombay, and published by T. R. Krishnacharya, Kumbhakonam, publication of further portions of this work is stopped.

R. SHAMASASTRY.
*Curator.*

# भूमिका

अथायं श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य तत्वप्रकाशिका, तात्पर्यचन्द्रिका, प्रकाशैस्साकं मुद्रयितुमारब्धस्य तुरीयो भागः, प्रथमाध्याये तृतीयपादे आदितो नवानामधिकरणानां विवरणपरैः ग्रन्थभागैः परिपूर्णावयवः प्रकाश्यते—

साम्प्रतमेतस्मिन् भागे विचारितानामधिकरणानां विषयसङ्ग्रहोऽयं क्रियते

प्राणाधारत्वद्युभ्वन्तरिक्षायतनत्वमन आयतनत्वानां तत्तच्छ्रुतिसिद्धत्वात्, 'कृत्तिवासाः पिनाकी' इति रुद्रलिङ्गात् दृष्टफलविधायकवाक्यदृष्टान्तेन तस्य सर्वाश्रयत्वप्रतिपदकवाक्यानां प्रामाण्यसिद्ध्या सर्वाश्रयत्वस्यापि रुद्रे उपपन्नत्वात् विष्णौ बहुधा जन्मनो बाधितत्वात्, तस्मिन् परविद्यावेद्यत्वस्य च प्रकारान्तरेण नेयत्वात् रुद्र एव द्युभ्वाद्यायतनं अदृश्यत्वादिगुणकश्चेति शङ्कया:—

अमृतस्यैष सेतुरित्यादिभिः मुक्तप्राप्यत्वपरायणत्वादिरूपेण प्रतिपन्नस्य आत्मशब्दमुख्यार्थस्य द्युभ्वाद्यायतनत्वप्रातिपादनात् आत्मशब्दस्यागौणतया महायोगविद्धरूढिभ्यां विष्णुमात्रबोधकत्वात् विसंवादिफलबोधकवाक्यनिदर्शनेन विप्रतिपन्नवाक्यप्रामाण्यासिद्ध्या सर्वाश्रयतया रुद्रेप्रतिपत्त्यसम्भवात्, रुद्रादिश्रुतेः अन्तकत्वादिलिङ्गस्य च प्रमाणबलेन विष्णावेवोपपन्नत्वात्

रूढिमतामपि नारायणादिपदानां रुद्रादौ रुद्रादिपदानामिव प्रयोगानर्हतायाः प्रमाणसम्प्रतिपन्नत्वात्, बहुधाजायमानत्वस्य विष्णावपि प्रमाणसिद्धत्वात् विष्णुरेव द्युभ्वाद्यायतनमदृश्यत्वादिगुणकश्च इति समाधानपरेण प्रथमेनाधिकरणेन साधारणद्युभ्वाद्यायतनत्वलिङ्गसमन्वयः कृतः ॥

प्राणो वा आशाया भूयानिति प्राणशब्दोपक्रमेण भूमत्वोक्तेः, साभ्यासाया अपि समाख्यायाः निरवाकाशानुक्तिसहितोपक्रमापेक्षया दौर्बल्यात्, भूम्नस्सर्वोत्तमत्वप्रतिपादनार्थैव नामवागादितारतम्यप्रक्रमात्, निरवकाशलिङ्गाभावेन प्राणशब्दस्य ब्रह्मपरत्वासम्भवात्, 'उत्क्रान्तान् प्राणान्' इतिश्रुत्या वायुलिङ्गस्यैव प्रतिपन्नत्वात् श्रौतोत्क्रमणाविरोधेनैव वाक्यगम्यस्य सर्वगतत्वस्य नेयत्वात् भूमा मुख्यप्राण एवेति शङ्कायाः—

यो वै भूमा तत्सुखमिति भूम्नि प्रतिपादितस्य पूर्णसुखत्वस्य विश्वशम्भवामित्यनूद्य सर्वोत्तमे विष्णावेव पुंसूक्तेन स्थापनात्, सर्वोत्तमानन्दत्वस्य च विरोधेनोभयत्रानभ्युपगमात्। मुख्यामुख्यन्यायबाधेन तत्सुखमित्यनेनापूर्णसुखमुच्यते इति वक्तुमशक्यत्वात्। नाल्पे तत्सुखमिति निषेधस्य मानसिद्ध जीवीयाल्पसुखविषयकत्वाभावेन वैयर्थ्यप्रसङ्गाच्च । प्राणाद्भूयसोऽनुक्तेश्च सावकाशतया उपक्रमप्राबल्यबीजस्य शैथिल्यात् समाख्यायाः प्राबल्यात् उत्क्रमणलिङ्गस्य च विष्णावप्युपपन्नत्वाच्च भूमा विष्णुरेवेति समाधानपरेण भूमाधिकरणेन भूमादिसाधारणनामसमन्वयः कृतः।

अदृश्यत्वादिगुणकत्वस्य प्रमाणतः श्रौतत्वेपि प्रतिपन्नत्वात्, सूर्यचन्द्राद्याधारत्वस्यापि तत्र 'एतस्य वा अक्षरस्य' इत्या-

दिप्रमाणबलेन निश्चयात्, न तदश्नाति किञ्चनेत्युक्तस्य अनशनस्य चराचरात्तरि विष्णौ बाधितत्वात्, किञ्चनेत्युक्त्या अनशनाविशेषपरिग्रहस्य वक्तुमशक्यत्वात्, श्रीतत्वे च ब्रह्मवत् संहर्तृत्वरूपस्याशनस्याभावो युक्त एवेति अम्बरान्तधृतिप्रशासनादिकमपि तस्यैवेति शङ्कायाः,

अक्षरशब्दप्रवृत्तिनिमित्तस्य चतुर्विधविनाशराहित्यस्य ब्रह्मण्येव पौष्कल्यात् 'अक्षरं परमम्' इत्यादिषु अक्षरशब्दस्य ब्रह्मण्यपि प्रसिद्धप्रयोगत्वात्, असङ्कुचितविषयत्वानन्यायत्तत्वरूपप्रकर्षविशिष्टशासनकर्तृत्वस्य ब्रह्मणोऽन्यत्रासम्भवात् 'आकाश एव तदोतं प्रोतं चेति' सर्वचेतनपोषकतया, 'अक्षरे गार्गि आकाशः ओतः प्रोतश्चेति, अन्याश्रितत्वेन चोच्यमानायाश्चित्प्रकृतेराश्रयत्वस्य तत्रैव संभवात् अनशनस्य च अशनानुपजीवनरूपस्य अत्तृत्वाविरोधित्वाच्च अक्षरं ब्रह्मैवेति तदेव अम्बरान्तधृतिप्रशासनादिकर्तृ इति च समाधानपरेण अक्षराधिकरणेन साधारणाक्षरनामसमन्वयः कृतः—

बहुस्यां प्रजायेयेति समभिव्याहृतवाक्योपात्तस्य विकारस्य निर्विकारे ब्रह्मणि बाधात्, विकारश्रुतेर्विशेषनिषेधपरत्वासंभवात्, प्रतियोग्यनुयोगिभावापन्नयोः भावाभावरूपयोः बहुभवननिर्विकारत्वयोरविरोधानुपपत्तेः। विरुद्धस्यापि हेयस्य गुणानात्मकस्य समस्तहेयरहिते भगवति स्वीकारानर्हत्वात्, गौणेक्षणप्रायपाठेन ईक्षणस्य गौणत्वावश्यंभावेन विकार एव गौणोऽस्त्विति वक्तुमशक्यत्वात्। पूर्वाधिकरणसिद्धान्तन्यायेन चरमश्रुतस्य विकारस्यैव मुख्यतया, स्रष्टृत्वस्य कारणत्वात्मकस्य विनैव चेतनापेक्षां क्षीरदधिभावस्येवोपपन्नत्वात्, ईश्वराकारणतायाः

श्रुत्यन्तरासिद्धत्वेऽपि अद्वितीयपदसन्निधानादनन्याधीनकारणताया: प्रधानेऽप्यङ्गीकारात् सदेवेत्यादौ सत् प्रधानमेवेति शङ्कायाः—

नियाम्यसृष्ट्यपयुक्तस्य तत्तन्नियामकस्वरूपबहुभावस्य भगवत्युपपन्नत्वात्, तेजःप्रभृतेः 'तिस्रो देवता' इति देवतात्वश्रवणेन चेतनत्वावधारणात् मुख्येक्षणमेवोपपन्नमिति गौणेक्षणप्रायपाठासिद्ध्या मुख्येक्षणप्रतिपत्तिबाधकविरहात्, मुख्येक्षणस्य च प्रधाने बाधात् पूर्वाधिकरणे द्रष्टृत्वस्य बाधकविरहेणामुख्यस्याभ्युपगमेऽपि संदंशरूपबाधकसद्भावेन प्रकृते बहुभावस्य चरमश्रुतस्यापि मुख्यताया वक्तुमशक्यत्वात्, सृष्ट्यौपयिकसङ्कल्पवति भगवति मुख्यस्यैव स्रष्टृत्वस्योपपत्तेश्च तस्य कारणत्वमात्रपरत्वे मानाभावेन सदेवेत्यत्र सत् ब्रह्मैवेति समाधानपरेण सत्स्थानाधिकरणेन साधारणस्य सन्नाम्नः समन्वयः कृतः—

द्यावापृथिव्याद्याश्रयतया दहराकाशे यत्साक्षात् हृत्पद्मस्थत्वं श्रुत्यवगतं तत्प्रसिद्धाकाशस्यैव न तु ब्रह्मणः आकाशपदस्य गगने प्रसिद्धत्वात्, पूर्वप्रकृतहृत्पद्मपरामर्शेन 'तस्यान्त' इत्यादि श्रुत्या सुषिरे हृत्पद्मस्थत्वसर्वाधारत्वयोरुक्त्या, ब्रह्मणश्च सुषिरशिखामध्यस्थत्वस्य श्रुत्यन्तरेणावगतस्य सुषिरपदस्य ब्रह्मपरत्वेऽनुपपत्त्या च समाख्याया निरवकाशतया सर्वाधारत्वरूपस्य ब्रह्मलिङ्गस्य तद्बाधाशक्तत्वात् हृत्पद्मस्थदहराकाशस्य ब्रह्मत्वे अव्यवहिताकाशपरे 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इति वाक्ये दहरस्थस्यान्वेष्टव्यत्वोक्त्ययोगात्, प्रसिद्धाकाशस्य पाप्मासंभवेन अपहतपाप्मत्वस्यापि तत्र संभवात्, प्रतिहतकामादिराहित्येन सत्यकामत्वस्यापि तत्रोपपन्नत्वाच्च हृत्पद्मस्थो दहराकाशः प्रसिद्धो भूताकाश एवेति शङ्कायाः—

जडस्य भूताकाशस्य पाप्मकामनयोरप्रसक्त्या पाप्मप्रतिषेधस्य सत्यकामत्वस्य चानुपयोगात् पाप्मादिसंबन्धवज्जीववैलक्षण्योपपादनाय भगवति तथोक्तेः स्वरसत एवोपपत्तेः, अभिमानिद्वारकपाप्मप्रसक्तेः अपहतपाप्मत्वस्य मुक्तावभिमानिनि संभव इत्युक्तेश्च निरपेक्षापहतपाप्मत्वादिपरिग्रहसंभवेनायुक्तत्वात्। विष्णुरेवासौ इति समाधानपरेण दहराधिकरणेन साधारणहृत्पद्मस्थत्वलिङ्गसमन्वयः कृतः—

'तद्विजानीयां' इति सर्वनाम्ना तच्छब्देन प्रकृतस्य ज्ञानिसुखस्य परामर्शौचित्यात्, 'नैवेह किञ्चनाग्र आसीत्' इति ब्रह्मप्रकरणसर्वात्तृत्वलिङ्गाभ्यां, तदेतदितिश्रुत्योः प्राबल्यात्, तयोश्च 'तेषां सुखं शाश्वतं नेतरेषाम्', इत्युपात्तज्ञानिसुखपरत्वात्, तमात्मस्थमितीश्वरस्यापि पूर्वं प्रकृतत्वेऽपि पुल्लिंगतच्छब्दप्रकृतस्य नपुंसकलिङ्गेन तदा एतदा च परामर्शायोगात्। सन्निहितपरतां विहाय व्यवहितपरतायाः न्यायविरुद्धत्वाच्च, 'परमं सुखम्, इत्यनेनापि 'तेषां सुखम्' इत्येतदुक्तसुखस्यैव प्रत्यभिज्ञानात्, तदेतत्पदयोरुभयोर्विधेयानुरोधिनपुंसकत्वानिर्वाहात्, रूपमिति नपुंसक पदाध्याहारेण सामञ्जस्यवर्णनस्य च आध्यानेष्वधिकरणविरोधेनानुपपन्नत्वात् तमेवेति तत्पदेन पुल्लिंगेनेश्वरपरामर्शकेन आनुकूल्येन गृह्यमाणस्यापरामर्शेन, तदनुरोधेनाप्यानुकूल्येन गृह्यमाणस्य ब्रह्मताया वक्तुमशक्यत्वाच्च तदेतदित्यादिश्रुतिनिर्दिष्टं ज्ञानिसुखमेवेति शङ्कायाः—

पसंहारप्रतिपन्नयोः सूर्यादिप्रकाशहेतुत्वसर्वजगत्प्रकाशकत्वयोः ब्रह्मासाधारणतया श्रुत्यादिसिद्धत्वात् न तत्रेति तच्छब्देन कथं नु तद्विजानीयामिति सन्निहितवाक्योक्तस्य आनुकूल्येन

गृह्यमाणस्यैव प्रतिपादनात्, 'किमु भाति न भाति वा' इति दुर्ज्ञेयत्वेनोक्तस्यैव 'न तत्र' इति तत्पदबोध्यत्वात् तत्र, तमेव, तस्य, इत्येनेकप्रातिपदिकानां गुणभूतप्रत्ययार्थलिङ्गानुरोधं विहाय स्वतः प्राप्तसन्निहितपरतया 'प्रयाजशेषेण हवींष्यभिघारयति' इति वाक्ये तृतीयास्वारस्यं विहाय प्रातिपदिकस्वारस्यपरिग्रहस्यैव न्याय्यत्वात्, लिङ्गाविरोधियोजनान्तरस्याप्युपपत्तेश्च, तदेतदिति श्रुतौ तदित्यस्य व्यत्ययादिना नपुंसकत्वोपपत्त्या तस्या उपसंहारस्थानेकश्रुत्यनुसारेणेश्वरपरत्वमेव न तु ज्ञानिसुखपरतेति समाधानपरेण अनुकृत्यधिकरणेन साधारणस्य आनुकूल्येन गृह्यमाणत्वलिङ्गस्य समन्वयो दर्शितः—

प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वानां वायौ प्रमाणतस्सिद्धेः, एवमेवेति वाजसनेयश्रुतौ विष्णुलिङ्गाभावेन पूर्वं प्रकृतत्वाच्च मुख्यप्राणस्यैव प्राणपदार्थत्वात्, श्रुत्यन्तस्याऽपि वायुपरत्वात्, सङ्कोचे मानाभावेन कुविदङ्गेति ऋचाऽपि सर्वदेवोपास्यत्वोक्तेः, भूतभव्येशानत्वानुगुण्येन 'विश्वेदेवा उपासते' इत्यत्र सर्वदेवोपास्यत्वस्यैव प्रत्ययात्, मध्यमत्वस्य च उत्तरवाक्यप्रतिपन्नाशिशुत्वब्रह्माश्रितत्वविरोधेन विष्णावसत्वात्, विष्णोः सर्वनियामकत्वसर्वोपास्यत्वयोः सत्त्वेऽपि विश्वेदेवा इत्यत्र विश्वपदेन श्रुत्यन्तरानुरोधाद्योग्यसर्वप्रत्यायनेन वायुधर्माणामेव प्रतिपत्तेः आग्नेयादिपदैरैन्द्राग्नादीनामिव ब्रह्मधर्मभूतानां असङ्कुचित सर्वनियामकत्व, सर्वदेवोपास्यत्वादीनामप्रतिपत्तेः, अल्पपरिमाणत्वरूपवामनत्वस्य वायावेवोपपत्तेश्च। ईशानो भूतभव्यस्येत्यत्र ईशानः वायुरेव इति शङ्कायाः—

एष उ इत्यादिश्रुत्यवगतयोगेन रूढ्या च वामनशब्दस्य विष्णुमात्रबोधकतया वामनवामनिशब्दयोः किञ्चिद्वर्णव्यत्यासेन-

लोकवेदाधिकरणनयेन अभेदप्रत्यभिज्ञानात्, निरवकाशया श्रुत्या लिङ्गबाधनात्, सर्वं नियामकस्य विष्णोः प्रासादवासिन्यायेन प्राणनियामकत्वादिनाऽपि प्रतिपत्तिसौलभ्येन इन्द्राग्न्योः देवतात्वस्य व्यासज्यवृत्तित्वेन प्रत्येकस्मिन्देवतात्वाविरहेण आग्नेयतायास्तत्रानुपपत्तावपि प्रमाणतः तत्तन्नियामकत्वानां प्रतिपत्त्या नियाम्यत्वस्याव्यासज्यवृत्तितया प्रासादवासिन्यायबाधकाविरहात्, विष्णोः प्राणनियामकत्वस्यापि पृथगेव श्रवणात्, 'ऊर्ध्वं प्राणम्' इति देशवाचकोर्ध्वपदसमभिहारेण मध्यपदस्यापि देशवाचितौचित्याच्च लिङ्गानां सावकाशत्वात्, अङ्गुष्ठमात्रत्वस्य हृदयगतस्य ब्रह्मण्युपचारेणोपपत्तेश्च स ईशानो विष्णुरेव इति समादधता वामनाधिकरणेन साधारणस्येशाननाम्नस्समन्वय उक्तः—

इन्द्रादिपदेषु अनादिप्रतिष्ठापितानां इन्द्रादिदेवतानां विद्याफलानुभवविरहेण विद्यायामर्थित्वसामर्थ्ययोरभावात् ब्रह्मविद्यासु न तेषामधिकार इति सर्वदेवोपास्यत्वं अनन्तराधिकरणोक्तमनुपपन्नमिति शङ्का—

ज्ञानमोक्षयोरातिशयावाप्तिरूपफलसद्भावेन देवतानामर्थित्वं सामर्थ्यं चाविरुद्धमिति अस्त्येव तेषां ब्रह्मविद्यास्वधिकार इति समाहिता देवताधिकरणेन—

'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रे मनुष्याधिकारत्वस्य सार्वमानुषसाधारणाधिकारिकत्वरूपस्य प्रतीत्या तस्य च, शूद्रस्य वेदश्रवणाध्ययननिषेधपरप्रमाणेनोपरोधात् यथाश्रुतानुपूर्वीलभ्यार्थस्य कथं प्रामाणिकतेति शङ्का—

देवतानां व्यावृत्त्यभिप्रायेण मनुष्यपदप्रयोगात् शास्त्राभ्यनुज्ञातवेदग्रहणधारणा एव तत्र अधिकारित्वेन विवक्षिता इति समाहिता । इति शम् ॥

---

## टीकाचन्द्रिकाप्रकाशसमेते श्रीमद्ब्रह्मसूत्रभाष्ये द्युभ्वाद्यधिकरणाद्यपशूद्राधिकरणान्तग्रन्थस्य विषयानुक्रमणिका.

विषयाः पुटसङ्ख्याः

| विषयाः | पुटसङ्ख्याः |
|---|---|

**अथ वामनाधिकरणम्—**

## शुद्धाशुद्धपाठौ.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३ | १४ | निष्वादीति | निष्पादीति |
| १२९ | | सू ११ | सू १०—१२ |
| १८३ | ११ | असीदेक | आसीदेक |
| १९२ | ११ | तिस्रो देवतात्वेऽपि | तिस्रो देवता इति ईक्षितृत्व स्र-ष्टृत्व देवतात्वानां श्रवणात्, तेजोऽबन्नानां देवतात्वेऽपि. |
| २०६ | ११ | स्त्वक्षि | स्त्वीक्ष |
| २८९ | ३ | प्रियत्वाद्धि | प्रियत्वाद्धि |
| २९६ | १९ | भरता | भरत |
| ३०६ | १३ | इत्यक्तम् | इत्युक्तम् |
| ३६२ | १६ | वैयर्थेति | वैयर्थ्येति |
| ,, | १७ | सापेक्षत्वभावा | सापेक्षत्वाभावा |
| ३७१ | ४ | सध्रीचीन | सध्रीचीन |
| ४०० | ७ | पले विशेषाभावा | फले विशेषाभावा |
| ४१० | ८ | शक्य | शङ्क्य |
| ४११ | ११ | हतु | हेतु |
| ४१३ | १ | चन्द्रिक | चन्द्रिका |
| ४५६ | १४ | चितेत्यत आह | चिन्तेत्यत आह |
| ४६० | ६ | सम्मवात् | संभवात् |
| ४६३ | ११ | निष्को | निष्को |
| ४६४ | ९ | वेदाङ्गाकीर | वेदाङ्गीकार |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
| --- | --- | --- | --- |
| ,, | १९ | कम्पर | कम्बर |
| ४६५ | ११ | ॡप्त | कॢप्त |
| ४७४ | १ | मादधीत | मादधाति |
| ,, | १५ | कर्मणो अवैदिक | कर्मणोऽवैदिक |
| ४७५ | ११ | प्रातीतो | प्रतीतो |
| ४७६ | ११ | साध्याय | स्वाध्याय |
| ४८३ | १ | अभावकर्माणि | अभावः कर्मणि |
| ,, | ५ | त्वयाऽपहि | त्वयाऽपि हि |
| ,, | ८ | संम्भवे | संभवे |
| ४८४ | ७ | कमर्तैवै | कर्म तैव |
| ,, | ११ | जिन्याय | जिन्नयाय |
| ४८७ | ७ | प्रतिबम्ध | प्रतिबन्ध |
| ४९१ | १७ | स्मशान | श्मशान |
| ४९३ | १४ | कम्पर | कम्बर |
| ४९५ | ७ | आमिप्रतारी | अभिप्रतारी |
| ५०१ | १५ | हृप्रणे | प्रहृणे |

श्रीगुरुभ्यो नमः । हरिः । ओम्.

# अथ टीका-चन्द्रिका-प्रकाशसमेते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्याये तृतीयः पादः.

## —अथ द्युभ्वाद्यधिकरणम्—

तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन् पादे दर्शयति ।

---

तत्त्वप्रकाशिका

एतत्पादप्रतिपाद्यं दर्शयति—तत्र चेति । हरौ तदितरत्र च श्रुत्यादिप्रसिद्धनामलिङ्गात्मकशब्दानां विष्णवेकवाचित्वं प्रबलहेतुभिः प्रतिपादयत्यस्मिन् पादे सूत्रकार इत्यर्थः । चशब्दौ मिथस्समुच्चयार्थौ । देवताद्यधिकरणव्यावृत्त्यर्थ—प्रायेणेति । अत्र "रुद्रो वाव लोकाधारः, वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि सन्दब्धानि भवन्ति, आकाश एव तदोतं च प्रोतं च, सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्च" इत्यादिनोभयत्रप्रसिद्धद्युभ्वाद्यायतनत्वलिङ्गस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः ।

विष्णोः परविद्याविषयत्वमुक्तम् । तत्र "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानं" इत्यत्र "प्राणानां ग्रन्थिरसि रुद्रोमा विशान्तकः प्राणेश्वरः कृत्तिवासाः पिनाकी" इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः, "स एषोऽन्तश्चरते बहुधा जायमानः" इति जीवलिङ्गाच्च तयोः प्राप्तिरिति ।

तत्त्वप्रकाशिका

श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयसंशयसयुक्तिकपूर्वपक्षान् दर्शयति—विष्णोरिति । अदृश्यत्वादिगुणकाक्षरस्य विष्णोः परविद्याविषयत्वमुक्तम् । तत्परविद्याविषयत्वमाथर्वणे "यस्मिन् द्यौः" इत्युक्तस्य द्युभ्वाद्यायतनस्योच्यते "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" इति । स च यदि विष्णोरितरस्स्यात्तदा परविद्याविषयत्वमन्यस्य प्रसज्येतेत्यवश्यं निर्णयः । तद्द्युभ्वाद्यायतनत्वं विषयः । तत्किं विष्णोरन्येषां वेति सन्देहः । उक्तसाधारण्यमेव सन्देहबीजम् । द्युभ्वाद्यायतनत्वं रुद्रप्रधानजीववायूनामिति पूर्वः पक्षः, अत्रोक्तप्राणाधारत्वस्य "प्राणानां ग्रन्थिरासि, प्राणेश्वरः" इत्यादिना रुद्रे प्रतीतेः । तथा द्युम्वन्तरिक्षायतनत्वस्य च "रुद्रो वाव लोकाधारः" इति तस्मिन्नुक्तत्वात् । मनआयतनत्वं च तस्मिन् "मनो वै रुद्र ओतं च प्रोतं च" इति प्रतीयते । न चैतच्छ्रुतीनां विष्णुविषयत्वं, "अन्तकः कृत्तिवासाः

अत उच्यते—

तत्त्वप्रकाशिका

पिनाकी" इत्यादिरुद्रलिङ्गात् । दृष्टफलविधायकरुद्रवाक्यदृष्टान्तेन तत्सर्वाश्रयत्वप्रतिपादकवाक्यप्रामाण्यानुमानेन च तस्य सर्वाश्रयत्वसिद्धेः । द्युभ्वादीनां प्रकृतिकार्यत्वात्तदाश्रयत्वं प्रकृतेर्युक्तम्, "यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च" इति श्रुतेश्च । पूर्ववत्प्रकृतेः सर्वाश्रयत्वाभिधायककापिलागमप्रामाण्यानुमानाच्च ।

अरा इव रथनाभौ संहता यत्र नाड्यः ।
स एषोऽन्तश्चरते बहुधा जायमानः ॥

इति द्युभ्वाद्यायतने जीवलिङ्गश्रवणात् जीवस्य तद्युक्तम् । तस्य जीवत्वादेव प्राणित्वप्रसिद्धेश्च । विषयभूतलोकाधारत्वस्य "वायुना वै गौतम सूत्रेण" इति वायौ श्रुतिसिद्धत्वात्तस्य द्युभ्वाद्यायतनत्वं युक्तम् । तस्य प्राणाधारत्वप्रसिद्धेश्च । विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपि नासावत्रोच्यते, बहुधा जन्मबाधात् । परविद्याविषयत्वलिङ्गाद्विष्णुरिति चेन्न, जीवेशाभेदेन ब्रह्मलिङ्गस्यापि जीवे सम्भवात् । न च तथा बहुधा जन्म सम्भवति, कारणगतस्यैव कार्ये सम्भवात् । अतः परविद्याविषयो द्युभ्वाद्याश्रयो विष्णोरितर एवेति तस्यैवादृश्यत्वादिगुणकत्वमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति । द्युभ्वाद्यायतने स्वशब्दपर्यायात्मशब्दश्रवणात्

## ओम् द्युभ्वाद्यायतनं स्वशब्दात् ओम् ॥ १ ॥

"तमेवैकं जानथ आत्मानं" इत्यात्मशब्दाद्द्युभ्वाद्याश्रयो विष्णुरेव ।

आत्मब्रह्मादयश्शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता ॥

इति ब्रह्मवैवर्ते ॥ १ ॥

## ओम् मुक्तोपसृप्यव्यपदेशात् ओम् ॥ २ ॥

"अमृतस्यैष सेतुः" इति । "ब्रह्मविदाप्नोति परं"

नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।

"मुक्तानां परमा गतिः" "एतमानन्दमयमात्मानमुपसङ्क्रामति" इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ।

तत्त्वप्रकाशिका

द्युभ्वाद्यायतनं विष्णुरेवेत्यर्थः । आत्मशब्दादपि कुतो विष्णुरित्यत आह—आत्मेति ॥ १ ॥

ननु विष्णौ मुख्योऽप्यात्मशब्दो जीवलिङ्गबलादमुख्यार्थः किं न स्यात्, तथा च न विष्णोर्द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—मुक्तेति । नात्मशब्दस्यामुख्यार्थत्वं परिकल्प्य द्युभ्वाद्यायतनत्वमन्यत्र नेतुं शक्यम्, द्युभ्वाद्यायतनस्य मुक्तप्राप्यत्वोक्तेर्विष्णुत्वनिश्चयादित्यर्थः । 'अमृतस्य' इति जातावेकवचनम् । मुक्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह—ब्रह्मविदिति । 'पराणां' मुक्तानां 'अयनं' आश्रयः ।

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति।
योगी तावन्न मुक्तस्स्यादेष शास्त्रस्य निर्णयः ॥

इत्यादिसपुराणे ॥ २ ॥

**ओम् नानुमानमतच्छब्दात् ओम् ॥ ३ ॥**

**नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः, भस्मधरोग्र-त्वादितच्छब्दाभावात्। "सोऽन्तकः स रुद्रः स प्राणभृत्स**

तत्त्वप्रकाशिका

एतद्वाक्यैरस्तु विष्णोर्मुक्तप्राप्यत्वं, तदन्यस्यापि किं न स्यादित्यत आह—**बहुनेति** ॥ २ ॥

ननु प्रागुक्तरीत्या रुद्रप्रकृत्योः किं न स्यात् द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—**नानुमानमिति**। प्रागुक्तानुमानसिद्धप्रामाण्ये पाशुपताद्यागमे सर्वाश्रयत्वेन कल्पिते रुद्रप्रधाने अत्र प्रकरणे सर्वाधारतया प्रतिपाद्ये न भवतः, तच्छ्रुतिलिङ्गाद्यभावादिति भावः। आगमप्रामाण्यसाधकानुमानं तु फलविसंवादिरुद्रादिवाक्यदृष्टान्तेन विप्रतिपन्नवाक्याप्रामाण्यसाधनसम्भवात् प्रतिपक्षग्रस्तमतिप्रसङ्गदुष्टं चेत्युपेक्ष्यम्। अभाषितं प्रधानं किं संयोज्यत इति चेन्न, "न प्रकृतिजीवावभिधीयेते" इत्यन्यत्रोक्तत्वात्। न च प्रकृतिपदेनापि रुद्रः, पृथगुभयग्रहणे बाधकाभावात्। नन्वत्र रुद्रादिज्ञापकाभावेऽपि श्रुत्यन्तरे "प्राणानां ग्रन्थिरसि रुद्रः" इत्याद्युक्तेः द्युभ्वाद्यायतनत्वं रुद्रादेः किं न स्यादित्यत आह—**स इति**। श्रुत्यन्तरोक्तमपि द्युभ्वाद्यायतनत्वं वि-

प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्” इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्।

ब्रह्माण्डे च—

रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः।
ईशनादेव चेशानो महादेवो महत्त्वतः॥
पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात्।
तदाधारो यतो विष्णुः पिनाकीति ततस्स्मृतः॥
शिवस्सुखात्मकत्वेन शर्वश्शंरोधनाद्धरिः।
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन्॥

तत्त्वप्रकाशिका

ष्णोरेव। न च रुद्रादिश्रुतिलिङ्गविरोधः, श्रुतिबलेन रुद्रादिश्रुतेरन्तकत्वादिलिङ्गस्य च विष्ण्वेकनिष्ठत्वादिति भावः। ननु रुद्रादिशब्दानां विष्णुपरत्वं किं योगेन रूढ्या वा? नाद्यः, योगस्य दौर्बल्यात्। न द्वितीयः, तदभावात्। उभयत्र रूढिसद्भावे पुनर्निश्चयायोगात्। न हि श्रुत्यन्तरे विष्णुलिङ्गाद्यस्तीत्यत आह—**ब्रह्माण्डे चेति**। रुद्रादिशब्दानां विष्णौ योगमुक्त्वा “वेदेषु सपुराणेषु गीयते” इति विद्वद्रूढिकथनात् रूढिमात्रान्महायोगविद्वद्रूढ्योः प्राबल्याद्युक्तः श्रुत्यन्तरेऽपि विष्णोः प्रतिपाद्यत्वनिश्चय इति भावः। ननु यदि रुद्रादिशब्दानां विष्णुपरत्वमुक्त्वा श्रुतीनामनिर्णायकत्वमुच्यते, तर्हि नारायणादिनाम्नां रुद्रादिपरत्वेन “नारायणं म-

कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।
बृंहणाद्ब्रह्मनामाऽसौ ऐश्वर्यादिन्द्र उच्यते ॥
एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ॥

इति । वामने च—

न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः ॥

इति । स्कान्दे च—

ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान्राजेवर्ते स्वकं पुरम् ॥

इति ।

चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति ।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ॥
विशेषनामानि ददौ स्वकीन्यपि केशवः ।

इति च ब्राह्मे ॥ ३ ॥

तत्त्वप्रकाशिका

हाज्ञेयं" इयादिश्रुतीनामानिर्णायकत्वं स्यादित्यत आह—**वामने चेति** । भगवन्नामत्वाविशेषाद्रुद्रादिनामवन्नारायणादिनाम्नामपि रुद्रादौ वृत्तिः किं न स्यात् इत्यत आह—**स्कान्दे चेति** । यद्येवं रुद्रादिशब्दा विष्ण्वेकपरास्तर्हि किमुच्यते भस्मधरोग्रत्वादीनां तच्छब्दत्वम् । विष्णुदत्तत्वाभिप्रायेणेति चेत्तर्हि रुद्रादिशब्दा अपि तादृशा इति न कथं तैर्निर्णय इत्यत आह—**चतुर्मुख इति** ॥ ३ ॥

## ओम् प्राणभृच्च ओम् ॥ ४ ॥

एतैरेव हेतुभिर्न जीवो वायुश्च, "अजायमानो बहुधा विजायते" इति तस्यैव बहुधा जन्मोक्तेः ॥ ४ ॥

## ओम् भेदव्यपदेशात् ओम् ॥ ५ ॥

न चैक्यं वाच्यं, "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानं" इति भेदव्यपदेशात् ॥ ५ ॥

तत्त्वप्रकाशिका

उक्तप्राप्त्या जीववायू किमत्र वाच्यौ न स्यातामित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—**प्राणभृच्चेति**। चशब्दात्प्रागुक्तहेतूनां नञश्च समाकर्षः। आत्मशब्दो मुक्तोपसृप्यत्वमतच्छब्दस्तत्प्रापकश्रुतीनां विष्णुपरत्वमित्युक्तहेतवः। ननु "वायुना वै गौतम" इत्यादिश्रुतेर्विष्णुपरत्वेन वायुसाधकत्वाभावेऽपि बहुधा जन्मलिङ्गेन जीवोऽत्र वाच्यः किं न स्यादित्यत आह—**अजायमान इति** ॥ ४ ॥

ननु किं जीवलिङ्गस्य विष्णुपरत्वप्रतिपादनायासेन, जीवस्यैव द्युभ्वाद्यायतनत्वं किं न स्यात्। न चोक्तहेतुविरोधः, जीवेशाभेदाभिप्रायेण जीवेऽप्यात्मशब्दाद्युक्तिसम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—**भेदेति**। नैक्याभिप्रायेण जीव एवात्मशब्दादिप्रयोगोऽत्रेति वाच्यम्, अत्रैव "अन्यमीशं" इति जीवेशभेदव्यपदेशादित्यर्थः ॥ ५ ॥

## ओम् प्रकरणात् ओम् ॥ ६ ॥

"द्वे विद्ये वेदितव्ये" इति तस्य ह्येतत्प्रकरणम् ॥ ६ ॥

## ओम् स्थित्यदनाभ्यां च ओम् ॥ ७ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तत्त्वप्रकाशिका

नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते, न परमात्मनोऽतो न तयोर्भेद इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—**प्रकरणादिति**। नात्र जीवपरमात्मभेदोक्त्यभावः, ईशशब्देनैव परमात्मोक्तेः। तदेव कुतः, "द्वे विद्ये वेदितव्ये" इति पराविद्याविषयवस्तुनोऽत्रारभ्याधीतत्वेनास्य विष्णुप्रकरणत्वादिति भावः ॥ ६ ॥

न जीवेशाभेदोऽत्र प्रकरणे विवक्षित इत्येतमर्थं हेत्वन्तरेण साधयत्सूत्रमुपन्यस्य व्याचष्टे—**स्थितीति**। संयुक्तौ सखायौ द्वौ सुपर्णरूपौ जीवेशौ देहाख्यं पिप्पलमालिलिङ्गतुः। तयोः सुपर्णयोर्मध्येऽन्यो जीवोऽश्वत्थफलरूपं देहजनितकर्मफलमस्वाद्वेव स्वादुत्वेनात्ति। अन्य ईश्वरः तदनश्नन्नभितः प्रकाशते, न तु स्वस्थित्यै तदपेक्षत इति जीवेशयोः कर्मफलोपजीवनतद्रहितावस्थानाभ्यामुक्ताभ्यां च नैक्यं वाच्यमित्यर्थः। अत्र श्रुतिक्रमोल्लङ्घनमीश्वरस्य प्राधान्यज्ञापनार्थम्। स्थितिपदस्याल्पाक्षरत्वाच्च। व्यावहारिकभेदः श्रौतोऽत्रोच्यत इति चेत्, व्यावहारिक इति सत्यो मिथ्या वा। आद्ये किमनिष्टम्। न द्वितीयः, मिथ्याभिधायकत्वेऽतत्त्वावेदकत्वेन श्रुतेरप्रामाण्यापातात्। तत्त्वावेदकत्वलक्षणप्रामाण्याभावेऽपि

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥
इतीशजीवयोः स्थिसदनोक्तेः ॥ ७ ॥

तत्त्वप्रकाशिका

व्यावहारिकं तदस्तीति चेन्न, तत्त्वाविषयत्वे प्रामाण्यवाचोयुक्तेरयुक्तत्वात् । मिथ्याभेदानुवादित्वान्न दोष इति चेन्न, वैयर्थ्यात् । निषेधायेति चेन्न, तदभावात् । "तत्त्वमसि" इत्यादिनिषेधोऽस्तीति चेत्, तदनुवादेनायमेव निषेधः किं न स्यात् । अद्वैतस्य प्रमाणान्तरेणासिद्धेर्न तदनुवाद इति चेत्, तत्किं निषेधाय प्रमाणप्राप्त्या भाव्यम्, प्राप्तिमात्रेण वा । आद्ये निषेधायोगः । द्वितीयेऽस्त्यद्वैतेऽपि तादृशी प्राप्तिः । जीवेशयोः प्रमाणं विनाऽसिद्धेः कथं तदभेदस्य कथञ्चित् प्राप्तिरिति चेत्, समं भेदेऽपि । कुतश्चैतच्छ्रुतेर्मिथ्याभेदवादित्वं सिद्धम् । जीवेशभेदस्य मिथ्यात्वादेवेति चेत्, तदेव कुतः । न हि भेदमिथ्यात्वे प्रत्यक्षमस्ति । न चानुमानं श्रुतिसिद्धार्थबाधकम्, स्वस्यैव तद्विरोधेनाप्रामाण्यात् । श्रुतेर्भेदमात्रपरत्वादनुमानस्य च तद्भेदस्यैव मिथ्यात्वे प्रवृत्तत्वेन भिन्नविषयत्वान्न विरोध इति चेत्, तर्हि प्रत्यक्षस्यौष्ण्यमात्रविषयत्वादनुमानस्य च तदौष्ण्यस्यैव मिथ्यात्वसाधकत्वेन भिन्नविषयत्वमिति बाधोच्छेदः स्यात् । न चागमेन भेदमिथ्यात्वसिद्धिः, तदभावादेव । न च तत्सत्यत्वे मानाभावः, स्वरूपाभिधायकस्यैव सत्यत्वे प्रामाण्यात् । अन्यथा तस्य वैयर्थ्यात् । अतो न मिथ्याभेदपरत्वं श्रुतेरित्यलम् । तस्माद्विष्णुरेव द्युभ्वाद्यायतनं परविद्याविषयश्चेति सिद्धम् ॥ ७ ॥

चन्द्रिका

श्रीगुरुभ्यो नमः। हरिः। ओम्.

## ॥ ओम् द्युभ्वाद्यायतनं स्वशब्दात् ओम् ॥

अत्र—

मा भूदन्यैकगतता ब्रह्मैकगतताऽपि वा।
किन्तूभयगतत्वं स्यादिति शङ्का निरस्यते॥

पादद्वयापादितोभयप्रसिद्धीनां, स्वतस्सिद्धोभयप्रसिद्धीनां चोभयपरत्वमेव, न तु ब्रह्मैकपरतेति शङ्काऽत्र निरस्यते।

प्रकाशः

## ॥ ओम् द्युभ्वाद्यायतनं स्वशब्दात् ओम् ॥

अस्य पादस्यैतदध्यायान्तर्भावसङ्गतेः समन्वयपरत्वादेव सिद्धेः पूर्वपादद्वयेन सङ्गतिं वक्तुं, सर्वनामलिङ्गानां पादद्वयेनैव विष्णौ समन्वितत्वान्नामलिङ्गेभ्योऽन्यस्याभावाद्व्यर्थोऽयं पाद इत्यतः पादफलमाह—**अत्रेति**। अस्य 'इति शङ्का निरस्यते' इति श्लोकगतेनान्वयः। पूर्वं द्विपाद्यां लोकतोऽन्यत्रप्रसिद्धानामशेषनाम्नामशेषलिङ्गानां अन्यैकगतत्वमाशङ्क्य न्यायैर्ब्रह्मगतत्वमुक्तम्। एवं तर्हि लोकप्रसिद्धिन्याययो*रुभयोरनुग्रहायोभयत्र वृत्तिरस्त्विति शङ्का पादद्वयानन्तरमेवोदेतीति साऽत्र पादे निरस्यते। तथा च श्रोत्राकाङ्क्षितत्वैव सङ्गतिरिति भावः। केषामित्याकाङ्क्षां पूरयन् श्लोकं व्याचष्टे—**पादद्वयेति**। 'नामलिङ्गात्मकशब्दानां' इति शेषः। पादद्वयोक्तन्यायैरापादितोभयप्रसिद्धिकानामित्यर्थः। यद्यपि प्रागुक्तन्यायैर्ब्रह्म-

* 'लोकन्याययोः' इत्येव केषुचित्पुस्तकेषु पाठः.

प्रकाशः

ण्येव प्रसिद्धिः सम्पाद्यते, न त्वन्यत्रापि, अन्यत्र तु सा लोकत एव। तथाऽपि लोकतोऽन्यत्र प्रसिद्धौ सत्यां यत्नेन ब्रह्मणि तस्यामुक्तायामुभयत्रैव साऽऽपादिता भवतीति भावेनोभयेत्युक्तम्। एतेन, प्रागेवान्यगतत्वनिरासस्य "नेतरोऽनुपपत्तेः" "अनुपपत्तेस्तु न शारीरः" "अनवस्थितेरसम्भवाच्च नेतरः" "न च स्मार्तमतद्धर्माभिलापात्" इत्यादिना कृतत्वान्नैतच्छङ्कावकाश इति निरस्तम्। "नेतरः" इत्यादिना शब्दानामन्यत्र तात्पर्याभावमात्रोक्तावपि शक्तेरनिरासेनोभयत्र शक्तिः स्यादिति वा, येषामुभयगतत्वेऽनुपपत्त्यादेः स्फुटप्रतिभासस्तदन्येषां पादद्वयापादितोभयप्रसिद्धिकानां उभयपरत्वमेवेति वा शङ्कोदयादिति तृतीये सुधायामेव व्यक्तत्वादिति भावः। न केवलं त एव, पुनरन्येऽपीत्याह—**स्वत इति**। श्रुत्यादिसाम्येन वा, प्रवृत्तिनिमित्तादिसाम्येन वेत्यर्थः। "सर्वत्र" इति नयोक्तदिशा पूर्वं शब्दानां ब्रह्मणि तात्पर्यमेवावधारितं, न तु शक्तिरपीति पक्षमुपेत्योक्तम्—**उभयपरत्वमेव न तु ब्रह्मैकपरतेति**। एतेन, ब्रह्मपरत्वस्य पूर्वन्यायेनैव सिद्धेः किमनेन पादेनेति शङ्का प्रत्युक्ता। ब्रह्मपरतामात्रसिद्धावपि, "तत्तु समन्वयात्" इत्युक्तावधारणानुपपत्तिशङ्कायां तत्समर्थनार्थत्वादयं पादः सफल इति तात्पर्यात्। एतेन, "हरौ तदितरत्र च श्रुत्यादिप्रसिद्धनामलिङ्गात्मकशब्दानां विष्ण्वेकवाचित्वं प्रबलहेतुभिः प्रतिपादयत्यस्मिन् पादे" इति टीका फलोक्तिमुखेन विवृता। तत्र वाचित्वोक्तावपि

चन्द्रिका

स्पष्टयिष्यते चैतत् "कम्पनात्" इत्यत्र । तदुक्तमनुव्याख्याने—

आहोभयगतत्वं च स्यादतो लिङ्गशब्दयोः ।
इति संशयनुत्त्यर्थमुभयत्र प्रतीतितः ॥
शब्दानां वर्तमानानां सलिङ्गानां विशेषतः ।
समन्वयो हराविव यन्नैवान्यत्र मुख्यतः ॥

इति ।

प्रकाशः

इह परत्वोक्तिः तदेकवाचित्वतदेकपरत्वयोर्द्वयोरप्याक्षेपायेत्याहुः । आपादितोभयप्रसिद्धिकाः के शब्दाः, कथञ्च सा तेषां, पूर्वोक्तन्याय-लोकप्रयोगाभ्यां उभयप्रसिद्धिकत्वे पूर्वत्रापि प्रतिनयमेवं सुवचत्वात्, ब्रह्मलिङ्गादिरूपन्यायस्य लोकप्रसिद्धेश्च प्रत्युदाहरणं भावादित्यत आह—**स्पष्टयिष्यते** **चेति** । भाष्येऽस्फुटत्वादाह—**तदुक्तमिति** । उभयगत्वशङ्का निरस्यतेऽत्र इत्येतत्तृतीयाध्यायस्य तृतीयपादे उक्तमित्यर्थः । 'आह' इत्यस्य 'हराविव' इत्यनन्तरमध्याहृतेनेतिशब्देन 'इत्याह' इति वा, 'ब्रह्मण्येव समन्वयं' इति पूर्वश्लोकस्थेन वाऽन्वयः । अत्र श्लोके तु "इत्याहैवं च शब्दानां" इत्युपरितनानुव्याख्यानस्थितं 'इत्याह' इति पदमाकृष्यान्वयो ज्ञेयः । 'अतः' इत्यस्यान्यत्रप्रसिद्धानामशेषनामलिङ्गात्मकशब्दानां द्विपाद्यां भगवत्परत्वसमर्थनाद्धेतोरित्यर्थः । लोकतोऽन्यत्र प्रसिद्धेश्चोभयान्यथानुपपत्त्या उभयगतत्वं स्यात् 'इति संशयनुत्त्यर्थं' इति श-

चन्द्रिका

अत्रानुव्याख्याने—

लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ॥

इति एतत्पादीयाधिकरणार्थः सङ्गृहीतः ।

८

प्रकाशः

ङ्कानिवृत्त्यर्थमिति सुधोक्तोऽर्थ उपलक्षणं, किन्तु श्रुत्यन्तरसाधारण्यप्रवृत्तिनिमित्तादिसाधारण्यादित इत्यप्यतश्शब्दार्थ इति भावः । अन्यथोक्तेऽर्थे सर्वत्र नायं संवादस्स्यादिति ज्ञेयम् । कथमियं शङ्काऽत्र पादे परिहृता इत्यत उक्तं—**उभयत्रेति** । हरौ तदन्यत्र च प्रतीतितः पूर्वोक्तन्यायलोकप्रसिद्धिभ्यां वा, श्रुत्यन्तरादिसाधारण्यबलेन वोत्पन्नसाधारण्यप्रतीतितो वर्तमानानां, न तु वस्तुत उभयत्र प्रवर्तमानानामित्यर्थः । 'सलिङ्गानां शब्दानां' नाम्नां लिङ्गानां च हरावेव 'विशेषतः' परममुख्यवृत्त्या तात्पर्येण च समन्वयः इत्याहेत्यन्वय इति प्रागेवावोचाम । कुत इत्यत उक्तं—**यदिति** । 'यत्' यस्मात् 'वर्तन्ते' इति शेषः । 'शब्दा लिङ्गानि च' इत्यग्रेतनेनान्वयः । एतेन, "तत्र चान्यत्र च" इत्यादिभाष्यादौ "आहोभयगतत्वं च" इत्यादित्रिपादीं संयोज्य व्याख्येयेति सूचितम् । एवं पादसङ्गतिमुक्त्वा एतत्पादीयाधिकरणोपाधीननुव्याख्यानोक्तानाह—**अत्रेति** । पाद इत्यर्थः । "एतच्च न्यायविवरणे स्वयमेवाचार्येण व्याख्यातमिति तत्रैवावगन्तव्यम्" इति सुधायामुक्त-

चन्द्रिका

अत्र "द्युभ्वादि" इत्यत्र सर्वाधारत्वलिङ्गं, भूमाक्षराधिकरणयोर्भूमाक्षरनामनी, "ईक्षति" इत्यत्र सृष्टिस्थानं, "दहरे" इत्यत्र हृत्पद्मस्थत्वलिङ्गं, "अनुकृतेः" इत्यत्रानुकूल्येन गृह्यमाणत्वलिङ्गं, पुनरपि "शब्दात्" "कम्पनात्" "ज्योतिः" "आकाशः" इति चतुर्ष्वधिकरणेषु क्रमेण ईशानवज्रज्योतिराकाशशब्दाः, "सुषुप्ति" इत्यत्र स्वप्नादिद्रष्टृत्वलिङ्गं, "पत्यादि" इत्यत्र ब्राह्मणशब्दश्च विचार्यन्त इत्यर्थः। अत्र च लिङ्गवचनविपरिणामेन सर्वविशेषणेन साधारणशब्देन

प्रकाशः

त्वात् न्यायविवरणरीत्या स्वयं व्याचष्टे—**अत्रेत्यादिना**। श्लोकोक्ताधिकरणार्थेषु विवेकः प्रदर्श्यत इत्यर्थः। **लिङ्गमिति**। यद्यप्यत्र लिङ्गानि द्युलोकाद्याधारत्वादीनि बहूनि, "अत्रोक्तानां लिङ्गानां" इति न्यायविवरण एवोक्तेः। तथाऽपि "एकवाक्योक्तत्वेनैकवचनम्" इति तत्र टीकायामेवोक्तमिति भावः। 'पुनरपि' इत्यस्य 'शब्दाः' इत्यन्वयः। ते कुत्रेत्यत आह—**शब्दादिति**। "शब्दादेव प्रमितः" "ज्योतिर्दर्शनात्" "आकाशोऽर्थान्तरत्वादिव्यपदेशात्" इत्यत्रेत्यर्थः। **विचार्यन्त इत्यर्थ इति**। एतेन प्रागुक्तटीकावाक्यस्थं 'नामलिङ्गात्मकशब्दानां' इत्येतदिदमत्रेति विशिष्य विवृतं ध्येयम्। अनुव्याख्यानोक्तं स्थानं तु लिङ्गं, सन्नामेति वा, व्याख्यास्यामोऽग्र इति भावः। **लिङ्गेति**। 'साधारणौ' 'साधारणाः' इति विपरिणामेनेत्यर्थः। एतेन,

चन्द्रिका

सर्वेषामुभयत्र प्रसिद्धिः, 'द्विस्थिताः' इत्यनेन तु पूर्वोत्तरपक्षहेतुमत्तोक्तेति भेदः। देवताधिकरणापशूद्राधिकरणयोस्तु समन्वयाध्याये प्रासङ्गिकत्वात्तदर्थौ न सङ्गृहीतः। तदुक्तमनुव्याख्याने—

अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ॥

इति। नन्वन्यत्रप्रसिद्धशरीरित्वसाहित्यादन्तर्यामित्वमिव द्युभ्वाद्यायतनत्वमप्यन्यत्रप्रसिद्धजायमानत्वादिसाहित्यादन्यत्रप्रसिद्धं युक्तम्। न च वाच्यं लिङ्गपादीयन्यायैर्जायमानत्वलिङ्गस्यापि विष्णौ सम्भवेन अन्यत्र प्रसिद्धिर्नेति, तथात्वे तेन पूर्वपक्षोक्त्ययोगादिति चेत्,

प्रकाशः

'विचार्या' इत्यपि विपरिणाम्यत इति सूचितम्। **इति भेद इति**। 'साधारणं' इत्यस्य यथान्वयं विपरिणामेन सर्वत्रानुवृत्तिरिति ज्ञापनार्थमेवान्तेऽपि 'द्विस्थिताः' इत्याहेति न्यायविवरणटीकोपलक्षणमिति भावः। नन्वत्र चतुर्दशाधिकरणानि, उपाधयस्तु द्वादशैवोक्ताः, तत्कथमित्यत आह—**देवतेति**। 'तद्धानिः' शूद्राणामधिकाराभावः। **प्रसङ्गादिति**। तत्रैवैतत्स्पष्टयिष्यते। 'इतीमौ विषयौ' इत्यध्याहारात् 'चिन्तितौ' इति साध्विति सुधायामेवोक्तम्। एतेन, "देवताद्यधिकरणव्यावृत्त्यर्थं प्रायेणेति" इत्येतत्तट्टीकावाक्यं विवृतम्। एतदधिकरणस्यैतत्पादाद्यन्तर्भावोक्तिपरां "तत्र रुद्रो वाव लोकाधारः" इत्यादिटीकां विवरीतुमाक्षिपति—**नन्विति**। "स एषोऽन्तश्चरते बहुधा जायमानः" इत्युक्तेत्यर्थः। **तथात्व इति**।

चन्द्रिका

उच्यते, अन्यत्रप्रसिद्धसाहचर्येण परतोऽन्यत्र प्रसिद्धत्ववत् न्याय-विवरणोदाहृताभ्यः "रुद्रो वै लोकायतनं, लोकाश्च लोकिनश्च विष्णावेवौताश्च" इत्यादिसमाख्याश्रुतिभ्य उभयत्रप्रसिद्धसाहचर्यं विना स्वत उभयत्र प्रसिद्धत्वस्यापि सत्त्वात् तेन रूपेण पादसङ्गतिः। अन्यथा रूपद्वयवतः क्वापि विचारो न स्यात्। अथवा—अन्यत्र प्रसिद्धेरन्यत्रप्रसिद्धान्यसाहित्यसापेक्षत्वात् उभयत्र प्रसिद्धेस्तु तन्निरपेक्षत्वात् निरपेक्षादरात् पादसङ्गतिः।

प्रकाशः

भाष्यादौ तेनैव पूर्वपाक्षितत्वात्। "सर्वत्र" इति नये चन्द्रिकायामन्तराद्यधिकरणेषु तैस्तैर्लिङ्गैर्विष्णुपरतैव व्युत्पादिता, न तु तत्र मुख्यता इत्याद्युक्तदिशा लिङ्गपादन्यायैर्लिङ्गानामशेषाणां विष्णुपरत्वसिद्धावपि मुख्यत्वस्यासिद्धेः, यौगिकजायमानशब्दस्य लिङ्गवाचिनोऽन्यत्रैव मुख्यत्वान्मुख्यार्थत्यागहेतोर्विष्णुलिङ्गस्येहाभावाभिमानेन, भावेऽपि वा कथञ्चिन्नेयत्वाभिमानेन वा पूर्वपक्षोदयसम्भवादिति भावः। टीकायां "रुद्रो वाव लोकाधारः" इति श्रुतिचतुष्टयोक्त्या लिङ्गस्योभयत्रप्रासिद्ध्युक्तेश्चतुर्धा तात्पर्यं श्रुत्याकारोक्तिपूर्वं व्यञ्जयन्नुक्तशङ्कां समाधत्ते—**उच्यत इत्यादिना**। 'श्रुतिभ्यः' इत्यस्य 'स्वत उभयत्र प्रसिद्धत्वस्य' इत्यन्वयः। उक्तरीत्याऽन्यत्रप्रसिद्धत्वसंभवेऽपि "श्रुत्यन्तरादिभिस्तुल्या" इत्युक्तदिशोभयत्रप्रसिद्धत्वांशमादाय पादसङ्गतिरित्यर्थः। **निरपेक्षेति**। "यद्योन्यां तदुत्तरयोर्गायति" इत्यत्र यथोत्तराश-

चन्द्रिका

अर्भकौकस्त्वादिरूपं सर्वगतत्वादिकं तु ब्रह्मणि पूर्वपक्षे कयाऽपि- श्रुत्या नोच्यत इति, न तस्य स्वत उभयत्र प्रसिद्धता । यद्वा— समाख्याश्रुत्यादितौल्याभावोऽप्यन्यत्रप्रसिद्धलक्षणान्तर्गतः । स चेह नास्ति, अन्तर्यामित्वादौ त्वस्ति । ततश्च द्युभ्वाद्यायतनत्वमुभयत्रप्र- सिद्धमेव । यद्वा—सर्वगतत्वादीनि इन्द्राकाशादिशब्दवत् स्वरूपेणै- वान्यत्रप्रसिद्धानि, न त्वन्यत्रप्रसिद्धतत्तत्साहचर्यात्, येन द्युभ्वाद्या- यतनत्वादिकमपि तत्तत्साहचर्यात्तथा स्यात् ।

प्रकाशः

ब्दस्य उत्तराग्रन्थपठितऋगर्थकत्वं, न तूत्तरदेशपठितऋगर्थकत्वं, तस्य पूर्वसापेक्षत्वादुत्तराग्रन्थपठितयोरित्यस्य निरपेक्षत्वात्, तद्वदिति भावः । नन्वेवं निरपेक्षादरे "सर्वत्र प्रसिद्ध" इत्यादावुक्तसर्वगतत्वादेरेव सम्भवेन अन्यसाहित्येनान्यत्रप्रसिद्ध्युक्तिर्न स्यादित्यत आह—**अर्भ- केति**। एवमन्यत्रप्रसिद्धरूपत्वमप्यस्य लिङ्गस्योपेत्य द्वेधा गतिरुक्ता, अधुना तु तथात्वमेवास्य नास्तीति भावेनोत्तरं समाधानद्वयम् । तत्राद्ये,

श्रुत्यादितो लोकतो वाऽपीतरेषु प्रसिद्धता ।

इति यदन्यत्रप्रसिद्धलक्षणमुक्तं, तत्र श्रुत्यादितौल्याभावे सतीति विशेषणं देयमतो न दोष इत्याह—**यद्वेति** । 'श्रुत्यादितः' इति पदस्थाने 'स्वतः' इति पदं प्रक्षिप्य इतरेषु प्रसिद्धत्वं लोकतः स्वत एव वेत्यन्यत्रप्रसिद्धलक्षणं वाच्यं, तच्चेह नास्ति, पूर्वत्रास्तीत्याह—**यद्वा—सर्वगतत्वादीनीति** ।

चन्द्रिका

तथा हि—पूर्णे अभोक्तरि कर्महीने च ब्रह्मणि अर्भकौकस्त्वरूपं सर्वगतत्वं, अत्तृत्वं, कर्मफलभोक्तृत्वं चायुक्तम्। तथा अनित्यक्रियारूपमन्तरत्वमन्तर्यामित्वं चाक्रिये ब्रह्मणि सदा न युक्तम्। तथा दृश्यत्वाद्यभावधर्मवत्त्वं भावरूपे ब्रह्मण्ययुक्तम्, "एवं धर्मान् पृथक्" इति श्रुत्या ब्रह्मणि धर्मधर्मिभेदनिषेधात्। अत एवानुव्याख्याने, तत्र सिद्धान्ते क्रियाया नित्यत्वं भावस्याप्यभावात्मकत्वं च साधितम्। एवं च सर्वगतत्वादीनि ब्रह्मण्ययुक्तत्वादेवान्यत्रप्रसिद्धानि। वैश्वानरशब्दस्त्वग्निपर्यायतयाऽन्यत्रप्रसिद्धः। टीकायां सर्वगतत्वादीनां आदित्यादिश्रुतिसाहचर्यादन्यत्रप्रसिद्ध्युक्तिस्तु, अन्यमात्रे प्रसिद्धेः स्वतस्सिद्धत्वेऽपि आदित्यादिरूपान्यविशेषाभिप्राया। एवमुत्तरत्रापि यथासम्भवं पादसङ्गतिरूह्या।

प्रकाशः

पूर्वोदाहरणानां स्वतोऽन्यत्रप्रसिद्धतामाह—**तथा हीति**। कुत इत्यत उक्तं—**एवं धर्मानिति**। टीकाविरोधमाशङ्क्याह—**टीकायामिति**। **उत्तरत्रेति**। उत्तराधिकरणेषु। 'पादसङ्गतिः' पादान्तर्भावः। भूमनये प्राणाभेदेन प्रतीतस्य भूमनाम्नः "प्राणोऽनूत्क्रामति" इति श्रुतानिरवकाशोत्क्रमणलिङ्गेन, अक्षरनये श्रुत्यन्तरप्रसिद्धचन्द्राद्याधारत्वरूपश्रीतत्त्वलिङ्गेन अक्षरनाम्नः, ईक्षतिनये "बहुस्यां" इति श्रुतविकाररूपलिङ्गेन "सदेव" इति श्रुतसन्नाम्नः, दहरनयादावाकाशश्रुत्यादिना हृत्पद्मस्थत्वादेरन्यत्रप्रसिद्धत्वेऽप्युक्तदिशा चतुर्धाऽन्तर्भा-

चन्द्रिका

पूर्वपादान्त्योत्तरपादाद्ययोश्चाधिकरणयोर्नावान्तरसङ्गत्यपेक्षेत्युक्तम्। यद्वा—पूर्वत्रैवात्राप्यात्मशब्देन सिद्धान्तादातिदेशिकी अवान्तरसङ्गतिः॥

अत्र "यस्मिन् द्यौः" इत्यादिनोक्तं द्युभ्वाद्यायतनत्वं किं

प्रकाशः

वसङ्गतिरूह्येत्यर्थः। समाख्याश्रुतितौल्यस्य सर्वत्रासम्भवात्—**यथासम्भवमित्युक्तम्**। एवं पादान्तर्भावसङ्गत्युक्तिपरटीकां समर्थ्य, इदानीं या तु "श्रुत्यादिसङ्गतिं" इत्यादिकाऽदृश्यत्वनयेनास्य सङ्गत्युक्तिपरभाष्यटीका, सा न युक्तैव, तथात्वे तदानन्तर्यप्रसङ्गेन व्यवधानायोगादिति मन्दाशङ्कां व्युदसितुं, सा फलोक्तिपरा, सङ्गतिपदं च फलपरम्, आनन्दमयनयोक्तदिशा येन केन चित्पूर्वेण सङ्गतिरपेक्षिता न त्वव्यवहितेनेत्येतदाशयं वेति भावेन, पादान्त्याद्यनययोः सङ्गतिनियमबुद्धिं शिष्याणां व्युदसितुमुक्तं स्मारयन्, अस्ति चेन्न त्याज्येति सङ्गतिं चाह—**पूर्वेत्यादिना**। एतेन, यदुक्तं श्रुतप्रकाशे—पूर्वस्मिन्नधिकरणे द्युपृथिव्यादिसम्बन्धिनः परमात्मत्वमुक्तं, द्युपृथिव्यादिसम्बन्धित्वं परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कयैतदारम्भ इति सङ्गतिरिति, तन्निरस्तम्। पूर्वाधिकरणप्रधानहेतुनैव सङ्गतिसम्भवे सम्बन्धसामान्यमुखेन सङ्गत्युक्त्ययोगादिति॥

विषयसंशयटीकां व्यनक्ति—**अत्रेत्यादिना**। "इत्यादिनोक्तं" इत्यनेन "तद्द्युभ्वाद्यायतनत्वं विषयः" इति टीकास्थतच्छब्दार्थः विवृतः। आथर्वणे "द्वे विद्ये वेदितव्ये परा चैवापरा च"

चान्द्रिका

रुद्रादेः किं वा विष्णोरिति चिन्ता ।

प्रकाशः

इत्युपक्रम्य श्रूयते—

"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैषसेतुः ।

अरा इव रथनाभौ संहता यत्र नाड्यः ।

स एषोऽन्तश्चरते बहुधा जायमानः ।

ओमित्येवं ध्यायत आत्मानं स्वस्ति वः पाराय तमसः परस्तात् । यस्सर्वज्ञः सर्ववित्" इत्यादि । तत्र द्युभ्वन्तरिक्षमनःप्राणायतनत्वं विषय इत्यर्थः । सूत्रे यथाश्रुति धर्मिनिर्देशोऽपि, लिङ्गताद्योतनाय यथाटीकं भावान्तनिर्देशः । रुद्रादेरिति । रुद्रप्रधानवायुजीवानामन्यतमस्येत्यर्थः । एतेन 'अन्येषां' इति टीकास्थान्यशब्दार्थो विवृतः । प्रापकप्राबल्याशयेन रुद्रस्य पूर्वं स्वशब्देन च निर्देशः । टीकायां बहुवचनोक्तावप्येकवचनोक्तिः, पूर्वपक्षकोटीनां बहुत्वे कथं लिङ्गस्योभयत्रप्रसिद्धत्वं किन्तु बहुषु प्रसिद्धत्वमेव स्यादित्याशङ्कानिरासाय पूर्वपक्षकोटित्वेन बहूनामेकीकरणादिति भावेनेत्याहुः । अत्र यद्यपि भाष्ये तत्त्वप्रदीपसन्न्यायरत्नावल्योश्च प्रधानकोटेर्द्युभ्वाद्यायतनत्वप्राप्तिर्वा तन्निरासो वा न भाति । तथाऽपि टीकायां "स्वशब्दपर्यायात्मशब्दान्न प्रकृतिजीवावभिधीयेते" इति विष्णुतत्त्वनिर्णयोक्त्यनुरोधेन प्रधानकोटे-

चन्द्रिका

तदर्थमात्मशब्दादयः किं गौणाः किं वा मुख्या इति। तदर्थं तेषां मुख्यत्वे बाधकमस्ति उत नेति। तदर्थं जायमानत्वं किं विष्णोर्न युक्तमुत युक्तमिति। तदर्थं किं शरीरग्रहणादिकमेव जननं किं वा प्रादुर्भावोऽपीति॥

प्रकाशः

रप्युक्तेः तदनुरोधेनात्राप्यादिपदेन तदुक्तिः। एवं द्युभ्वाद्यायतनं नानुमानं प्राणभृच्चेति प्रतिज्ञांशोपयुक्तचिन्तामुक्त्वा, 'स्वशब्दात्' 'मुक्तोपसृप्यव्यपदेशात्' इति हेत्वंशव्यावर्त्यशङ्कोपयुक्तचिन्तामाह—**आत्मशब्दादय इति।** आदिपदेनामृतसेतुत्वरूपमुक्तोपसृप्यत्वलिङ्ग-ब्रह्मप्रकरण "तमेवैकं जानथ" इत्यादिवाक्योक्ताहेयत्वोक्ति-हेयत्वा-नुक्त्यन्यहेयत्वोक्तयो वा, लिङ्ग-प्रकरण-समाख्या एव वा ग्राह्याः। "अतच्छब्दात्" इति हेत्वंशव्यावर्त्यशङ्कोपयुक्तचिन्तामाह—**तदर्थं बाधकमस्त्युत नेतीत्यादिना। जायमानत्वमिति।** अत्र यद्यपि "रुद्रो वाव लोकाधारः" इत्यादिसमाख्या विष्णौ न युक्ता अथ युक्तेति, तदर्थं समाख्यागतरुद्रादिशब्दा निरवकाशा उत विष्णौ सावकाशा इत्यादिचिन्ताऽप्युपदर्शनीया। तथाऽपि रुद्रसमाख्यायाः टीकोक्तरीत्या वक्ष्यमाणदिशा च बलवत्त्वेऽपि इतरसमाख्ययोर्विष्णुसमाख्याप्रतिरोधेन जायमानत्वलिङ्गेनैव तयोरुज्जीवनाद्वा, प्राकरणिकबाधकोपदर्शनं कार्यमित्याशयाद्वा, उपलक्षणत्वाद्वा जायमानत्वकोटिकचिन्तैवोक्ता। यदि शरीरग्रहणमेव जननं, तस्याशरीरे

प्रकाशः

विष्णावयोगात् बाधकादात्मशब्दादीनां गौणत्वात्समाख्यादिबलेन रुद्रादिरेवेति पूर्वपक्षे फलं, यदि विपरीतं, तदा विष्णुरिति सिद्धान्ते फलमिति स्पष्टः फलफलिभाव इति भावः । यद्यपि टीकायां जायमानत्वबाधकेनात्मशब्दस्यैवामुख्यत्वमाशङ्कितं, न तु मुक्तोपसृप्यत्वादेः, प्रत्युत तेनैवात्मशब्दस्य मुख्यत्वमुक्तं मुक्तोपसृप्यसूत्रे । तथाऽपीह श्रुतेर्विष्णौ मुख्याया अपि जीवलिङ्गेनामुख्यत्वशङ्कायां तुल्यन्यायतया लिङ्गस्यापि सा भवत्येवेत्याशयेन जायमानत्वलिङ्गेन आत्मशब्दादयो गौणा इति बहुवचनोक्तिः । टीकायां तु मुक्तोपसृप्यसूत्रे चशब्दाभावात्तत्स्वारस्याय तथोक्तिरिति भावः । अत्र यद्यपि च विष्णोरिति चिन्तानन्तरं, तदर्थमात्मशब्दादिकं रुद्रादिजीवे नेतुं शक्यमुताशक्यमिति चिन्ता, तदर्थमत्र प्रकरणे निरवकाशजीवविष्णुप्रापकबलेन तयोरभेद आश्रयितुं शक्य उताशक्य इति चिन्ता, तदर्थं "अन्यमीशं" इत्यादिभेदाद्युक्तिर्जीवविष्णुनिष्ठा अथ नेति चिन्ता, तदर्थमीशशब्दः किं विष्णवन्ययत्किंचित्परः उत प्रकरणबलाद्विष्णुपर एवेति भेदादिसूत्रव्यावर्त्यशङ्कोपयुक्तचिन्तापरम्पराऽपि वाच्या । तथाऽपि स्पष्टत्वाद्वा, सूत्रक्रमे वक्ष्यमाणप्रकारेणाभेदशङ्काया रुद्रादिकोटिचतुष्टयसाधारण्याभावाद्वा, साऽपि शङ्का जायमानत्वरूपजीवलिङ्गनिरवकाशत्वप्रयुक्तैवेति तन्निरवकाशत्वादिचिन्तोक्त्यैवोक्तप्रायेति वा नोक्ता । यद्वा—'आत्मशब्दादयः किं गौणाः'

चन्द्रिका

पूर्वपक्षस्तु—द्युभ्वाद्यायतनं रुद्रः, प्रधानं, वायुः, जीवो वा, "रुद्रो वाव लोकाधारः, प्राणानां ग्रन्थिरसि रुद्र" "भूतं च भवच्च भविष्यच्चेत्याचक्षते । आकाश एव तदोतं च प्रोतं च"

प्रकाशः

इत्यस्य जीवाभेदेन नेया इत्यप्यर्थः, "जीवेशाभेदेन ब्रह्मगतलिङ्गस्य जीवे सम्भवात्" इति टीकोक्तेः । तथाच साऽपि चिन्तोक्तैवेति ॥

"द्युभ्वाद्यायतनत्वं रुद्रप्रधानजीववायूनां इति पूर्वः पक्षः" इत्यादिटीकां विवृण्वन् समाख्यात्रयेण जायमानत्वरूपलिङ्गेन च कोटिचतुष्टयपूर्वपक्षानाह—द्युभ्वाद्यायतनं रुद्र इत्यादिना । यथासूत्रमयं निर्देशः । बहूपपादनत्वाज्जीवस्यान्ते निर्देशः । "रुद्रो वाव" इति वाक्यं रुद्रस्य द्युभ्वाद्यायतनत्वे, "प्राणानां" इति वाक्यं रुद्रस्य प्राणाधारत्वे । टीकायां, भाष्ये साक्षादुपात्तस्य "प्राणानां" इति वाक्यस्य पूर्वमादिपदोपात्तस्यान्यत्र साक्षादुक्तस्य तु पश्चादुक्तावपि, विषयवाक्ये क्रमोपात्तलिङ्गोपपादनसौकर्याय "रुद्रो वाव" इत्यस्यैवात्र पूर्वमुक्तिः । तावतैव पूर्तौ द्वितीयवाक्यस्याप्युक्तिः भाष्योपात्तत्वाद्वा, तत्र बहुरुद्रश्रुतिलिङ्गसत्त्वेन विष्णुसमाख्यातः प्राबल्योपपादनाय वेति ज्ञेयम् । तत्र 'रुद्र' इति सम्बुद्ध्यन्तपाठः साधुः । द्वितीये "तदभिध्यानादेव तु" इत्यत्र टीकायां 'रुद्र त्वं प्राणानामाश्रयोऽन्तकश्चासि । स त्वं मामाविश' इति व्याख्यानात् । 'तत्' भूतभवदादिकमाकाशशब्दिते प्रधाने ओतमित्यर्थः । तच्छब्दपरामर्शद्योतनाय "भूतं"

चन्द्रिका

"वायुना वै गौतम सूत्रेणायं च लोकः परश्चलोकः सर्वाणि च भूतानि सन्दृब्धानि" इत्यादिसमाख्यानात् । जायमानत्वरूपजीवलिङ्गाच्च । न च "लोकाश्च लोकिनश्च विष्णाविवौताश्च प्रोताश्च" इति विष्णावपि समाख्याऽस्तीति वाच्यं, रुद्रसमाख्यायां "प्राणानां

प्रकाश

इत्यादिपूर्ववाक्योक्तिः । आकाशशब्दस्याक्षरनये प्रधानपरत्वं व्युदस्य चित्प्रकृतिपरत्वोक्तावपि इह पूर्वपक्षी तत्रत्यपूर्वपक्षन्यायेन प्रधानपरत्वमेव मन्यत इति यथाटीकमत्र प्रधानपरतया "भूतं" इत्यादिवाक्योक्तिर्युक्ता । **सूत्रेणेति** । स्यूतमस्मिन् जगदिति व्युत्पत्त्या जगदाधारेण वायुना, 'सन्दृब्धानि' सङ्गतानि तदाधारतयाऽवस्थितानीत्यर्थः । अत्र टीकायां "विष्णौ द्युभ्वाद्यायतनत्वप्रसिद्धावपि" इत्यादिना विष्णुसमाख्यामाशङ्क्य बहुधाजन्मबाध उक्तः । तत्रान्यत्रोक्तश्रुतिलिङ्गबाहुल्येन प्रबलरुद्रसमाख्याबाधोऽपि वाच्य इति भावेन शङ्कोत्तरे वक्ति—**न च लोकाश्च लोकिनश्चेति** । "सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावेवौताश्च प्रोताश्च" इति विष्णुसमाख्याऽस्तीत्यर्थः । तथा च तद्बलाद्विष्णुविषयत्वमपीति भावः । 'प्राणाः' इन्द्रियाणि, 'प्राणिनः' देहिनः, दिवि भवानि 'दिव्यानि' कल्पतरुप्रभृतीनि वस्तूनि, 'लोकाः' भूरादयः, तदभिमानिनो 'लोकिनः', 'अलोकाः' वैकुण्ठादयः, 'अ-

चन्द्रिका

ग्रन्थिरसि रुद्र" "प्राणेश्वरः कृत्तिवासाः पिनाकी" "रुद्रो वाच लोकाधारः" इति बहुरुद्रश्रुतिलिङ्गसद्भावात्। एतदेवाभिप्रेत्योक्तं अनुव्याख्याने—"बाहुल्यं लिङ्गशब्दानां" इति। "विष्णौ द्युभ्वाद्यायतनत्वप्रसिद्धावपि" इत्यादिटीकायां विष्णुसमाख्याबाधार्थं जायमानत्वलिङ्गोक्तिस्तु विष्णुसमाख्यातो रुद्रसमाख्याया बलवत्त्वेऽपि, वाय्वादिसमाख्यायाः प्राबल्याभावात्।

प्रकाशः

लोकिनः' तद्गता मुक्ता इत्यर्थः। **उक्तमिति**। एतत्पादीयाधिकरणपूर्वपक्षन्यायसंग्रहे उक्तमित्यर्थः। टीकावाक्यविरोधमाशङ्क्याह—**विष्णाविति**। **जायमानत्वेति**। एतेन टीकायां 'बहुधाजन्म' इत्युक्तावपि जन्मरूपलिङ्ग एव तात्पर्यं, अनेकजडाद्यात्मना बहुजननस्य ईक्षतिनये निरस्यत्वात्, जन्मलिङ्गेनैव विवक्षितसिद्धेश्च 'बहुधा' इत्युक्तेरभ्युच्चयत्वेनोपपत्तेरिति भावः। एतेन रुद्रसमाख्यायाः प्राबल्येन विष्णुसमाख्यया प्रतिहत्यभाववद्वाय्वादिसमाख्यायाः जायमानत्वलिङ्गबलेनाप्रतिहतत्वं टीकोक्तरीत्योपपाद्यमित्युक्तं भवति। वक्ष्यति च—"एवं पूर्वपक्षान्तरमपि" इत्यादि। लिङ्गनिरवकाशत्वं चाग्रे व्यक्तम्। नन्वेवं टीकायां "विष्णौ द्युभ्वायतनत्वप्रसिद्धावपि" इत्यादिना समाख्याबलेन विष्णौ द्युभ्वायतनत्वमाशङ्क्य जायमानत्वलिङ्गेन तद्बाधो न वाच्यः, अपि तूक्तादिशा प्रबलया रुद्रसमाख्याया विष्णुसमाख्यायां दूरीकृतायां अप्रतिहतया वाय्वादिसमाख्यया वाय्वादिप्राप्ति-

प्रकाशः

रित्येव समाधानं वाच्यम् । न च विष्णुसमाख्येव वाय्वादिसमाख्याऽपि बलवद्रुद्रसमाख्यया व्युदस्ता सती नात्र वाय्वादिप्रापिकेति वाच्यं, तथात्वे जन्मलिङ्गेन विष्णुसमाख्याबाधपक्षेऽपि तेनाप्रतिहतबलवत्या रुद्रसमाख्यया वाय्वादिसमाख्याबाधेन तयोरत्राप्राप्तेः। तस्माद्रुद्रसमाख्याया अपि सावकाशत्वोपपादनेन रुद्रादिसमाख्यात्रयस्यापि विष्णुसमाख्यया समाख्यात्वेन तुल्यबलत्वात्, रुद्रादिसमाख्यास्वन्यतमयाऽपि विष्णुसमाख्यानिरासायोगात्, जन्मरूपलिङ्गेन विष्णौ निरवकाशेन बाधितया विष्णुसमाख्ययाऽत्र विष्णोर्द्युभ्वाद्यायतनत्वाप्राप्तौ, रुद्रादौ योग्येन जन्मलिङ्गेनाबाधादविशेषितबलाबलेन समाख्यात्रयेण तुल्यबलेन रुद्रादिकोटित्रयस्य, जन्मलिङ्गेन जीवमात्रासाधारणेन जीवकोटेश्च द्युभ्वाद्यायतनत्वप्राप्तिरिति वक्तव्यम्। एवञ्च टीकायां जन्मलिङ्गेन विष्णुसमाख्याबाधोक्तिः स्वरसा भवतीति चेन्नैवं, अन्तकत्वादिलिङ्गेन रुद्रसमाख्याया निरवकाशत्वोक्तिपरपूर्वतनटीकावाक्यविरोधात् । "बाहुल्यं लिङ्गशब्दानां" इत्यनुभाष्यविरोधात् । "समाख्याऽपि निरवकाशा" इत्यग्रे वक्ष्यमाणदिशा सावकाशत्वासम्भवाच्च । कथं तर्हि प्रकृतिवाय्वोः प्राप्तिः । रुद्रसमाख्याऽज्ञानिन इत्यस्तु । न ह्येक एवात्र पूर्वपक्षीति नियामकमस्ति, द्वितीयाद्यस्मृत्यधिकरणादाविव अनेकेषां पूर्ववादित्वोपपत्तेरिति । नन्वेवमपि रुद्रसमाख्यया विष्णुसमाख्याबाधेऽपि, प्राकरणिकविष्णुप्रापकबहुबाधायोगात्सावकाशत्वाच्च तस्या इति समाख्यया

चान्द्रिका

ननु तथाऽपि "द्वे विद्ये वेदितव्ये" इति विष्णुप्रकरणेन, "अमृतस्यैष सेतुः" इति मुक्तोपसृप्यत्वविष्णुलिङ्गेन च रुद्रादिसमाख्याया बाधः। मुक्तोपसृप्यत्वादेश्च विष्णुलिङ्गत्वं "तन्निष्ठस्य मोक्षोपदे-

प्रकाशः

पूर्वपक्षमाक्षिपति—**नन्विति।** **विष्णुप्रकरणेनेति।** यद्यपि टीकायां "परविद्याविषयत्वलिङ्गात् विष्णुरिति चेत्" इत्युक्तं, तथाऽपि लिङ्गस्योपक्रमे श्रुतत्वात्तत्र श्रुतलिङ्गस्य च "श्रुतिलिङ्गवाक्यानामुपक्रमोपसंहारयोः श्रुतत्वेन तन्निश्चायकतया लिङ्गत्वम्" इति "शब्दादेव" इतिसूत्रटीकोक्तरीत्या प्रकरणनिश्चायकत्वेन, तल्लिङ्गोपेतोपक्रमवतस्तत्प्रकरणत्वेन "प्रकरणात्" इति सूत्रानुसारात् 'प्रकरणेन' इत्युक्तम्। अत एव "प्रकरणात्" इत्यत्र टीका"—"द्वे विद्ये वेदितव्ये" इति परविद्याविषयवस्तुनोऽत्रारम्याधीनत्वेनास्य विष्णुप्रकरणत्वात्" इति। **बाधइति।** यथा चतुर्थे "आत्मा प्रकरणात्" इत्यत्र प्रकरणेन समाख्याया बाधः, तद्वत्। तत्र हि "य आत्माऽपहतपाप्मा" इत्यादिप्रकरणेन "स तेजसि सूर्ये सम्पन्नः" इति समाख्याया बाधेन "परं ज्योतिरुपसम्पद्य" इति श्रुतज्योतिषो विष्णुत्वमुच्यते। यथा च दहरनये लिङ्गेन समाख्याया बाधस्तद्वत्। तत्र ह्यपहतपाप्मत्वादिलिङ्गेन "तस्यान्ते सुषिरं सूक्ष्मं" इत्यादिसमाख्याया बाधेन सर्वाधारतया हृत्पद्मस्थत्वं विष्णोरेव न त्वाकाशादेरित्युच्यते। 'आदेश्च' इत्यादिपदेन प्रकरणम्। लिङ्गत्वं

चन्द्रिका

शात्" "अस्मिन्नस्य च तद्योगं शास्ति" इत्यादिसूत्रसिद्धम्। लिङ्गप्रकरणे च समाख्यातो बलवती। न च समाख्या निरवकाशा, अन्तरधिकरणन्यायेन रुद्रादिशब्दानां, "शास्त्रदृष्ट्या" इति न्यायेन पिनाकित्वादिलिङ्गानां च विष्णौ सावकाशत्वात्। न च "स एषोऽन्तश्चरते बहुधा जायमानः" इति जायमानत्वादिलिङ्गविरोधः, "तमेवैकं जानथ आत्मानं" इत्यात्मश्रुत्या तद्बाधात्। आत्मशब्दस्य विष्ण्वेकनिष्ठत्वं च "गौणश्चेन्नात्मशब्दात्" "साधारणशब्दविशेषात्" इतिसूत्रसिद्धम्। जायमानत्वस्य ब्रह्मणि सावकाशत्वं च,

क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः।

प्रकाशः

नाम ज्ञापकत्वम्। यद्वा—परविद्याविषयत्वमादिपदार्थः। 'इत्यादि' इत्यादिपदेन "अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यादिसूत्रं गृह्यते। **बलवती इति**। "शब्दादेव" इत्यत्र तद्बीजोक्त्या व्युत्पादयिष्यमाणत्वादिति भावः। ननु "आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इति न्यायेन समाख्यया बाधः किं न स्यादिति भावेनाशङ्क्यानर्थक्यं नेत्याह—**न चेति**। **अन्तरिति**। अयं न्यायः प्राक् तत्रतत्र विवृतः। "शास्त्रदृष्ट्या" इति न्यायोऽपि। **जायमानत्वादीति**। मनःप्राणाधारत्वमादिपदार्थः। लिङ्गं निरवकाशमित्यत आह—**जायमानत्वस्येति**।

चन्द्रिका

इति अनुव्याख्याने आनन्दमयाधिकरणे उक्तत्वात् तत्र, "कारणत्वेन चाकाशादिषु" इत्यत्र च सिद्धमिति । उच्यते, अनुव्याख्याने उक्तिरत्रत्यसिद्धान्तासिद्धजन्यत्वाभिप्राया, न त्वेतत्पूर्वपक्षदशायां जायमानत्वस्य सावकाशता । "कारणत्वेन" इत्यत्र तु एकस्यैव कार्यकारणभावविरोधशङ्कायाः परिहारः, न त्वत्रेवाजस्य

प्रकाशः

**तत्रेति**। आनन्दमयाधिकरण इत्यर्थः। **कारणत्वेन चेति**। चतुर्थपादे "आत्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः" इत्युदाहृत्य आत्मनस्सकाशादाकाशादिषु जनेर्वक्ष्यमाणत्वादिति भावः। यथोक्तं तत्र न्यायविवरणे "व्यक्त्यपेक्षया कार्यत्वम्" इति। अत्र परैरेतच्छङ्कानिरासाय "यस्मिन्द्यौः" इत्यादिकं ब्रह्मप्रकरणे नास्तीति कृत्वा चिन्तयेदमारब्धमित्युक्तम्। कैश्चित्तु—"द्वे विद्ये वेदितव्ये" इत्यादेर्ब्रह्मप्रकरणत्वेऽपि "यस्मिन्" इत्यादिकं जीवलिङ्गाज्जीवप्रकरणमिति प्रकरणभेदमाश्रित्य समाहितम्। तदुभयं वक्ष्यमाणदिशा न युक्तमिति भावेन निरवकाशलिङ्गेन प्रकरणादेः सर्वस्योपमर्देन सर्वमेकमेव प्रकरणं विष्णवन्यपरमिति भाष्यटीकाभिमतं पूर्वपक्षं समर्थयितुमारभते—**उच्यते इति**। यदुक्तं लिङ्गप्रकरणे समाख्यातो बलवती इति। तत्सत्यं, तथाऽपि निरवकाशजीवलिङ्गेन ब्रह्मलिङ्गप्रकरणयोर्नेयत्वात्। न च तदपि सावकाशमित्युक्तमिति वाच्यं, तत्राह—**अनुव्याख्यान इति**। प्रकारान्तरेण जायमानत्वं जीव एवेति,

चन्द्रिका

जन्मविरोधशङ्कायाः। अत एव तत्र टीका—"स्वस्यैव कार्यकारणभावो विरुद्धः" इति, अनुव्याख्यानं च—"विरोधः कार्यतद्धतोः" इति। जननमरणयोश्च सामानाधिकरण्यप्रसिद्धेः, देहत्यागलक्षणमरणस्य चेतन एव सम्भवात्। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति" इति जीवनादियोगिनि चेतने जननश्रवणाच्च। अनादेरपि जीवादेः शरीरग्रहणादिरूपं वा पराधीनविशेषावाप्तिरूपं वा जननमस्ति, ब्रह्मणस्तु तदपि नेति द्वितीयाध्याये वक्ष्यते। "अजायमानो बहुधा विजायते" इति वाक्यं तु जीवविषयम्, स्वरूपेणाजननात्, देहद्वारा च जननात्।

प्रकाशः

प्रादुर्भावरूपमेव जननं जायमानशब्दार्थोऽस्त्वित्यतो वाऽऽह—**जननेति**। 'सम्भवात्' 'श्रवणाच्च' इति हेत्वोः 'न जायमानत्वस्य सावकाशता' इति पूर्वेणान्वयः, तस्यैवात्रानुषङ्गो वा। **जीवनादीति**। सर्वपालके पाल्यमानत्वरूपजीवनायोगादिति भावः। **द्वितीयेति**। वियत्पादे "ज्ञोऽत एव" इत्यत्र जीवस्यास्तीत्युच्यते, "असम्भवस्तु सतोऽनुपपत्तेः" इत्यत्र ब्रह्मणो नेति वक्ष्यत इत्यर्थः। प्रादुर्भावो न जन्मशब्दार्थ इति भावः। ननु जननं भगवत्यपि श्रुतमित्यत आह—**अजायमान इति**। एतेन "जननमरणयोश्च" इत्यादिग्रन्थेन"—"स एषोऽन्तश्चरते बहुधा जायमानः" इति द्युभ्वाद्यायतने जीवलिङ्गश्रवणाज्जीवस्य तद्युक्तम्" इत्युक्तयुक्ततोपपादिता।

चन्द्रिका

तस्मात् निरवकाशेन भाष्योक्तेन जायमानत्वलिङ्गेन द्युभ्वाद्यायतनं रुद्रादिरेव । अनुव्याख्यानन्यायविवरणयोरुक्ता समाख्याऽपि निरवकाशैव, तत्र विष्णुलिङ्गानामश्रवणेन रुद्रादिशब्दानां अन्तरधिकरणादिन्यायाविषयत्वात् । एवं पूर्वपक्षान्तरमपि टीकोक्तरीत्योपपाद्यम् । आत्मशब्दादिकं तु निरवकाशजायमानत्वलिङ्गानुसारेण जीवादौ कथञ्चिन्नेयमिति ॥

प्रकाशः

'तस्मात्' भगवति जननाभावात् । **निरवकाशेनेति** । "ज्योतिर्दर्शनात्" इत्यत्र "स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः" इति श्रुतजायमानत्वादेर्विष्णवसाधारणज्योतिश्श्रुत्योपक्रमोपसंहाराभ्यामवगतब्रह्मपरवाक्यमध्यस्थतयाऽन्तर्णीतणिच्त्वेन ब्रह्मणि नयनमिति वक्ष्यते, न त्विह तथेति भावः । ननु जीवमात्रप्रापकलिङ्गेन कथं रुद्रादिरेवेत्युक्तिः, प्रापकसमाख्यायाश्च लिङ्गप्रकरणाभ्यां बाधोक्तेरित्यत आह—**अनुव्याख्यानेति** । **एवमिति** । रुद्रजीवपूर्वपक्षवत् प्रधानवायुपूर्वपक्ष इत्यर्थः । प्रधानस्य सर्वोपादानत्वात्सर्वाधारत्वं युक्तं, कापिलस्मृतिसिद्धं च । न च तस्या अप्रामाण्यं, दृष्टफलतद्वाक्यदृष्टान्तेन सर्वाश्रयत्वबोधिन्या अपि प्रामाण्यानुमानात् । वायोश्च प्राणाद्याधारत्वं प्रसिद्धमेवेत्यादिरूपेणोपपाद्यमित्यर्थः । तर्हि श्रुतिलिङ्गप्रकरणानां का गतिरित्यत आह—**आत्मेति** । **कथञ्चिदिति** । जीवेशाभेदादिनेति भावः ॥

चन्द्रिका

सिद्धान्तस्तु—

अचेतनजनेरन्या चेतनस्य जनिर्यथा ।

तथोभयजनेरन्या ब्रह्मणोऽपि जनिर्मता ॥

"अजायमानो बहुधा विजायते" इति ब्रह्मणोऽपि जनेः प्रमितत्वात्, प्रसिद्धाच्चेतनाचेतनजननादन्यैव प्रादुर्भावरूपा ब्रह्मणो जनिरस्तु,

किन्तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ।

प्रकाशः

अत्र निरवकाशजन्मरूपजीवलिङ्गादिना स्वशब्दादिसिद्धान्तहेतूनामन्यथानयनात्तत्सावकाशत्वोक्त्यैव स्वशब्दादेः साधकत्वं नान्यथेति भावेन, "अतच्छब्दात्" इति सूत्रखण्डसूचितं"–"अजायमानो बहुधा विजायते" इति तस्यैव बहुधा जन्मोक्तेः" इति भाष्याद्युक्तं जीवलिङ्गसावकाशत्वं तावद्व्यनक्ति—**अचेतनेति** । परिणामरूपजनेरन्या देहयोगरूपेत्यर्थः । "ज्ञोऽत एव" इत्यत्राग्रे स्पष्टेति भावः । चेतनाचेतनजनेः प्रमितत्वात् साऽन्यान्याऽस्तु । न चैवं ब्रह्मणीत्यतः प्रमाणं वदन्नन्येत्युक्तजनिस्वरूपं चाह—**अजायमान इति** । देहादिना जननहीनस्सन् बहुधा नाना मत्स्यकूर्माद्यात्मना प्रादुर्भवतीत्यर्थः । प्रादुर्भावरूपेति कुत इत्यत आह—**किन्त्विति** ।

स्त्रीपुम्मलाभियोगात्मदेहो विष्णुर्न जायते ।

किन्तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ॥

चन्द्रिका

प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।

इत्यादिस्मृतेः । "अजायमानः" इत्यादिवाक्यं च ब्रह्मपरमेव, "तमेवं विद्वानमृत इह भवति" इत्यादितल्लिङ्गात् । पुरुषसूक्तस्थत्वाच्च । एवञ्चात्मश्रुत्याद्यनुसारात् जायमानत्वलिङ्गमेव गौणं नेयं, न तु विपरीतम् । समाख्याऽपि सावकाशा,

प्रकाशः

प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ॥
तथाऽप्यसुरमोहाय परेषां च क्वचित्क्वचित् ।
दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ॥

इत्यादिविष्णुतत्त्वनिर्णयोदाहृतब्रह्माण्डपुराणवचनादित्यर्थः । "प्रत्यक्षत्वं हरेर्जन्म" इत्यादिरादिपदार्थः । ननूक्तं जीवविषयं तद्वाक्यमिति तत्राह—**अजायमान इति** । मुक्तिहेतुज्ञानविषयत्वरूपाल्लिङ्गादित्यर्थः । प्रकरणवशाच्च ब्रह्मपरमेतद्वाक्यमित्याह—**पुरुषसूक्तस्थत्वाच्चेति** । पुरुषसूक्तं च विष्णुपरमिति पूर्वाधिकरणे छन्दोऽधिकरणे च भाष्यादौ समर्थितमिति भावः । अस्त्वेवं जीवलिङ्गं सावकाशं, ततः किमित्यत आह—**एवञ्चेति** । सावकाशत्वे सतीत्यर्थः । **लिङ्गमेवेति** । श्रुत्यादितो लिङ्गमात्रस्य दुर्बलत्वादिति भावः । **गौणमिति** । परिणामरूपजनेरेव मुख्यत्वादिति भावः । **न त्विति** । श्रुत्यादिबहुबाधायोगादिति भावः । लिङ्गस्य सावकाशत्वमुक्त्वा समाख्याया अपि "अतच्छब्दात्" इति सूत्रांशाभिमतमेव तदाह—**समाख्याऽपीति** ।

चन्द्रिका

भाष्योक्तश्रुतिस्मृतिभिः रुद्रादिशब्दानां विष्णावेव मुख्यत्वात् ।

प्रकाशः

"सोऽन्तकः स रुद्रः स प्राणभृत् स प्राणनायकः स ईशो यो हरिः" इत्यादिश्रुत्या,

रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ।

इत्यादिब्रह्माण्डस्मृतिभिर्विष्णावेव मुख्यवृत्त्युक्तेरित्यर्थः । यद्यपि समाख्याश्रुतौ निरवकाशविष्णुलिङ्गाभावेन "अन्तस्तद्धर्मोपदेशात्" इत्युक्तन्यायाविषयत्वं भाति । तथाऽपि

श्रुत्यर्थनिर्णयार्थत्वात्स्मृतेस्तत्र निरूपितः ।
अर्थो ग्राह्यो वेदवाक्ये तदयोगे तु लौकिकः ॥

इति "कम्पनात्" इति सूत्राभिमतवक्ष्यमाणन्यायेन,

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

इति स्मृत्या श्रुत्युपबृंहकेषु "रुजं द्रावयते" इत्यादिस्मृतिवाक्येष्वन्वर्थसंज्ञाकरणस्य श्रुत्यर्थनिर्णयार्थत्वात् । अन्यथा तस्य वैयर्थ्येन निरवकाशतया स्मार्तयोगस्याज्ञरूढितो बलवत्त्वात् "रुजं द्रावयते" इत्यादिस्मृतौ योगमुक्त्वा "वेदेषु सपुराणेषु गीयते" इति प्रयोगबाहुल्यरूपरूढिकथनाच्चाज्ञरूढितो विद्वद्रूढेर्बलवत्ताया यववराहाद्यधिकरणोक्तन्यायैर्निपुणतरं जन्मादिनये प्रतिपादितत्वादिति भावेनोक्तं—मुख्यत्वादिति । तथा च "मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः" इति न्यायेन मुख्यार्थस्य "विदे हि रुद्रो रुद्रियं

चन्द्रिका

मुक्तोपसृप्यत्वादिकं तु निरवकाशमिति भाष्य एवोक्तम् ।

अत्र चाऽऽद्ये सूत्रे विषयवाक्येनातिसन्निहितश्रुतिरूपस्वपक्षसाधकोक्तिः । 'स्वशब्दात्' इत्येतच्च स्वेतिशब्दः स्वशब्द इति विग्रहाश्रयणेन

प्रकाशः

महित्वं" "कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रः" "न मिनन्ति रुद्रः" "रुद्रस्य शिर उत्पिपेष" इत्यादावयोगेऽपि "रुद्रो वाव लोकाधारः" इत्यादिश्रुतिषु रुद्रादिशब्दैर्मुख्यार्थस्य विष्णोरेव गृहीतेः समाख्या न रुद्रादेर्द्युभ्वाद्यायतनत्वप्रापिकेति भावः । एतेन "नन्वत्र रुद्रादिज्ञापकाभावेऽपि "प्राणानां ग्रन्थिरसि"—" इत्यादिटीकाया निष्कृष्टार्थ उक्तो भवति । विष्णुप्रापकस्यापि सावकाशत्वे निर्णयो दुश्शक इत्यत आह—**मुक्तेति** । 'उक्तं' इत्यनन्तरं 'तथा चात्मश्रुत्यादिबलाद्विष्णुरेव द्युभ्वाद्यायतनं' इति वाक्यशेषः ॥

नन्वेवं सूत्रेष्वादौ परसाधकानां सावकाशत्वोक्तिपरं "अतच्छब्दात्" इत्येतदुक्त्वा "स्वशब्दात्" इत्यादिहेतूपन्यासः कार्य इत्यतो वादकथारूपेण ग्रन्थस्य प्रवृत्तत्वात्तत्र च कथालक्षणतट्टीकाद्युक्तदिशा स्वपक्षसाधकस्यादौ वाच्यत्वाद्युक्तः सूत्रक्रम इति भावेनाह—**अत्र चाद्य इति** । **श्रुतिरूपेति** । आत्मश्रुतिरूपेत्यर्थः । तत्र टीकादौ 'स्वशब्दात्' इति सौत्रपदस्य स्वशब्दपर्यायेति कस्मादुक्तं, कथं चोपपद्यतामित्यत आह—**स्वशब्दादित्येतच्चेति** । **स्वेति शब्दः स्वशब्द इति** । स्वश्चासौ शब्दश्चेति "विशेषणं

चन्द्रिका

विषयवाक्ये स्वशब्दाभावात्तत्पर्यायात्मशब्दपरम्, यथा "सभा राजा-मनुष्यपूर्वा" इत्यत्र राजशब्दस्तत्पर्यायेश्वरादिशब्दपरः।

प्रकाशः

विशेष्येण बहुलम्" इति कर्मधारयः। स्वेतीति विग्रहप्रदर्शनम्। **यथेति**। व्याकरणे द्वितीयाध्यायस्य चतुर्थपादे "सभा राजा-मनुष्यपूर्वा" इति सूत्रम्। राजशब्दपूर्वकोऽमनुष्यशब्दोपात्तरक्षःपि-शाचशब्दपूर्वकश्च सभाशब्दः "स नपुंसकं" इति प्रकृतनपुंस-को भवति तत्पुरुषे इति। तत्र राजशब्दस्तत्पर्यायपरो न तु राज-शब्दपरः। इनसभमीश्वरसभम्। राजपूर्वकत्वे तु राजसभेत्येव, न तु राजसभमिति, वृत्तौ "पर्यायवचनस्यैवेष्यते" इत्युक्तेः। "स्वं रूपं शब्दस्याशब्दसंज्ञा" इत्यत्राद्याध्यायाद्यपादे "जित्पर्यायवच-नस्यैव राजाद्यर्थं" इति भाष्यवार्तिकयोरुक्तत्वात्। तस्य चाय-मर्थः—"सभा राजा" इति सूत्रे 'सभाराजाजमनुष्यपूर्वा' इति राजशब्दात्परं जकारव्यञ्जनमुच्चार्य राजशब्दो जित्त्वेन जकारेत्सं-ज्ञिकत्वेन निर्देष्टव्यः। तदनन्तरं "स्वं रूपं शब्दस्य" इति सूत्रे 'जित्पर्यावचनस्यैव' इति पठनीयं 'इनसभं' इत्यादिरूप-सिद्ध्यर्थमिति। अत्र यद्यपि "स्वं रूपं शब्दस्य" इति सूत्रे कैयटे "सभाराजा' इत्यत्राराजेति पर्युदास आश्रीयते, तेन राजशब्दसदृशानां तत्पर्यायाणामेव ग्रहणं सिद्ध्यतीत्युक्तत्वात्। "सभाराजा" इति सूत्र एव च मञ्जर्यां 'द्वावत्र नञौ अ-

चन्द्रिका

एतदेवाभिप्रेत्य विष्णुतत्त्वनिर्णये भगवत्पादैः, अत्रापि टीकाकारैः "स्वशब्दपर्यायात्मशब्दात्" इत्युक्तम्। "आत्मशब्दात्" इत्युक्तौ तु यद्यप्यार्जवं,

प्रकाशः

राजपूर्वा अमनुष्यपूर्वेति, तत्र नञिवयुक्तन्यायेन राजशब्दसदृशशब्दाः पर्याया एव गृह्यन्ते' इत्युक्तेः अत्र 'अराजा' इति पदच्छेदेन पर्यायग्रहणं युक्तम् । प्रकृते तु नैवम् । तथाऽपि, भाष्यवार्तिकयोर्मते राजशब्दे पर्युदासानाश्रयणात्तन्मतावष्टम्भेन वा, न्यायतो वा वचनतो वा यथाकथञ्चिदुपात्तपर्यायस्य ग्रहणमित्यत्राविवादाद्वा, 'राजशब्दस्तत्पर्यायपरः' इत्युक्तम् । यद्वा—तत्र पर्युदासेन नञ्युक्तमिवयुक्तमन्यस्मिन् सदृशाधिकरणे प्रतिपत्तिं गमयतीति न्यायेन पर्यायपरत्वस्य सिद्धत्ववदिहापि विषयवाक्ये स्वशब्दाभावेन तदन्यथाऽनुपपत्तिरूपन्यायसिद्धत्वमेव पर्यायपरत्वस्येति भावेनायं दृष्टान्त उक्तः। अत एव प्राग्विषयवाक्ये 'स्वशब्दाभावात्' इत्यन्यथानुपपत्तिरूपन्याय उपात्तः । केचित्तु—कैयटाद्युक्तमेवायुक्तम् । 'अराजा' इत्युक्तावपि "स्वं रूपं शब्दस्य" इति अराजशब्दस्यैव ग्रहणापत्त्या नञिवयुक्तन्यायाप्रवृत्तेरिति भावेनैवमुक्तमित्याहुः। केयमेवं सूत्रकारस्य वक्रा रीतिः, 'आत्मशब्दात्' इत्येव कुतो नासूत्रयदिति भावेनाक्षिप्य समाधत्ते—**आत्मशब्दादिति । आर्जवमिति ।** स्वेति शब्द इति विग्रहाश्रयणे विषयवाक्ये तदभावालोचनेन तत्पर्यायग्रहणस्य दुर्बोधत्वेन वक्र-

चन्द्रिका

प्रतिपत्तिलाघवं च शब्दलाघवाद्गुरम् । तथाऽपि तस्य विष्णावसाधारण्यं न ज्ञापितं स्यात्, तस्य शब्दस्तच्छब्द इति विग्रहं विवक्षित्वा 'तच्छब्दात्' इत्युक्तौ तु शब्दविशेषो नोपात्तः स्यात् । अत उभयार्थं 'स्वशब्दात्' इत्युक्तम् । एवमुक्ते हि उक्तिवक्रत्वावैयर्थ्याय स्वस्य विष्णोरेव शब्दः स्वशब्द इत्यपि विग्रहस्य विवक्षणीयत्वादसाधारण्यं ज्ञापितं भवति । एतदेवाभिप्रेत्योक्तं तत्त्वप्रदीपे—"विष्णोः स्वरूपस्यैव साक्षाद्वाचको ह्यात्मशब्दः" इति । षष्ठीसमासमात्रविवक्षा चेत्, 'तद्धर्मोपदेशात्' 'तल्लिङ्गात्' इत्यादाविव अत्रापि

प्रकाशः

त्वादेवमुक्तौ तदभावादार्जवमित्यर्थः । त्वत्पक्षेऽपि शब्दगौरवमित्यत आह—**प्रतिपत्तीति** । तर्हि 'तल्लिङ्गात्' इत्यादाविव 'तच्छब्दात्' इत्युक्तिस्स्यादित्यत आह—**तस्येति** । **अत इति** । अन्यथा न्यासे विवक्षितासिद्धेरसाधारण्यज्ञापनशब्दविशेषोपादानप्रदर्शनरूपोभयार्थमित्यर्थः । एवमुक्तौ कथमुभयस्य लाभ इत्यत आह—**एवमिति** । न केवलं स्वेति शब्द इति विग्रह इत्यपेरर्थः । एवं विग्रहद्वयमाश्रित्यैकं समाधिमुक्त्वा, अधुना स्वेति शब्द इत्येव विग्रहः, पूर्वोक्तदिशा स्वशब्दपर्यायात्मशब्दादित्येवार्थः, तर्ह्यात्मशब्दादित्येव कुतो नोक्तमित्याशङ्क्य, 'स्वशब्दात्' इत्युक्तौ यथा स्वशब्दो विष्णौ मुख्यः तथाऽऽत्मशब्दोऽपीत्यभिप्रायसूचनमेवमुक्तेः सूत्रकारस्य प्रयोजनं, अत एव च्छान्दोग्यभाष्ये षष्ठे स्वशब्दतुल्यस्यात्मश-

चन्द्रिका

तच्छब्दः प्रयुज्येत । अथवा—यथा लोके अन्यत्रप्रसिद्धोऽपि स्वशब्दो विष्णोस्सकाशात् सम्भूते चतुर्मुखे स्वभूरिति प्रयोगादिवशाद्विष्णौ मुख्यः, तथा लोकेऽन्यत्र प्रसिद्धोऽप्यात्मशब्दश्चतुर्मुखे आत्मभूरिति प्रयोगात,

आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः ।
तथैव स्व इति प्रोक्तस्तस्माद्ब्रह्माऽऽत्मभूस्स्वभूः ॥

इत्यादिवचनाच्च विष्णौ मुख्य इत्यभिप्रेत्य 'स्वशब्दात्' इत्युक्तम् । द्वितीये विषयवाक्यात् किञ्चिद्व्यवाहितलिङ्गरूपसाधकोक्तिः ।

प्रकाशः

ब्दस्य विष्णौ मुख्यत्वमाचार्यैः समर्थितमिति भावेन पक्षान्तरमाह—**अथवेति**। स्वयमेव भवतीति स्वभूरिति भ्रमनिरासाय—**विष्णोस्सकाशात्सम्भूत इत्युक्तम्**। उक्तं च च्छान्दोग्यभाष्ये—"स्वयंभूरिति विष्णुजत्वाद्विरिञ्च उच्यते। न हि विरिञ्चादेव विरिञ्चो जायते, "यो ब्रह्माणं विदधाति" इत्यादिश्रुतेः। 'आत्मा' भगवान्। ततो भूतत्वादात्मभूः" इत्यादि। आदिपदेन "स्वातन्त्र्यात्स्वइति प्रोक्तः" इत्यादिवचनं गृह्यते। **द्वितीय इति**। "मुक्तोपसृप्यव्यपदेशात्" इत्यत्र "अमृतस्यैष सेतुः" इत्यमृतशब्दितमुक्तवर्गाश्रयत्वरूपलिङ्गोक्तिरित्यर्थः। 'मुक्तोपसृप्य' इति भावप्रधानः, "द्व्येकयोर्द्विवचनैकवचने" इत्यत्र पाणिनीये 'द्व्येकयोः' इत्यत्रेव। लिङ्गोक्तिपरत्वे 'स्वशब्दात्' इति हेतुसमुच्चायकचशब्दः

चन्द्रिका

अत्र च टीकोक्तरीत्या जायमानत्वलिङ्गेनाऽऽत्मश्रुतेर्गौणत्वमस्त्विति शङ्कानिरासात्, ततः प्राक् स्वातन्त्र्येण हेत्वन्तरपरत्वाभावाच्चशब्दा-

प्रकाशः

स्यादित्यत आह—अत्र चेति । 'ततः प्राक्' गौणत्वशङ्कानिरासात् प्राक् । नन्वयं योगः शक्योऽवक्तुं, "तन्निष्ठस्य मोक्षोपदेशात्" "हेयत्वावचनाच्च" इत्यत्रैव "तमेवैकं जानथ आत्मानं" इत्युक्तात्मशब्दस्य विष्णौ मुख्यतायाः तात्पर्यस्य च सिद्धेः, तथैव तत्र टीकादौ भानात् । न च तत्र "जानथ आत्मानमन्या वाचो विमुञ्चथ" इति हेयत्वावचनाहेयत्ववचनान्यहेयत्ववचनैरेव वैष्णवत्वमात्मशब्दस्योक्तमत्र तु मुक्तोपसृप्यत्वालिङ्गेनेति वाच्यं, तत्रापि भाष्ये "अमृतस्यैष सेतुः" इत्यन्तस्योदाहरणात् । टीकायामपि "आत्मशब्दो मोक्षदातृत्वाहेयत्वाभ्यां निर्गुणलिङ्गाभ्यां अपह्रियते" इत्युक्तेः तन्निष्ठविषयत्वसम्भवाच्च । मैवं, तत्रात्मशब्दस्य जीवे मुख्यत्वमाशङ्क्य तन्निष्ठस्य मोक्षोपदेशादिना तन्निरासः, अत्र तु विष्णौ मुख्योऽप्यात्मशब्दोऽत्र प्रकरणे जायमानत्वरूपनिरवकाशजीवलिङ्गादमुख्यार्थः किं न स्यादिति शङ्कायां मुक्तोपसृप्यत्वलिङ्गेन तदुद्धारः । हेयत्वावचनादेरप्युपलक्षणमेतत् । ननु चैवं यैर्लिङ्गैः पूर्वमात्मशब्दस्य वैष्णवत्वं साधितं, तेषु जाग्रत्स्वेव निरवकाशजीवलिङ्गेनामुख्यवृत्त्याऽवैष्णवत्वे शङ्किते, कथं तैरेव शङ्कानिरास इति चेत्सत्यं, तस्याग्रे "अतच्छब्दात्, प्राणभृच्च" इत्यत्र सावकाश-

चन्द्रिका

भावः। इहोपसृप्यत्वं श्रौतसेतुशब्दात् प्राप्यान्तररहितत्वे सति प्राप्यत्वं, न त्वर्चिरादिवत्प्राप्यत्वमात्रम्। अत एव भाष्ये "अमृतस्यैष सेतुः" इति वाक्यमेवोदाहृतं, न तु "परात्परं पुरुषमुपैति" इति वाक्यमिति न कश्चिद्दोषः। तृतीये तु परपक्षे साधकाभावोक्तिः। तत्र चानुमीयत इत्यनुमानमित्यनुमानशब्देन वा, अनुमानशब्दात् शैषिकेऽणि कृते

प्रकाशः

यिष्यमाणत्वं, मुक्तोपसृप्यत्वादेस्तु निरवकाशत्वमिति भावेन, "मुक्तोपसृप्यव्यपदेशात्" इत्युक्तिरिति न कोऽपि दोषः। मुक्तप्राप्यत्वस्य अर्चिरादिना गच्छतामन्तराप्राप्यस्थाने व्यभिचारमाशङ्क्याह—**इहेति**। सेतुत्वस्य प्राप्यान्तररहितत्वे सति प्राप्यत्वरूपत्वादित्यर्थः। तादृशं च ब्रह्मण्येव, "विश्वात्मानं परायणम्" "मुक्तानां परमा गतिः" "सा काष्ठा सा परा गतिः" इत्यादेरिति भावः। **अत एवेति**। चरमप्राप्यत्वस्य सेतुपदेनेव उपैतिपदेनालाभादेवेत्यर्थः। **तृतीय इति**। "नानुमानमतच्छब्दात्" इत्यत्र। **अनुमीयतइतीति**। यद्यपि ल्युड्भावे करणाधिकरणयोश्च विहितः, न तु कर्मणि। तथाऽपि "कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् कर्मणि ल्युटि कृते, "युवोरनाकौ" इत्यनादेशे रूपम्। "आनुमानमनुमानात्मकागमपरिकल्पितं रुद्राख्यं ब्रह्मात्र न वाच्यम्" इति तत्त्वप्रदीपोक्त्यनुसारादाह—**अनुमानशब्दादिति**। 'शैषिके' "शेषे" इत्यनेनापत्याद्य

चन्द्रिका

आनुमानशब्देन वा अनुमानप्रधानपाशुपतसाङ्ख्याद्यागमसिद्धं रुद्र-

प्रकाशः

न्यार्थे विहितेऽण्प्रत्यये, आदिवृद्ध्यादौ सति रूपम् । अनुमानप्रधा-नको यः पाशुपतसांख्यहैरण्यगर्भसौरस्कान्दशाक्तेयाद्यागमः, तत्सिद्धं रुद्रप्रधानहिरण्यगर्भसूर्यशक्तिप्रभृतीत्यर्थः । यद्यपि टीकायां रुद्र-प्रधाने द्वे एवानुमानमित्यस्यार्थ उक्तः । तथाऽपि पूर्वपक्षटीकायां दृष्टफलविधायकवाक्यदृष्टान्तेन सर्वाश्रयत्वप्रतिपादकवाक्यप्रामाण्या नुमानेन रुद्रस्य प्रधानस्य च सर्वाश्रयत्वसिद्धेरुक्तत्वेन अस्य पूर्व-पक्षन्यायस्य दुरागममात्रसाधारण्यात्, "अतच्छब्दात्" इत्युक्त-सिद्धान्तन्यायस्य च दुरागममात्रसिद्धरुद्रप्रधानादेः सर्वस्यापि द्यु-भ्वाद्यायतनत्वनिरासेऽपि साम्यात्, भाष्ये रुद्रोक्तेः, तत्त्वनिर्णये प्रधा-नोक्तेः, टीकायामुभयोक्तेश्चोपलक्षणत्वादिति भावेनादिपदप्रयोगः । एतेनानुमानशब्दस्य व्युत्पत्तिद्वयेऽपि रुद्रार्थत्वे विशेष्यनिघ्नतया पु-ल्लिङ्गता स्यात्, "नवेति विभाषा" इति सूत्रे महाभाष्ये "अय-मितिकरणः परः प्रयुज्यते" इति ल्युडन्तस्यापि पुल्लिङ्गप्रयोगात्, कैयटे 'क्रियत इति करणः, इतिश्चासौ करणश्च' इति व्या-ख्यानादिति निरस्तं, 'रुद्रप्रधानादि' इति सामान्यस्य विशेष्य-स्योपादानात् । 'तत्प्रधानत्वात्ताच्छब्द्यं' इत्यागम एवानुमानशब्देन गृह्यत इत्यर्थः । ननु

शैवाद्यागमसम्प्राप्तदृष्टयोगेन फलेन तु ।
तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयते ॥

चन्द्रिका

प्रधानाद्युच्यते । अनेन च परपक्षे साधकाभावं वदता जायमानादि-शब्दानामपि जीवशब्दत्वं नास्ति, ब्रह्मण्यपि सम्भवादिति सूचनात्

प्रकाशः

ईशवाक्यत्ववत इति चेत्तद्वव्यभिचारिणा ।

अप्रमाण्यानुमा च स्यात् ................ ॥

इति शास्त्रयोनिनयानुव्याख्यान एवात्रानुमानपदसूचितपूर्वपक्षबीजस्य टीकोक्तस्य निरस्तत्वेन कथं पुनरत्रागमबलेन तत्सिद्धं रुद्रप्रधा-नाद्याशङ्क्य निरस्यत इति चेत्, अत्राहुः—श्रुतिलिङ्गबाहुल्येन, प्रबलसमाख्यारूपहेत्वन्तरेण, निरवकाशजायमानत्वलिङ्गेन च पूर्वपक्षे सति, पाशुपताद्यागमसिद्धत्वमभ्युच्चयत्वेनोच्यते, यथाऽऽनन्दमयन्या-येन विष्णुलिङ्गतया निर्णीतमपि चक्षुर्मयत्वादिलिङ्गं "सर्वत्र प्रसिद्ध" इत्यत्रार्भकौकस्त्वेन सिद्धे चोद्येऽभ्युच्चयत्वेनोच्यते, तथैव सुधायामु-क्तेरिति । यद्वा—"रुद्रो वाव लोकाधारः" इत्यादिश्रुत्या रुद्रादेस्स-र्वाधारत्वप्राप्तौ तत्साहाय्येन तस्य द्युभ्वाद्यायतनत्वप्रतिपादकागमस्या-पि प्रामाण्येन "तद्वव्यभिचारिणा । अप्रामाण्यानुमा च स्यात्" इत्युक्ताप्रामाण्यानुमानस्य बाधितत्वात्, "दृष्टगेन फलेन तु" इत्यु-क्तानुमानस्य च समूलत्वात्तेन तत्प्रामाण्योपपत्तेः, आगमावष्टम्भेन पुनराकाङ्क्षायां रुद्रादिसमाख्याया वैष्णवत्वोक्त्यैवाप्रामाण्यानुमानं निर्बाधमिति समाधानमिति अभिप्राय इति । "सोऽन्तकः स रुद्रः" इत्यादिभाष्यं सर्वं सूत्रारूढमिति भावेनाह—**अनेन चेति** । सूत्रे-

चन्द्रिका

स्त्वपक्षे बाधकमप्युद्धृतम् । एवं रुद्रसमाख्यास्थानां रुद्रपिनाक्यादि-श्रुतिलिङ्गानामपि मुख्यतो रुद्रादिशब्दत्वं नास्ति, विष्णुसमाख्या-स्थानां विष्ण्वादिशब्दानामपि रुद्रादिशब्दत्वं नास्ति,

न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।

अन्यनाम्नां गतिर्विष्णुः.................... ॥

इत्यादिभाष्योदाहृतस्मृतेः । तथा च रुद्रादिसमाख्या सावकाशा, वि-ष्णुसमाख्या तु निरवकाशेत्यपि सूचितम् । एवञ्चानुव्याख्याने "बा-

प्रकाशः

णेत्यर्थः । **विष्ण्वादिशब्दानां रुद्रादिशब्दत्वं नास्तीति** । तथा-त्वे तच्छब्दाभावादिति सूत्रकारो न ब्रूयादिति भावः । अनुव्याख्या नोक्तमपि सूत्रांशाभिमतमित्याह—**एवञ्चेति** । समाख्यादिस्थरुद्रपि-नाक्यादिशब्दानां विष्णौ मुख्यत्वे सतीत्यर्थः ।

बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता ।

अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥

लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।

बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथा गतिः ॥

समस्तमेतादित्यत्र पूर्वपक्षेषु युक्तयः ।

ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥

सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः ।

इत्यनुव्याख्यान एवेत्यर्थः । 'अतच्छब्दात्' इति सर्वशब्दानाम-

चन्द्रिका

हुल्यं लिङ्गशब्दानां" इत्यादिना "पूर्वपक्षेषु युक्तयः" इत्यन्तेन पूर्वपक्षयुक्तिमुक्त्वा,

ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ।
सिद्धान्तयुक्तयो ज्ञेयाः................ ॥

इति यस्सिद्धान्तन्यायउक्तः, सोऽपि सूत्रारूढः । अत्र च प्रसज्यप्रतिषेधार्थस्य नञः क्रियासापेक्षत्वेन असामर्थ्येऽपि 'असूर्यम्पश्याः राजदाराः' 'अश्राद्धभोजी ब्राह्मणः' इत्यादौ समासोऽस्तीति

प्रकाशः

न्यत्राभावं वदता गत्यन्तरविवर्जितत्वमुक्तमिति भावः । ननु 'अतच्छब्दात्' इत्यस्य तच्छब्दाभावादिति व्याख्यानमयुक्तं, असामर्थ्येन समासानुपपत्तेः । अतः पररीत्या पर्युदासमाश्रित्य तच्छब्दविरुद्धशब्दादित्येव व्याख्येयमित्यत आह—अत्र चेति । प्रसज्येति ।

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ।
पर्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

इत्युक्तेः । सूर्यं न पश्यन्तीत्यसूर्यम्पश्याः । "असूर्यललाटयोर्दृशितपोः" इति खशि कृते "खित्यनव्ययस्य" "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमे "पाघ्राध्मास्थाम्नादाण्दृशि" इत्यादिना दृशेः पश्यादेशे रूपम् । श्राद्धं न भुङ्क्ते इत्यश्राद्धभोजी । "व्रते" इति सूत्रेण शास्त्रीयनियमरूपे व्रते गम्यमाने सुबन्ते उपपदे धातोर्णिनिप्रत्यये रूपम् । अत्र नञः क्रियासापेक्षत्वेन सूर्या-

चन्द्रिका

"अकर्तरि च कारके संज्ञायाम्" इत्यत्र ज्ञापितत्वाद्वा, निर्मक्षिकमि त्यादाविव "अर्थाभावे यदव्ययम्" इत्यव्ययीभावसमासाश्रयणाद्वा

प्रकाशः

दिपदेनाकाङ्क्षाभावेऽपि समासस्स्वीकृतो ज्ञापकेन। तत् ज्ञापकमाह— **अकर्तरीति**। तृतीयाध्यायस्य तृतीयपादे कर्तृवर्जितेऽन्यस्मिन् कारके संज्ञायां विषये धातोर्घञ्प्रत्ययो भवति, चकारादसंज्ञायां च। प्रास्यन्ति तमिति प्रास इत्यादिरूपसिद्ध्यर्थम्। तत्र सूत्रे 'अकर्तरि' इति किं पर्युदासः किं प्रसज्यप्रतिषेध इति विचारे, पर्युदासपक्षे नञिवयुक्तन्यायेन कर्तृभिन्नस्य कर्तृसदृशस्य कारकस्यैव ग्रहणसम्भवात् कारकपदं व्यर्थं। तत् क्रियते। तेन ज्ञायतेऽकर्तरीति न पर्युदासः किन्तु प्रसज्यप्रतिषेध इति। तथा च प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनाय कारकपदमिति। अत एव "आदेच उपदेशेऽशिति" इति सौत्रनिर्देशो युक्तः, उपदेशे एच आत्वं भवति शिति तु शकारेत्संज्ञकप्रत्यये परतो न भवतीति प्रसज्यप्रतिषेधार्थत्वस्य तत्राभिमतत्वात्। पर्युदासत्वे तु शितोऽन्यत्राच्प्रभृतिप्रत्यये परतः एच आत्वं भवतीत्यर्थप्राप्त्या 'सुग्लः सुम्लः' इत्यादौ "आतश्चोपसर्गे" इति कप्रत्ययो न स्यात्। व्यक्तमेतत्सर्वं वृत्त्यादौ। **अव्ययीभावेति**। तस्य शब्दस्तच्छब्द स्तच्छब्दस्याभावोऽतच्छब्दं, "अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्ययासम्प्रतिसाकल्यान्तवचनेषु" इति सूत्रे, अर्थाभावे वर्त-

चन्द्रिका

'अतच्छब्दात्' इति पदं भाष्ये तच्छब्दाभावादिति व्याख्यातम् ।

प्रकाशः

मानं यदव्ययं तदुत्तरपदेन समस्यते, स समासोऽव्ययीभाव इति विधानादिहाभावार्थकस्य नञः उत्तरपदेन समासः, यथा 'मक्षिकाणामभावो निर्मक्षिकं, विवादस्याऽभावोऽविवादं' इत्यादौ, तथेत्यर्थः ।

विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् ।
श्रुतिर्वक्ति.......................................... ॥

इत्येतत्पादीयानुव्याख्याने, तथा,

आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ।
स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट् ॥

इति चतुर्थाध्यायाद्यपादीयानुव्याख्याने च, "स्वशब्दपर्यायात्मशब्दाच्च न प्रकृतिजीवावभिधीयेते" इति विष्णुतत्त्वनिर्णये च "तेभ्य शिवादिभ्योऽन्यत् अतत् ब्रह्म, तस्य शब्दोऽतच्छब्दः" इत्येतत्पादीयसुधोक्तदिशाऽर्थान्तरस्योक्तत्वात्तत्र च शब्ददोषाभाव इति भावेन 'भाष्ये' इत्युक्तम् । अर्थान्तरपक्षे "अतद्धर्माभिलापात्" इत्यत्र परमतेऽभिहितरीत्या 'स्वशब्दात्' इत्यनेन पौनरुक्त्यदोषस्तु, 'अन्यत्र सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासेऽपि हेतुत्वं द्रष्टव्यम् । तेन न न्यूनतादोष इत्येतत्प्रदर्शयितुं, सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासेऽपि व्यापारं दर्शयितुं इदं सूत्रम्' इति सुधोक्तदिशा प्रयोजनविशेषवत्त्वान्निराकर्तव्य इति भावः ।

चन्द्रिका

अव्ययीभावत्वेऽप्ययम् न भवति, "अपञ्चम्याः" इत्युक्तेः। एवं "अतद्धर्माभिलापात्" इत्यादावपि द्रष्टव्यम्। चतुर्थे

प्रकाशः

नन्वव्ययीभावत्वे "अव्ययीभावश्च" इति सूत्रेण अव्ययत्वे "अव्ययादाप्सुपः" इति समासादुत्पन्नसुपो लुकि प्राप्ते "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इति सूत्रेणामादेशविधानात् 'अतच्छब्दं' इति भाव्यं, न त्वतच्छब्दादिति तत्राह—**अव्ययीभावत्वेऽपीति**। अदन्तादव्ययीभावात्परतः सुपो लुङ् न भवति, किन्त्वमादेश एव, पञ्चम्यास्तु अमादेशोऽपि नेति पञ्चम्या अमादेशस्य निषेधादित्यर्थः। एतेन "—"अकर्तरि च कारके" इति ज्ञापकात् असामर्थ्येऽपि क्वचित्समासो भवतीति वा, "अर्थाभावे यदव्ययम्" इत्यव्ययीभावो वेति समाधानमवधातव्यम्" इति सुधावाक्यं विवृतं ध्येयम्। "छन्दोवत्सूत्राणि भवन्तीति वा" इति सुधोक्तं समाधानान्तरं स्फुटत्वान्न विवृतम्। **एवमिति**। "न च स्मार्तमतद्धर्माभिलापात्" इत्यत्राप्युक्तं समाधिद्वयं ध्येयमित्यर्थः। जीववायुनिरासाय सूत्रं—**प्राणभृच्चेति**। तत्र 'चशब्द आत्मशब्दमुक्तोपसृप्यत्वातच्छब्दादिहेतूनां नञश्चानुकर्षणार्थः' इति टीका न युक्तेव, तथात्वे 'नानुमानप्राणभृतावतच्छब्दात्' इत्येकयोगेन निर्देष्टव्ये योगविभागायोगादित्यत आह—**चतुर्थ इति**। 'योगविभाग उत्तरार्थः' इत्यनेनान्वयः। "भेदव्यपदेशात्" इत्यत्रानुवृत्त्यर्थः। सहनिर्देशो

चन्द्रिका

अद्वैतिना जीवस्येव साङ्ख्यादिना प्रधानादेर्ब्रह्माभेदानङ्गीकारात्, "अन्यमीशं" इत्यादिभेदव्यपदेशस्य प्रधानादिविषयत्वाभावाच्च "भेद-व्यपदेशात्" इत्युत्तरहेतोर्जीवपक्षमात्रनिरासकत्वाद्योगविभाग उत्त-रार्थः। तत्र चशब्दो न केवलं टीकोक्तरीत्या पूर्वोक्तहेतूनां नञश्चानुक-र्षणार्थः, किन्तु वायुसमुच्चयार्थोऽपीति द्रष्टव्यम्। पञ्चमे जीवब्रह्माभे-देनोभयाबाधसम्भवे नैकस्यापि बाधो युक्त इति शङ्किते तन्निरा-साच्चशब्दाभावः, स्वपक्षसाधकस्वशब्दादिहेतुविप्रकर्षश्च। अत्र च "अन्यमीशं" इत्युक्तेनान्यत्वेन 'पश्यति' इति प्रकृतो जीवः

प्रकाशः

तु आनुमानिकस्याप्यनुवृत्तिस्स्यात्। अस्तु, को दोष इत्यत आह—**अद्वै-तिनेति**। आदिपदेन शैवादिर्ग्राह्यः। यथा व्याकरणेऽङ्गाधिकारे "दंशसञ्जस्वञ्जां शपि, रञ्जेश्च, घञि च भावकरणयोः" इत्यत्र "रञ्जेश्च" इत्येतस्य पूर्वसूत्र एव 'स्वञ्जरञ्जां' इति निर्देष्टव्ये, "घञि च" इत्युत्तरसूत्रेऽनुवृत्त्यर्थो योगविभागः, अन्यथा सर्वस्याप्य-नुवृत्तिः स्यात्तथेहापीति भावः। एतच्च परभाष्यादावपि व्यक्तम्। एतेन "प्राणभृच्च" इति सूत्रपृथक्कल्पनमयुक्तमिति श्रुतप्रका-शोक्तं निरस्तं भवति। सूत्रे वायुनिरासाप्रतीतेराह—**तत्रेति**। **प-ञ्चम इति**। "भेदव्यपदेशात्" इति सूत्रे "अन्यमीशमिति जीवे-शभेदव्यपदेशादित्यर्थः" इति टीका न युक्तेव, श्रुतौ जीवादन्यमित्य प्रतीतेः, विरुद्धा चादृश्यत्वाधिकरणभाष्येणेत्यत आह—**अत्र चेति**।

चन्द्रिका

पदिन्यायेन प्रतियोगित्वेन सम्बध्यत इत्यभिप्रेत्येयं श्रुतिर्जीवेशभेदे प्रमाणीकृता। "विशेषणभेदव्यपदेशाभ्यां" इत्यत्र तु 'अयमन्यो मार्गः' इत्युक्ते प्रसिद्धमार्गादन्यत्ववत् 'अन्यमीशं' इत्युक्ते प्रसिद्धेशाद्रुद्रादन्यत्वप्रतीतेः इयं श्रुतिः व्याख्यानान्तरमभिप्रेत्य रुद्रादन्यत्वे प्रमाणी-

प्रकाशः

**पदिन्यायेनेति**। चतुर्थस्याद्यपादे "पदकर्माप्रयोजकं नयनस्य परार्थत्वात्" इति दशमाधिकरणे चिन्तितम्। ज्योतिष्टोमे "एकहायन्या क्रीणाति" इत्येकहायन्या गवा सोमक्रयणं प्रकृत्य "षट्पदान्यनुनिष्क्रामति, सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति" इति षट्पदनयनानन्तरं साज्यसप्तमपदपांसुग्रहणं विधाय "यर्हि हविर्धाने प्राचीं प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्" इति हविर्धाने शकटप्रवर्तनकाले तदक्षाञ्जनं तेन पदपांसुना साज्येन कर्तव्यमाम्नायते। तत्र सोमक्रयणवत् पदपांसुसाध्यमक्षाञ्जनमप्येकहायनीनयनस्य प्रयोजकमनुष्ठापकमिति यावत्, उत नेति संशये, उभयोरप्येकहायनीनयनसाध्यत्वादुभयं प्रयोजकमिति प्राप्ते, "एकहायन्या क्रीणाति" इत्येकहायन्याः क्रयणार्थत्वेन विधानात्, यदर्थं द्रव्यं तदर्थस्तत्संस्कार इति, एकहायन्या सोमक्रयणदेशं प्रति नयनरूपस्य संस्कारस्यापि क्रयणार्थत्वात्, क्रयणमेव प्रयोजकमन्यदनुनिष्पादीति सिद्धान्त इति। अत्र "सप्तमं पदं" इत्यत्र पदशब्दस्य सन्निधानादेकहायनीपदविषयकत्वं सिद्धं कृत्वा विचारः प्रवृत्त इति पदि-

चन्द्रिका

कृतेत्यविरोधः । एवं षष्ठेऽपि भेदव्यपदेशस्यान्यविषयत्वशङ्कानिरासाच्चशब्दाभावः ।

प्रकाशः

न्यायेनेत्युक्तमित्याहुः । पदयुक्तन्यायः पदिन्यायः । **एवमिति ।** पञ्चम इव "प्रकरणात्" इत्यत्रापीत्यर्थः । जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते, न तु परमात्मनः, अतो न तयोर्भेद इति शङ्कायां, "द्वे विद्ये वेदितव्ये" इति परविद्याविषयस्य वस्तुनः परमात्मन एव प्रक्रम्याधीतत्वेनास्य तत्प्रकरणत्वेनेशशब्देन तस्यैवग्रहणोपपत्तेरित्यर्थोक्तेरिति भावः । **चशब्दाभाव इति ।** पूर्वानन्तर्यं चेत्यपि ज्ञेयम् । नन्वेवं अयं योगः शक्योऽवक्तुम् । कथमिष्टसिद्धिः, यथा 'अतच्छब्दात्' इत्युक्त्या समाख्यास्थरुद्रादिशब्दानां विषयवाक्यस्थजायमानशब्दस्य चान्यार्थत्वनिरासेन विष्णवर्थत्वसिद्धिस्तथेशशब्दस्यापि विष्णवर्थत्वसिद्धेः । न च तत्र "जायमानः" इत्यादिश्रुतिस्मृतिबलात्तथात्वासिद्धिः, इहापि "स ईशो यो हरिः" इति, "ईशानादेव चेशानः" इति,

एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः ।

इति श्रुतिस्मृतिभावात् । मैवं, अन्तरङ्गज्ञापके सति त्यागायोगान्निरवकाशजीवलिङ्गादिना प्रकरणमन्यपरमिति आक्षेपे सति तत्सावकाशत्वस्य 'अतच्छब्दात्' इत्यनेनोक्तौ प्रकरणमपि साधकमेव, एवमेतदन्यत्राप्यनुसन्धेयमित्यर्थस्य ज्ञापनार्थत्वात्प्रागुक्तश्रुतिलिङ्गोपोद्ब-

चन्द्रिका

सप्तमे तु न केवलं व्यपदेशात् श्रुतेर्भेदः, किन्तु लिङ्गादपीति कथनाच्चशब्दः। श्रुतावदनस्य प्राथम्येऽपि स्थितेरीश्वरसम्बन्धि-त्वेनाभ्यर्हितत्वादल्पाक्षरत्वाच्च सूत्रे तस्याः प्राथम्यम्।

प्रकाशः

लनार्थत्वाच्चास्य योगस्योक्तिः। एतेन कथं प्रकरणेन श्रुतिबाध इति प्रत्युक्तम्। श्रुतेस्सावकाशत्वात् प्रकरणस्यानवकाशत्वादिति। **सप्तम** इति। "स्थित्यदनाभ्यां च" इत्यत्र। **श्रुतेरिति**। अन्यशब्दरूप श्रुतेरिति व्यपदेशपदार्थोक्तिः। "द्वा सुपर्णा" इत्युपक्रम्य

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।

इति जीवेशयोः कर्मफलोपजीवनतद्रहितावस्थानरूपलिङ्गादपीत्यर्थः। **चशब्द इति**। पूर्वानन्तर्यं चेत्यपि ग्राह्यम्। "अत्र श्रुतिक्रमो-ल्लङ्घनमीश्वरस्य प्राधान्यज्ञापनार्थम्, स्थितिपदस्याल्पाक्षरत्वाच्च" इति टीकार्थं व्यक्तमाह—**श्रुताविति**। "अल्पाच्तरम्" इति पाणि-निस्मरणादिति भावः। गुहानये 'अनश्नन्' इत्यस्याशुभाशनानि-षेधार्थत्वोक्तावपि इह जीवनार्थकर्मफलादनं नेत्यर्थतया व्याख्यानम-भिमतम्।

सुपर्णावेतौ सयुजौ सखायौ यदृच्छया कृतनीडौ च वृक्षे।

एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्॥

इत्यादिभागवतोक्तेः।

साशनानशनत्वेन नरदेवौ यथोदितौ।

चन्द्रिका

न च वाच्यं "द्वा सुपर्णा" इति मन्त्रोक्ते स्थित्यदने बुद्धि-जीवगते, न तु जीवेशगते, "तावेतौ सत्त्वक्षेत्रज्ञौ" इति पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य सत्त्वक्षेत्रज्ञशब्दार्थत्वेन प्रसिद्धबुद्धिजीवविषयत्वेन व्याख्यातत्वादिति, ब्राह्मणे सत्त्वशब्दस्य "ऊनं न सत्त्वेष्वधिको बबाधे" इति प्रयोगात्, "सत्त्वमस्त्री तु जन्तुषु" इति नामानुशासनात्, "सत्त्वं जीव इति प्रोक्तः" इति स्मृतेश्च जीवपरत्वात्।

प्रकाशः

अत्ति विनाऽप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुजः ॥

इति स्मृतेश्चेति भावः। श्रुतेर्जीवेशविषयत्वं साधयति—**न चेत्यादिना। तावेताविति।** "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं अनश्नन्नन्यो अभिचाकशीतीति अनश्नन्नन्योऽभिपश्यति ज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ तदेतत्सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः" इत्यनेन व्याख्यातत्वादित्यर्थः।

ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥

इति रघुवंशे।

"द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु"

इति नानार्थवर्गे। जन्तुश्च "प्राणी तु चेतनो जन्मी जन्तुः" इत्यमरोक्तेः जीव इति भावः। **इति स्मृतेरिति।** त्रयोदशेऽध्याये गीतातात्पर्योक्तस्मृतेरित्यर्थः।

चान्द्रिका

क्षेत्रज्ञशब्दस्य च,

प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंयुतम् ॥

इति मोक्षधर्मादिवचनैर्ब्रह्मपरत्वात् । अन्यथा "द्वा सुपर्णा" इत्यस्मादुत्तरं

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।

इत्यादिकमयुक्तम् । न हि बुद्धौ पुरुषशब्दः मुह्यमानत्ववीतशोकत्वा-दिकं च युक्तम् ॥

प्रकाशः

**मोक्षधर्मादीति** । आदिपदेन—

क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्याः ।
आविर्हिताश्चैव तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥
क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयंज्योतिरजः परेशः ।
नारायणो भगवान् वासुदेवः स्वमाययाऽऽत्मन्व्यवधीयमानः ॥

इति भागवतवचनं, "क्षेत्रज्ञं चापि मां विद्धि" इति गीतावचनं,

स्वेच्छयैवावृतो विष्णुर्जीवे तिष्ठति नित्यदा ।
योऽसौ नियमयन् जीवं क्षेत्रज्ञ इति शब्दितः ॥

इति हरिवंशादिवचनं च गृह्यते । **पुरुषशब्द इति** । 'युक्तः' इति विपरिणामः । अत्र विस्तरस्तु गुरुपादकृतश्रुतितात्पर्यकौमुद्यां ज्ञेयः ।

चन्द्रिका

अन्ये तु—"अमृतस्यैष सेतुः" इति द्युभ्वाद्यायतनममृतसम्बन्धित्वेन सेतुत्वेन च श्रूयते। न च ब्रह्मणोऽन्यदमृतमस्ति, येन ब्रह्म तत्सम्बन्धि स्यात्। सेतुश्च पारवान्, ब्रह्म त्वपारम्। तस्मान्न द्युभ्वाद्यायतनं ब्रह्म, किन्तु रुद्रवायुप्रधानजीवादिरिति प्राप्ते, प्रधानादेरपि जलविधारकत्वादेरभावेन न रूढं सेतुत्वम्। यौगिकं तु भावप्रधानामृतशब्दार्थमोक्षधारकत्वात् ब्रह्मणोऽप्यस्ति। यद्वा—श्रुतावेतच्छब्दो न ब्रह्मपरः, किन्तु "तमेवैकं जानथ" इति विधेयत्वेन शब्दतः प्रधानतया प्रस्तुतज्ञानपरः।

प्रकाशः

**अन्ये त्विति।**

पारवत्त्वेन सेतुत्वात् भेदे षष्ठ्याः प्रयोगतः।
द्युभ्वाद्यायतनं युक्तं नामृतं ब्रह्म कर्हिचित्॥

इति भामत्युक्तमनुवदति—**अमृतस्यैष सेतुरिति।** भाष्योक्तकोटीराह—**रुद्रेति।** आदिपदेन हिरण्यगर्भः।

धारणादमृतत्वस्य साधनाद्वाऽस्य सेतुता।
पूर्वपक्षेऽपि मुख्यार्थः सेतुशब्दो हि नेष्यते॥

इति भामतीं हृदि कृत्वा सिद्धान्तमनुवदति—**प्रधानादेरपीति। जीवादाविति।** अमृतपदोक्तब्रह्म प्रति सेतुत्वस्य जीवादावपि दुर्वचत्वादित्यर्थः। निरवकाशविरोधिलिङ्गस्य जागरूकत्वान्न सिद्धान्तोदय

चन्द्रिका

तस्य चामृतत्वसाधनत्वात् गौणं तत्सेतुत्वमिति सिद्धान्त इत्याहुः । तन्न, ब्रह्मण्यत्यन्तायुक्तेन जायमानत्वलिङ्गेनैव पूर्वपक्षौचित्यात् । ब्रह्मणोऽन्यदमृतं नेति पूर्वपक्षेऽपि जीवादावमृतसेतुत्वस्य दुर्वच त्वाच्च । सिद्धान्ते जायमानत्वलिङ्गस्य गत्यनुक्तेश्च । सत्यस्य मोक्ष-स्याद्वैतिमते ब्रह्ममात्रत्वेन ब्रह्मणस्तद्धारकत्वायोगाच्च । मुक्तिः पञ्च-मप्रकारेति मतेऽप्यविद्या जीवाश्रितेति पक्षे तद्ध्वंसस्यापि तदाश्रित-त्वात्, चिन्मात्राश्रितेति पक्षेऽपि मोक्षस्य बन्धाश्रयजीवाश्रितत्वात्, बन्धस्यापि चिन्मात्राश्रितत्वे च श्यामत्वादिवत् संसारस्य प्रतिबि-

प्रकाशः

इति भावेनाह—**सिद्धान्त इति** । यद्यप्यमृतत्वाधारत्वादमृतसेतुत्वं ब्रह्मणि युक्तमिति, तत्र किमिदममृतत्वं,

अविद्यास्तमयो मोक्षः सा संसार उदाहृतः ।

इत्युक्तेरविद्यानिवृत्तिरिति चेत्सा किं सत्या, अथ

न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः ॥

इत्युक्तेः पञ्चमप्रकारा । आद्ये दोषमाह—**सत्यस्येति** । द्वितीयेऽ-प्यविद्या किं भामतीमतरीत्या जीवाश्रिता, अथ विवरणरीत्या चि-न्मात्राश्रितेति । आद्ये दोषः—**मुक्तिरिति** । द्वितीयेऽपि किं बन्धः जीवाश्रितः, चिन्मात्राश्रितो वा । आद्ये दोषः—**चिन्मात्रेति** । अ-न्यथा बन्धमोक्षयोः सामानाधिकरण्यं न स्यादिति भावः । द्वि-तीये दोषः—**बन्धस्यापीति** । **श्यामत्वेति** । 'प्रतिमुखादौ' इति

चन्द्रिका

म्बनिष्ठत्वोक्त्ययोगात् । यच्चोक्तं श्रुतावेतच्छब्दो ज्ञानपर इत्यादि, तन्न, "एष सेतुर्विधृतिः" इति श्रुत्यन्तरे सेतुत्वेन प्रसिद्धब्रह्मण एवेह प्रत्यभिज्ञानात् । अस्यामेव श्रुतौ "स एषोऽन्तश्चरते" इति,

दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः ॥

इत्युत्तरवाक्यस्थस्यैतच्छब्दस्य ब्रह्मपरत्वदर्शनाच्च । सिद्धरूपाभिधायिनः पुल्लिङ्गस्यैतच्छब्दस्य पुल्लिङ्गेन तच्छब्देनाऽऽत्मशब्देन चाव्यवधानेन प्रकृतसिद्धरूपात्मपरत्वसम्भवेऽपि तद्विपरीतज्ञानपरत्वायोगाच्च । किञ्चाद्यसूत्रे द्युभ्वाद्यायतनत्वं नाम परमते निर्विशेषस्य तद्भ्रमाधिष्ठानत्वम् ।

प्रकाश

शेषः । यच्च यद्वेत्यादिनोक्तं, तन्निराह—**यच्चेति** । **श्रुत्यन्तरइति** । वाजसनेये "य एषोऽन्तर्हृदये आकाशः तस्मिन् शेते सर्वस्य वशी" इत्युक्त्वा "एष सर्वेश्वर एष भूताधिपतिः एष भूतपालः एष सेतुर्विधारण एषां लोकानामसम्भेदाय" इति वाक्ये 'एषः' इत्येतच्छब्दस्य प्रकृतब्रह्मपरत्वं स्पष्टमेवेति भावेन—**प्रसिद्धेत्युक्तम्** । तत्र यद्यपि 'विधरणः' इत्येव पाठस्तथाऽपि दहरनये "धृतेश्च महिम्नः" इति सूत्रे भाष्योक्तश्रुत्यन्तरोक्तिरियमिति ध्येयम् । '**अस्यामेव**' आथर्वण एव । **तच्छब्देनेति** । "तमेवैकं" इत्यत्र तमित्यनेनेत्यर्थः । ननु 'तं' इत्यस्य 'जानथ' इति ज्ञानवाचिना व्यवहितत्वात् ज्ञानमेव परामृश्यत इत्यत आह—**आत्मशब्देन चेति** । सूत्रार्थानपि निराह—**किञ्चेति** । अस्य पादस्य निर्विशेष-

चन्द्रिका

तथा च श्रुतावोतशब्दः सूत्रे चाऽऽयतनशब्दश्चायुक्तः । न हि शुक्तौ रूप्यमोतमित्युच्यते । यच्चोक्तं 'स्वशब्दात्' इत्यनेन आत्मशब्दादिकमुच्यते, स हि ब्रह्मणः शब्द इति, तन्न, आत्मशब्दवाच्यत्वस्य निर्विशेषे अभावात् । तल्लक्ष्यत्वस्य च प्रधानादावपि सम्भवात् । सविशेषस्य चैतत्पादाप्रतिपाद्यत्वात् । यच्चोक्तं रागद्वेषादिमुक्तैर्ज्ञेयत्वव्यपदेशादिति वा, "अन्या वाचो विमुञ्चथ" इति

प्रकाशः

परत्वाभ्युपगमेन तत्र द्युभ्वायतनत्वस्यारोपाधिष्ठानत्वादन्यस्याभावादिति भावः । प्रतिज्ञाभागं निरस्य हेत्वंशं निराह—**यच्चेति** । एतेनाऽऽत्मश्रुतितात्पर्यविषयत्वमात्रं हेतुरिति प्रत्युक्तम् । शब्दवृत्तिविषयत्वपूर्वकत्वात्तस्य । प्रधानादावपि सम्भवाच्च । ननु सविशेषस्यात्मपदवाच्यत्वं द्युभ्वाद्यायतनत्वं चास्तीत्यत आह—**सविशेषस्येति** । **रागद्वेषादिमुक्तैर्ज्ञेयत्वेति** ।

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्यादिनेत्यर्थः । "हृदयग्रन्थिश्चाविद्यारागद्वेषभयमोहाः । **'दृष्टे'** दर्शनं तस्मिन् तदर्थमिति यावत् । यथा 'चर्मणि द्वीपिनं हन्ति' इति चर्मार्थमिति गम्यते" इति भामत्यां व्याख्यानात् । अस्यार्थस्य तत्र वाक्ये स्पष्टमप्रतीतेः तदनुपादानेन—**रागद्वेषादिमुक्तैरित्येवोक्तम्** ।

चन्द्रिका

वाग्विमोकपूर्वकं "तमेवैकं जानथ" इति ज्ञेयत्वव्यपदेशात् इति वा, "तथा विद्वान्नाम रूपाद्विमुक्तः परात्परं पुरुषमुपैति" इति मुक्तैः प्राप्यत्वव्यपदेशादिति वा द्वितीयसूत्रार्थ इति, तन्न, निरुपपदस्य मुक्तशब्दस्य संसारान्मुक्ते प्रसिद्धत्वेन तत्त्यागायोगात्। उपपूर्वस्य सृपेस्समीपप्राप्त्यर्थत्वेन ज्ञानार्थत्वायोगाच्च। त्वन्मते ब्रह्मणो मुक्ताभेदेन तत्प्राप्यत्वाभावाच्च। सगुणमोक्षोक्तौ च पादासङ्गतिः। सौत्रमुक्तशब्दस्य श्रौतस्य "नामरूपाद्विमुक्तः" इत्यस्यास्वारस्यं च। तृतीयसूत्रे अतच्छब्दो नाम तद्वाचकशब्दाभावश्चेन्निर्विशेषेऽपि समः, तल्लक्षकशब्दाभावस्तु प्रधानादौ अप्यसिद्धइत्युक्तम्। चतुर्थे "यस्सर्वज्ञः" इत्यतच्छब्दाद्यादिजीवनिषेधः, तर्हि निर्विशेषब्रह्मनिषेधोऽपि स्यात्,

प्रकाशः

**वाग्विमोकेति**। सूत्रे 'मुक्त' इति शब्दस्य भावार्थनिष्ठान्तत्वेन मोचनार्थतया वाग्विमोकपूर्वकमित्यर्थलाभादिति भावः। आद्यद्वितीययोर्दोषद्वयमाह---**निरुपपदस्येत्यादि**। तृतीये दोषमाह---**त्वन्मत इति**। **मुक्तपदेति**। तस्य मुख्यमुक्त एव स्वारस्यादिति भावः। यदपि "नानुमानं" इत्यस्यानुमीयत इत्यनुमानं प्रधानं न द्युभ्वाद्यायतनं तच्छब्दाभावादित्यर्थ इति, तत्र हेत्वर्थं निराह---**तृतीयेति**। 'उक्तं' आद्यसूत्रार्थदूषणप्रस्तावे। यदपि "प्राणभृच्च" इत्यत्र 'अतच्छब्दात्' इति हेतुमनुकृष्य "यः सर्वज्ञः सर्ववित्" इति तद्विपरीतशब्दान्न जीवो द्युभ्वायतनमिति, तत्राह---**चतुर्थइति**।

चन्द्रिका

सार्वज्ञ्यस्य सविशेषनिष्ठत्वात् । पञ्चमे भेदव्यपदेशो नाम "तमेवैकं जानथ" इति कर्मकर्तृव्यपदेश इत्यप्ययुक्तं, "अन्यमीशं" इति साक्षाद्भेदव्यपदेशे सति भेदकव्यपदेशग्रहणायोगात् । एवं सूत्रान्तरेऽप्यनुपपत्तिरूह्या । अत्रापि परमतेऽपि "भेदव्यपदेशात्" इत्यनेन जीवब्रह्मभेदोक्तेः, "मुक्तोपसृप्यव्यपदेशात्" इत्यनेन मुक्तावपि भेदोक्तेश्चाभेदप्रतिकूलता व्यक्ता ॥

केचित्तु—

प्रकाशः

**साक्षादिति।** भेदोक्तिद्वारमन्तरेणैवेत्यर्थः । **एवमिति ।** "प्रकरणात्" इत्यस्य त्वन्मते प्रधानहेतुत्वात्तत्र चशब्दश्रवणं स्यात्, "स्थित्यदनाभ्याम्" इत्यत्रापि भेदकस्यैवोक्त्या भेदसूत्रेण पौनरुक्त्यमित्यादिरूपेणोह्येत्यर्थः । **इत्यनेनेति ।** प्राप्तृप्राप्यभावस्य भेदव्याप्यत्वादितिभावः ।

**केचित्त्विति ।** द्युभ्वाद्यायतनं जीवः परमात्मा वेति संशये, मनःप्रभृतीन्द्रियाधारत्वनाडीसम्बन्धजायमानत्वादिलिङ्गानां श्रवणात् तद्बलेन पृथिव्याद्यायतनत्वादेर्जीवे स्वरूपेण वा, कर्मद्वारा वा, मुक्त्यवस्थायां विकसितेन ज्ञानेन वा कथञ्चिन्नेयत्वाज्जीव एव द्युभ्वायतनमिति प्राप्ते, "तमेवैकं जानथ आत्मानं" "अमृतस्यैष सेतुः" "यः सर्वज्ञः" इत्यादिपरमात्मासाधारणशब्दात् "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति" इति नामरूपात्मकबन्धान्मुक्तस्य

चन्द्रिका

"गौणश्चेन्नात्मशब्दात्" इत्यत्रात्मशब्दस्याचिद्व्यावर्तकताया उक्तत्वा-दात्मशब्दोक्ते द्युभ्वाद्यायतने प्रधानत्वशङ्कानुदयात् जीवत्वेनैव पूर्वपक्ष इत्याहुः। तन्न, रुद्रादिव्यावर्तकताया अनुक्तत्वेन जीवत्वेनैवेत्यवधा-रणायोगात्। "नानुमानं" इति सूत्रे प्रधाननिरासायोगाच्च।

प्रकाश.

प्राप्तृतया व्यपदेशान्मनःप्रभृतीन्द्रियाधारत्वस्य सर्वाधारे परमात्मनि,

सन्ततं शिराभिस्तुलम्बत्याकोशसन्निभम्।

इत्यादिश्रुत्या नाड्याधारत्वस्य हृदयाधारद्वारा "अजायमानो बहुधा विजायते" इति श्रुत्या चाकर्मकृतस्वेच्छोपात्तदिव्यविग्रहयोगेन जायमानत्वस्यापि परमात्मनि सम्भवात्स एव द्युभ्वाद्यायतनमिति सिद्धान्त इत्याहुरित्यर्थः। ननु "नानुमानं" इति सूत्रे प्रधान-निरासप्रतीतेर्जीव एवेति कथं पूर्वपक्ष इत्यतः, श्रुतप्रकाशोक्तमनु-वदति—**गौणश्चेदिति**। तत्र हि "तदैक्षत" इतीक्षणं प्रधाने गौणमिति शङ्किते "अनेन जीवेनात्मना" इत्यात्मपदप्रयोगात्तस्य जडे अयोगादित्युक्तेरिति भावः। "नानुमानं" इति प्रधाननिरा-सो दृष्टान्तत्वेनोपयुज्यते, यथा प्रधानं न भवति तथा प्राणभृज्जी-वोऽपि नेतीति भावः। **रुद्रादीति**। रुद्रवाय्वादेरपीशशब्दसमा-ख्याभ्यां प्राप्तिभावादिति भावः। **नानुमानमिति सूत्र इति**। दृष्टान्तत्वकल्पनं त्वयुक्तं, कल्पकाभावादतिशयाभावाच्चेति भावः।

चन्द्रिका

"अस्मिन्नस्य च तद्योगं शास्ति" इत्यादौ मुक्तोपसृप्यत्वस्यापि जीवव्यावर्तकताया उक्तत्वेन मुक्तोपसृप्यत्वेनोक्ते तस्मिन् जीवत्वशङ्काया अप्यनुदयाच्च। जायमानत्वादिनिरवकाशलिङ्गैर्मुक्तोपसृप्यत्वस्य गौणत्वे तैरेवात्मशब्दोऽपि 'प्रकाशात्मा प्रदीपः' इत्यादाविवान्यार्थोऽस्तु। प्रत्युतास्मदादिजीवेऽनुभवविरुद्धं द्युभ्वाद्यायतनत्वं, प्रधाने तु सर्वोपादाने तद्युक्तम्। किञ्चाद्यसूत्रे 'स्वशब्दात्' इत्यस्य ब्रह्मासाधारणशब्दादित्यर्थ इति त्वयोक्तत्वात् 'स्वशब्दात्' इत्यनेनैव "अमृतस्यैष सेतुः" "यस्सर्वज्ञः" इत्यादेरिव मुक्तोपसृप्यत्वादिशब्दस्यापि ग्रहणसम्भवात मुक्तोपसृप्यत्वादिसूत्रवैयर्थ्यम्। ननु "अदृश्यत्वादि" इत्यत्र "यत्तदद्रेश्यं" इत्यादेर्ब्रह्मपरताया उक्तत्वात् तत्प्रकरणस्थस्य "यस्मिन्द्यौः" इत्यादेरपि सा सिद्धेतीद-

प्रकाशः

**अस्मिन्निति**। रसशब्दनिर्दिष्टेऽस्मिन् आनन्दमये अस्य जीवस्य तल्लाभादानन्दयोगं शास्ति "रसो वै रसः रसं ह्येवायं लब्ध्वानन्दी भवति" इति शास्त्रमतो न जीव इत्यर्थोक्तेरिति भावः। **प्रकाशेति**। तत्र यथा स्वरूपार्थत्वमात्मशब्दस्य, तथा जीववज्जडेऽपि प्रधाने 'ममात्मा भद्रसेनः' इतिवदात्मीये प्रधाने आत्मशब्दप्रयोग इति तन्निष्ठसूत्रव्यावर्त्यशङ्कायां त्वदुक्तरीत्या कथञ्चिदर्थोऽस्त्वित्यर्थः। एवं पूर्वपक्षं निरस्य सूत्रार्थमपि निराह— **किञ्चेति**। आदिपदेन स्थित्यदनप्रतिपादकशब्दग्रहः। उभाभ्यां उक्तं समाधिं निरस्य भाष्याद्युक्तं स्थापयितुं गतार्थत्वमाशङ्कते—**नन्विति**।

चान्द्रिका

मधिकरणं अनारभ्यमिति चेत्, अत्र परैरुक्तं, "यस्मिन्" इत्यादिकं "यत्तदद्रेश्यं" इत्येतत्प्रकरणे नास्तीति कृत्वाचिन्तयेदमारब्धम्। न च तथात्वे "प्रकरणात्" इति सूत्रायोगः, तस्य कृत्वाचिन्तात्वोद्घाटनार्थ त्वादिति। तन्न, कृत्वाचिन्तात्वस्यागतिकगतित्वात्। जायमानत्वादिलिङ्गैः प्रकरणस्याब्रह्मपरत्वेनैव वा, प्रकरणादुत्कर्षेण वा पूर्वपक्षसम्भवाच्च॥

केचित्तु—लिङ्गैः प्रकरणविच्छेदाशङ्कायां तन्निरासायेदमित्याहुः। तन्न, भाष्यटीकोक्तरीत्या "यत्तदद्रेश्यं" इत्यादेरपि जीवविषयत्वमित्येकवाक्यत्वेनैव पूर्वपक्षसम्भवे प्रकरणविच्छेदायोगात्।

प्रकाशः

**कृत्वाचिन्तयेति**। "प्रपञ्चार्थं" इति भाष्यस्य "तन्मध्यापाठितमिति कृत्वाचिन्तयेदमाधिकरणं प्रवृत्तमित्यर्थः" इति भामत्युक्तेरिति भावः। कल्पतरूक्तमाह—**नचेति**। गत्यन्तराभावादेवमाश्रीयत इत्यत आह—**जायमानत्वेति**। "अनुकृतेः" इत्याधिकरणे "असम्भवानुकार*सामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाधया तेजोधातुरेव गम्यते" इति भामत्युक्तदिशा तत्र लिङ्गात् प्रकरणबाधेन यथा पूर्वपक्षस्तथेति भावः। **उत्कर्षेण वेति**। पूषानुमन्त्रणमन्त्रस्येवास्मन्मते "अत्ता" इत्यधिकरणपूर्वपक्षोक्तदिशेति भावः।

**केचित्त्विति**। "यत्तदद्रेश्यं" इत्यादिकमस्तु उक्तरीत्या ब्रह्मप्रकरणं, "यस्मिन् द्यौः" इत्यादिकं तु जीवस्यैव प्रकरणं, इन्द्रिया-

* "अभिभवानुकार" इति मुद्रितभामतीपाठः.

चन्द्रिका

न हि जीवस्य द्युभ्वाद्यायतनत्वं शङ्कमानेनादृश्यत्वादिकं शङ्कितुमशक्यम् । त्वयाऽपि हि "सर्वत्र प्रसिद्धोपदेशात्" इत्यत्रैकवाक्यत्वाय "मनोमयः" इत्यादिवत् "सर्वं खल्विदं ब्रह्म" इत्याद्यपि जीवविषयमित्येव पूर्वपक्षितमिति ॥

प्रकाशः

धारत्वनाडीसम्बद्धत्वजायमानत्वादिजीवलिङ्गैरिति ब्रह्मप्रकरणविच्छेदशङ्कायामित्यर्थः । ननु "यत्तदद्रेश्यं" इत्यादिनोक्तमदृश्यत्वादिकमनुभवविषयतया दृश्ये जीवे कथं शङ्कितुं शक्यमित्यत आह—न हीति । द्युभ्वाद्यायतनत्वं जीवे अनुभवविरुद्धमपि शङ्कमानेन तस्यापि शङ्कितुं शक्यत्वादित्यर्थः । त्वयाऽपीति । तत्रैव अस्माभिर्विवृतमेतत् ॥

यत् कश्चिदाह—द्युभ्वाद्यायतनं वायुप्रधानजीवानां अन्यतम उत शिव इति संशये, वाय्वादिलिङ्गदर्शनेन तेषामन्यतम इति प्राप्ते, आत्मशब्दात्, मुक्तोपसृप्यत्वलिङ्गात्, "अथ परा यया तदक्षरं" इति प्रकरणाच्च शिव एवेति सिद्धान्त इति, तदपेशलं, "लोकाश्च लोकिनश्च विष्णावेवोताश्च प्रोताश्च" इति विष्णुप्रापकस्यापि सत्त्वात् । आत्मश्रुत्यादेर्भाष्योक्तवचनजातेन विष्ण्वेकनिष्ठत्वात् । रुद्रश्रुतिलिङ्गानां विष्ण्वेकनिष्ठताया भाष्य एव प्रमाणगणेन समर्थनाच्च । आथर्वणभाष्ये सर्ववेदप्रतिपाद्यत्वस्य, सर्वशब्दवाच्यत्वस्य, सर्वोत्तमत्वेन तस्यैव ज्ञेयत्वस्य प्रमाणनिचयोदाहरणेन तत्रैव समर्थितत्वात् ।

चन्द्रिका

टीकाक्षरार्थस्तु—'आरभ्याधीतत्वात्' इत्यनेनान्यप्रकरणाधीतत्वं न विवक्षितं, येनान्यप्रकरणाधीतस्याप्राकरणिकत्वानियमात् विरुद्धो हेतुः स्यात्, किन्तु स्वस्यैवोपक्रम्य पठितत्वम्। इतरत् स्पष्टम् ॥

"अतो न मिथ्याभेदपरत्वम्" इति "नानुमानं" इति सूत्रस्य अनुमानं भेदमिथ्यात्वे न मानं भेदस्य सत्यत्वप्रतिपादकशब्दात्, अनुमानमूलभूतस्य भेदमिथ्यात्वप्रतिपादकशब्दस्याभावाच्चेति वर्णकान्तरं सूचितमिति द्रष्टव्यम् ॥

प्रकाशः

विस्तरभयान्नात्र तानि लिख्यन्ते। प्रकरणस्य वैष्णवतायाः प्रागेव समर्थितत्वाच्चेति।

"प्रकरणात्" इति सूत्रे टीकायां"—"द्वे विद्ये वेदितव्ये" इति परविद्याविषयस्य वस्तुनोऽत्रारभ्याधीतत्वेनास्य विष्णुप्रकरणत्वात्" इति वाक्ये विरुद्धप्रतीतिं निरस्यन्नर्थमाह—**आरभ्येति**। **स्पष्टमिति**। उपन्यासमुखेन विवृतमिति भावः ॥

सूत्रोक्तभेदस्य मिथ्यात्वशङ्कां निरस्यान्ते "अतो न मिथ्याभेदपरत्वं श्रुतेः" इत्युक्तम्। तस्य सूत्रारूढतामाह—**अतो न मिथ्येति**। सूत्रेऽतच्छब्देन मिथ्यात्वविरोधिसत्यत्वं गृह्यत इत्युक्तं भवति। तच्छब्देनानुमानं परामृश्यार्थान्तरमाह—**अनुमानेति** ॥

इति द्युभ्वाद्यधिकरणम्.

---

# —अथ भूमाधिकरणम्—

"प्राणो वा आशाया भूयान्" इत्युक्त्वा "यो वै भूमा तत्सुखं" इत्युक्तेः तस्यैव भूमत्वप्राप्तिः, "उत्क्रान्तप्राणान्"

तत्त्वप्रकाशिका

अत्र "प्राणो वा आशाया भूयान्" इत्युपक्रमेण, "विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नाम" इति श्रुत्या च वायुविष्णुसाधारण-भूमनाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः। श्रुत्या-दिसङ्गतिं विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं दर्शयति—**प्राण** इति। आनन्दमयाधिकरणे पूर्णानन्दत्वं विष्णोरुक्तम्। त-च्छन्दोगश्रुतौ भूम्नः प्रतीयते, "यो वै भूमा तत्सुखं नाल्पे सुख-मस्ति भूमैव सुखम्" इति। तस्य च भूम्नो विष्णोरितरत्वे प्रागु क्तानन्दमयत्वं चेतरस्यैव प्रसज्येतेत्यवश्यं निर्णेयत्वम्। स भूमाऽत्र विषयः। किं विष्णुरुत वायुरिति सन्देहः। पूर्वोक्तसाधारण्यं स-न्देहबीजम्। मुख्यप्राणोऽयं भूमेति पूर्वः पक्षः, अत्र नामवागा दितारतम्यमाशावसानमुक्त्वा, "प्राणो वा आशाया भूयान्" इति प्राणस्याशोत्तमत्वं चाभिधाय, तदुत्तममनुक्त्वा भूम्न आम्नातत्वात्। न च विष्णोरपि भूमत्वस्य श्रुत्यन्तरे प्रसिद्धत्वादत्र वाच्यत्वमिति वा-च्यम्, उपक्रमात्समाख्याया दुर्बलत्वात्। अतो वायोरेव भूमत्वा-त्तस्यैवानन्दमयत्वमिति भावः। ननु "प्राणो वा आशाया भूयान्" इत्युक्तप्राणशब्दस्य "अत एव प्राणः" इत्युक्तरीत्या विष्णुपर-त्वाद्विष्णोरेव भूमत्वमित्यत आह—**उत्क्रान्तेति**। नायं प्राणश-

इत्यादितल्लिङ्गात्प्राणशब्दश्च वायुवाचीति । अतो वक्ति—

**॥ ओम् भूमा सम्प्रसादादध्युपदेशात् ओम् ॥ ८ ॥**

'सम्प्रसादात्' पूर्णसुखरूपत्वात् 'अध्युपदेशात्' सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा ।

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥
विश्वतः परमां नित्यं.................... ।

तत्त्वप्रकाशिका

ब्दो विष्णुवाची, किन्तु वायुवाच्येव, तत्र "उत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत्" इत्यादौ प्राणस्योत्क्रमणादिश्रवणात्, तस्य वायोरेव सम्भवात्, सर्वगते हरावसम्भवादित्यर्थः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—**अत इति** । विष्णुरेवायं भूमा, "यो वै भूमा तत्सुखम्" इति भूम्नः पूर्णसुखरूपत्वाभिधानात्, नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्चेत्यर्थः । न च वाच्यं अत्र भूम्नः सुखरूपत्वमेवोच्यते, न तु पूर्णसुखत्वमिति, निरुपपदसुखशब्दमात्रस्यापि पूर्णसुखार्थत्वात् । पूर्णसुखत्वादिकं च कुतो विष्णुत्वनिश्चायकमित्यत आह—**सहस्रेति** । 'विश्वशम्भुवम्' पूर्णसुखाश्रयम्, 'विश्वतः परमां' सर्वतः परममकारवाच्यमित्यर्थः । न च सर्वोत्तमत्वं वायोरपि, विरोधादेव । नापि पूर्णानन्दत्वम्,

अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिनः ।

इति हि श्रुतिः । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ॥ ८ ॥

## ओम् धर्मोपपत्तेश्च ओम् ॥ ९ ॥

सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥

तत्त्वप्रकाशिका

इत्युक्तत्वात् । उपक्रमे प्राणशब्दश्रवणात् कथं भूमा विष्णुरिति चेन्न, प्राणशब्देनापि विष्णोरेवोक्तत्वात्, अनन्तरमन्यमनुक्त्वोक्तभूम्नोऽपि विष्णुत्वसम्भवात् । अत्र प्राणशब्देन विष्ण्वङ्गीकारे प्रागुक्तोत्क्रमणादिविरोध इति, तत्राह—तमिति । सर्वगतस्यापि विष्णोरूपान्तरविवक्षयोत्क्रमणस्य श्रुतिसिद्धत्वात्प्राणपदेन विष्ण्वङ्गीकारेऽपि न लिङ्गविरोध इति भावः । अस्तु वाऽयं प्राणो वायुरेव, तथाऽपि न तस्य भूमत्वप्राप्तिः, "एष तु वा अतिवदति" इत्यादिना प्रश्नाद्यध्याहारेण प्राणाद्विष्णोर्भूयस्त्वमुक्त्वा भूम्न आम्नानात् । न चैतदर्थद्वयं विरुद्धम्, अन्तर्यामिविवक्षया प्राणपदेन विष्णोरुक्तेः "आत्मन आकाशः सम्भूतः" इत्यादिवत् ॥ ८ ॥

युक्त्यन्तरेण विष्णोर्भूमत्वप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे—धर्मेति । "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वं यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि" इत्यादिना भूम्नि सर्वगतत्वादिधर्मश्रवणाच्चासौ विष्णुरेव, तेषां विष्णावेवोपपत्तेरित्यर्थः। अतो विष्णुरेव भूमेति तस्यैवानन्दमयत्वमिति सिद्धम् ॥९॥

चन्द्रिका

## ओम् भूमा सम्प्रसादादध्युपदेशात् ओम् ॥

अत्र यद्यपि भूमशब्दो बहुशब्दात् "बहोर्लोपो भू च बहोः" इति भावे निष्पन्नः, बहुत्वसङ्ख्या च लोकतोऽन्यत्र प्रसिद्धा ।

प्रकाशः

ओम् भूमा सम्प्रसादादध्युपदेशात् ओम् । अत्र टीकायां "प्राणो वा आशाया भूयान्" इत्युपक्रमेण, "विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नाम" इति श्रुत्या च वायुविष्णुसाधारणस्य भूमनाम्नः" इत्याद्युक्तम् । तच्च न्यायविवरणटीकायां "ननु भूमशब्दो भाववाची, तत्कथं धर्मिणोः शङ्क्यते, कथञ्च 'भूयान्' इत्यनेन समानार्थः, कथं च नामात्मकः, नैवं, "यो वै भूमा तत्सुखं" इत्युत्तरवाक्यपर्यालोचनया भावभवित्रोरभेदाभिप्रायेण भवितृविषयतावगमात्" इति ग्रन्थेनाक्षिप्य समाहितम् । तद्विवरीतुकामः तदाक्षेपसमाधानयोरन्यत्रप्रसिद्धत्वशङ्काव्युदासोऽपि फलमिति भावेनाक्षेपमनूद्य समाधिं च प्रपञ्चयति—**अत्र यद्यपीत्यादिना, न स्वतोऽन्यत्रप्रसिद्धतेत्यन्तेन** । बहुशब्दात् "पृथ्वादिभ्य इमनिज्वा" इति सूत्रेण भाव इमनिच्प्रत्यये सति, "बहोः" इति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः, बहुशब्दस्य 'भू' इत्यादेशश्चेति विधानात् भूमेति रूपमिति भावः । 'अन्यत्र' सेनावनादौ । गुहानयन्यायेन भगवत्यप्यस्ति प्रसिद्धिरित्यतो 'लोकतः' इत्युक्तम् । यथा प्राचीनवैश्वानरनाम्नो लोकतोऽन्यत्र

चन्द्रिका

तथाऽपि बहुशब्दस्य "बहुषु बहुवचनम्" इत्यादौ सङ्ख्यायामिव 'बह्वन्नं' इत्यादौ वैपुल्येऽपि प्रयोगात्, अत्रैव च श्रुतौ "यो वै भूमा तदमृतं यदल्पं तन्मर्त्यम्" इति बहुत्वसङ्ख्यायुक्तस्याल्पस्य भूमप्रतियोगित्वेनोपादानात्, नामादिभ्योऽधिकसङ्ख्याहीने च वागादौ "वाग्वा व नाम्नो भूयसी" "आकाशो वा व तेजसो भूयान्" इत्यादौ बहुशब्दान्निष्पन्नभूयःशब्दप्रयोगात्, प्राणो भूमेति पूर्वपक्षेऽपि सङ्ख्यार्थत्वाभावाच्च वैपुल्यार्थत्वात्, गुणादिना च वैपु-

प्रकाशः

प्रसिद्धिस्तथेति भावः। भूमशब्दस्य पूर्णपर्यायस्य धर्मिपरस्यैवात्र ग्रहणं, न पुनर्भावार्थकस्य सङ्ख्यावाचिन इति भावेन तत्र प्रयोगोपपत्ती दर्शयति—**तथाऽपीत्यादिना**। 'भूमशब्दस्य विपुलरूपधर्मिपरतैव' इत्यनेनान्वयः। तत्र हेतुः—**बहुशब्दस्य वैपुल्यार्थत्वादिति, धर्मिणि प्रयोगादित्यादिश्च**। वैपुल्यार्थत्वे हेतुः—**वैपुल्येऽपि प्रयोगादित्यादि**। 'इत्यादौ' इत्यादिपदेन

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु।

इत्यादिग्रहः। **वैपुल्येऽपीति**। उक्तं च "बहुगणवतुडतिसङ्ख्या" इत्यत्र वृत्त्यादौ "बहु ओदनं इति वैपुल्यार्थकोऽप्यस्ति" इति। उपपत्तिमाह—**अत्रैव चेति**। उपपत्त्यन्तरमाह—**नामादिभ्य इति**। 'पूर्वपक्षेऽपि' इत्युभयसाधारण्यकथनाय। एवमग्रेऽपि।

चन्द्रिका

ल्यस्य ब्रह्मण्यपि सम्भवात्, इहैव च श्रुतौ भूमशब्दस्य "यो वै भूमा तदमृतं" "यो वै भूमा तत्सुखं" "स एवाधस्तात् स उपरिष्टात्" इत्यादौ धर्मिणि प्रयोगात्, पूर्वपक्षेऽपि च धर्मिपरत्वात्, टीकानुव्याख्यानयोश्च नामत्वोक्त्या धर्मिणि रूढेरभिप्रेतत्वात्, व्याकरणस्य च साधुत्वान्वाख्यानपरत्वात् भूमशब्दस्य विपुलरूप-

प्रकाशः

वैपुल्यार्थत्वं भूमशब्दस्य समर्थ्य वैपुल्ययुक्तधर्मिपरत्वं साधयति—इहैवेति। टीकानुव्याख्यानयोश्चेति। टीकायां स्पष्टम्। अनुव्याख्याने तु—"लिङ्गं साधारणं शब्दौ" इति शब्दपदेन नामत्वोक्तेरिति भावः। रूढेरिति। तथा चाव्युत्पन्न एवायमखण्डः शब्द इत्युक्तं भवति। पाणिनीयव्युत्पादनस्य तर्हि का गतिरित्यत आह—व्याकरणस्य चेति।

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः॥

इत्युक्तेः स्वरसंस्कारमात्रार्थत्वाच्चेत्यपि ध्येयम्। अत एव "स एषोऽणिमा" "धातुः प्रसादान्महिमानमीशम्" इत्यादिश्रुतिषु

स चाह भूमा परमेष्ठिनं प्रभुं बद्धाञ्जलिं सस्मितपूर्वया गिरा।

इत्यादिस्मृतिषु च प्रयोगो धर्मिणि बहुलमुपलभ्यते। क्वचित्तु "तत्सिद्धिजातिसारूप्यप्रशंसाभूम" इति जैमिनीये "आध्यात्मसम्बन्धभूमा" इत्यत्र च धर्मेऽपि प्रयोगात्तदर्थत्वाच्च व्याकरणस्य

चन्द्रिका

धार्मिपरतैव, न त्वनेकपरता, न वा बहुत्वानेकत्ववैपुल्यरूपधर्मपरतेति न स्वतोऽन्यत्रप्रसिद्धता। नाप्यन्यत्रप्रसिद्धप्राणश्रुतिसाहित्यादन्यत्रप्रसिद्धत्वं, तस्याः "अत एव प्राणः" इत्यत्रोक्तब्रह्मपरतामुपेत्योत्क्रमणादिलिङ्गादेवेह पूर्वपक्षकरणात्। उत्क्रमणलिङ्गसाहित्यादन्यत्रप्रसिद्धता तु पूर्ववन्निरसनीया। उभयत्रप्रसिद्धत्वं तु"—"प्राणो

प्रकाशः

इत्यपि ध्येयम्। स्वत इति। श्रुतिलिङ्गसाहित्यं विनेत्यर्थः। प्रकारान्तरेण जातामन्यत्रप्रसिद्धत्वशङ्कां "—"प्राणो वा आशाया भूयान्" इत्युक्तप्राणशब्दस्य "अत एव प्राणः" इत्युक्तरीत्या विष्णुपरत्वात्" इत्यादिटीकासूचितपरिहारेण निराह—**नापीति**। यथाऽऽदित्यश्रुतिसाहित्यात्सर्वगतत्वस्यान्यत्रप्रसिद्धत्वं तथेह न शङ्क्यं, तत्रादित्यश्रुतेरन्तर्नये साक्षादश्रवणेन वा, लोकतोऽन्यत्र प्रसिद्ध्याश्रयणेन वा, संवत्सरसारत्वादिलिङ्गवशेनादित्यश्रुतेरन्यत्रप्रसिद्धत्वेन वा, तत्साहित्येनान्यत्र प्रसिद्धेः सर्वगतत्वस्योक्तावपि नेह तथेति भावेनोक्तं—**ब्रह्मपरतामुपेत्येति**। **पूर्ववदिति**। समाख्याश्रुतितौल्याभावस्यान्यत्रप्रसिद्धलक्षणानुप्रवेशादत्र च तत्तौल्यस्यैव वक्ष्यमाणदिशा सत्त्वेन वा, स्वत एवान्यत्रप्रसिद्धत्वस्यान्यत्रप्रसिद्धलक्षणत्वादिह च तदभावस्योक्तत्वान्न लिङ्गसाहित्येनान्तर्यामित्व इवान्यत्रप्रसिद्धत्वं शङ्कनीयमिति निरसनीयमित्यर्थः। "प्राणो वा आशाया भूयान्" इत्यादिटीकोक्तेर्विशेषविवक्षया मूलमाह— **उभयत्रेति**।

चन्द्रिका

वा आशाया भूयान्" "विष्णुर्वै देवेभ्यो भूयान् तस्माद्भूयान्नाम" इत्यादेर्भूमशब्दोऽज्ञानां साधारणः" इति न्यायविवरण एवोक्तम्। ननु "प्राणो वै" इत्युपक्रमात् "विष्णुर्वै" इति समाख्यायाः दुर्बलत्वात् कथं ततः साधारण्यमिति चेत्, न, समाख्यायाः साभ्यासत्वात् सोपपत्तिकत्वाच्चादौर्बल्यात्। अत एव न्यायविवरणे समाख्यायामभ्यासोपपत्ती उक्ते। यद्वा–उपक्रमसमाख्ययोर्बलाबलाज्ञानदशायां साधारण्यम्। अत एव न्यायविवरणे 'अज्ञानां' इत्युक्तम्।

प्रकाश

न्यायविवरणेऽत्र टीकायां च "तस्माद्भूयान्नाम" इत्यंशोक्तेरुपयोगं, "आसन्नस्योपक्रमस्यानासन्नायाः समाख्यायाश्च कथं साधारण्यप्रतीतिहेतुत्वमिति चेत्" इति न्यायविवरणटीकास्थशङ्कातात्पर्याभिव्यक्तिपूर्वकमाह—**नन्वित्यादिना। साभ्यासत्वादिति।** 'भूयान्' इत्यस्य द्विः श्रवणात् 'तस्मात्' देवेभ्यो भूयस्त्वादित्युपपत्त्युक्तेरिति भावः। अस्मिन् पक्षे 'अज्ञानां' इत्येतन्नापेक्ष्यमेवेति वा, पूर्वोत्तरपक्षनिर्णायकानभिज्ञानामित्यर्थकं वा नेयम्। अत एव टीकायां 'अज्ञानां' इत्यस्यानुक्तिरिति भावः। इदानीं "अज्ञानामित्युक्तत्वात्" इति न्यायविवरणटीकां विवृण्वन् 'अज्ञानां' इत्युक्तचनुरोधेन समाध्यन्तरमाह—**यद्वा—उपक्रमेति।** प्राणशब्दस्य"—"अत एव प्राणः" इत्युक्तरीत्या विष्णुपरत्वात्" इति टीकासूचितं समा-

चन्द्रिका

यद्वा—विष्णौ प्राणशब्दसमन्वयस्योक्तत्वेनोपक्रमस्य सम्भावितावकाशत्वात्, समाख्यास्थविष्णुशब्दस्य च प्राणे तदनुक्तेः, तयोस्तुल्यबलत्वम्। 'अज्ञानां' इत्युक्तिस्तु सिद्धान्तन्यायाननुसन्धानाभिप्राया। यद्यपि विष्णुपक्ष इव प्राणपक्षेऽपि "प्राणो वाव सर्वेभ्यो भूयान्" इति समाख्याऽस्ति, तथाऽपि तस्या उपासकेषु प्राणस्य भूयस्त्वपरत्वेन सर्वेभ्यो भूयस्त्वपरत्वाभावात्, प्राणप्रापके उपक्रमे सति समाख्याया अनादरणीयत्वाच्च न तया साधारण्यमुक्तम्। द्युभ्वाद्यधिकरणे तु रुद्रादिप्रापकोपक्रमाभावात् समा-

प्रकाशः

ध्यन्तरमाह—**यद्वा—विष्णाविति**। ननु पूर्वत्रैवात्रापि समाख्याश्रुतिद्वयेनोभयत्रप्रसिद्धिसम्भवे श्रुत्युपक्रमयोः क्लेशेन तौल्यमुपपाद्य कुतस्साधारण्यमुपपाद्यते। न च वायुसमाख्यातो विष्णुसमाख्यायाः प्रागुक्तरीत्या बलवत्त्वात्तत्रापि 'अज्ञानां' इत्युपपादनीयमिति वाच्यं, "प्राणो वा व सर्वेभ्यो भूयान् न प्राणात् भूयान् प्राणो ह्येव भूयांस्तस्माद्भूयान्नाम" इति श्रुतेरपि साम्यासोपपत्तिकत्वादिति भावेनाक्षिप्य समाधत्ते—**यद्यपीति**। **उपासकेष्विति**। "इयदामननात्" इत्यत्र भाष्ये तदर्थ एवोदाहृतत्वादिति भावः। ननु श्रुतौ उपासकात् भूयस्त्वस्याप्रतीतेः श्रुत्यन्तरात्तथा कल्पनस्य विलम्बितत्वादापाततः साधारण्यमस्तीत्यनुशयादाह—**प्राणप्रापक इति**। प्रागप्येवं स्यात्, वैरूप्यं कुत इत्यत आह—**द्युभ्वादीति**।

चान्द्रिका

ख्यया तदुक्तिः। यद्यपि "सर्वत्र प्रसिद्ध" इत्यादावपि "त स्यैतस्यासावादित्यो रसः" इत्युपक्रमे आदित्यश्रुतिरस्ति, तथाऽपि ब्रह्मणस्सर्वभूतगतत्वरूपाल्पौकस्त्वस्य पूर्वपक्षिणा क्काप्यनङ्गीकारेण ब्रह्मणि समाख्याया अभावात्तस्यान्यत्रप्रसिद्धता। इह तु समाख्याश्रुतौ विष्णोर्भूयस्त्वेऽपि, न विषयवाक्ये स भूमेति पूर्वः पक्षः। अत एवात्र टीकायां "न च विष्णोरपि भूमत्वस्य श्रुत्यन्तरे प्रसिद्धत्वादत्र वाच्यत्वमिति वाच्यं, उपक्रमात्समाख्याया दुर्बलत्वात्" इति ग्रन्थे समाख्या विष्णुपरेत्यङ्गीकृत्य पूर्वपक्षितम्। टीकायां 'वायोरेव भूमत्वात्' इत्यवधारणं तु विषयवाक्ये वायोरेव भूमत्वाभिप्रायम्, अत्र प्राणश्रुतिर्विष्णुपराचेत्तत्रापि विष्णुश्रुतिः प्राणपरा स्यादित्यभिप्रायं वा।

प्रकाशः

उक्तसाधारण्यस्यातिप्रसङ्गमाशङ्क्याह—**यद्यपीति**।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः।

इत्यादौ सर्वगतत्वं प्रसिद्धं, तथाऽप्यत्राभिप्रेतस्यार्भकौकस्त्वस्य क्काप्यसम्मतेरित्यर्थः। प्रकृते तु नैवमिति सोपष्टम्भमाह—**इह त्विति**। भूमशब्दस्य रूढत्वोक्तेर्भावप्रत्ययान्तत्वासम्मतेः 'भूमत्वस्य' इति साधु। तर्ह्यवधारणायोग इत्यत आह—**वायोरेवेति**। न तु सर्वत्रेत्यर्थः। पूर्वपक्षे प्राणश्रुतेः निरवकाशत्वयुक्तिसूचनार्थं वा तादित्याह—**अत्रेति**। नन्वेवं विषयवाक्ये वायोरेव भूमत्वामित्याशय-

चन्द्रिका

टीकोक्त आनन्दमयाक्षेपस्तु, समाख्याश्रुतौ विष्णोर्भूयस्त्वेऽपि पूर्णानन्दत्वस्य "यो वै भूमा तत्सुखं भूमैव सुखं नाल्पे सुखमस्ति" इति भूमरूपवायोरन्यत्र निषेधादानन्दमयश्रुतेश्च वायुपरत्वे तदयोगाद्युक्तः। तस्मात् भूमशब्दस्य साधारण्याद्युक्ता पादसङ्गतिः। अवान्तरसङ्गतिस्तु—"स एवाधस्तात् स उपरिष्टात् एवं विजानन्नात्मरतिरात्मक्रीडः यो वै भूमा तदमृतम्" इत्यादिना भूम्नुचक्तस्य सर्वगतत्वादेः,

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण।

अधश्चोर्ध्वं च प्रसृतं आत्मक्रीड आत्मरतिः॥

इत्यादिना द्युभ्वाद्यायतनेश्रवणात् भूम्नोऽन्यत्वे द्युभ्वाद्यायतनमप्यन्यत् स्यात् इति पूर्वाक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकी।

प्रकाशः

वर्णनेऽन्यत्रानन्दमयस्य विष्णुत्वेऽप्यदोषात्तदाक्षेपायोग इत्यत आह—**टीकेति**। इयता ग्रन्थेनोक्तस्य फलमाह—**तस्मादिति**। एवं "अस्ति शास्त्रादिसङ्गतिः" इति टीकामुपपाद्यांशोपपादनेन विवृत्य "श्रुत्यादिसङ्गतिः" इत्यादिटीकया तुल्यन्यायतया सूचितामव्यवहितपूर्वाधिकरणसङ्गतिं स्वयमाह—**अवान्तरेति**। सर्वगतत्वात्मक्रीडत्वामृतत्वादिधर्माणामुभयत्र श्रवणाद्भूम्नोऽन्यत्वे प्राक्तनस्यापि तथात्वं स्यादित्याक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकीत्यर्थः। न च निर्णीतब्रह्मप्रकरणगतसर्वगतत्वादिबलेन भूम्न एव विष्णुत्वं स्यादिति वाच्यं,

प्रकाशः

उत्क्रमणालिङ्गस्य हरावयोगेन निरवकाशतया तदनुरोधेन भूम्नोऽन्यत्वे सर्वगतत्वादेरप्यन्यधर्मताऽवश्यभावात्, द्युभ्वाद्यायतनत्वादेः वायावप्युपपत्तेः, जायमानत्वलिङ्गस्याप्यक्लेशेनोपपत्तेः, भूम्नो विष्णुत्वनिर्णयं विना तस्य ब्रह्मप्रकरणत्वानिर्णयाच्चेति भावः। यद्यपि सर्वगतत्वामृतत्वे एव भूमवाक्ये श्रुते, 'आत्मक्रीडः' इत्यादिकं तु "अथात आत्मादेशः" इत्यत्रोपरितनवाक्ये श्रुतं, तथाऽपि भूमात्मनोरभेदाभिप्रायेणैवमुक्तम्। यद्यपि आत्मक्रीडत्वादिकमुपासकधर्मः। यदाहुः—"आत्मरतिः भगवद्रतिः" इति,

तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत्।

इति च। तथाऽप्युपासकक्रीडादिहेतुत्वं तद्धर्म इत्याशयेनैवैतदुक्तिः। एतेनात्मशब्दात् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम्; तत्रात्मशब्दः प्राणेऽनैकान्तिकः, "तरति शोकमात्मवित्" इत्यत्राब्रह्मणि प्राणे प्रयोगादित्याक्षेपिकीति कल्पतरूक्तं निरस्तम्। 'आत्मवित' इत्यस्याध्यायादौ श्रुतत्वेन भूम्नि साक्षादश्रुततया तदाक्षेपायोगात्। प्राणादेरब्रह्मत्वेऽपि "अथात आत्मादेशः" इत्यथशब्देन प्राक्तनप्राणप्रकरणविच्छेदेनोक्तात्माभिप्रायेण 'आत्मवित्' इत्यस्य उपपत्तेः। भूमगतत्वेन भूमवाक्य एव श्रुतामृतत्वादिमुखेनाक्षेपस्यैवोचितत्वाच्च। यत्तु श्रुतप्रकाशे—यथा प्रकरणाविच्छेदेन परमात्मपरत्वं साधितं, तथा जीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कोत्थानात् सङ्गति-

चन्द्रिका

टीकायां तु समन्वेतव्यभूमशब्दसन्निहितत्वात् पूर्णानन्दत्वस्य तदाक्षिप्तम्।

अत्र "यो वै भूमा तत्सुखं" इत्युक्तो भूमा किं

प्रकाशः

रित्यादि, तदपि तेनैव निरस्तम्। अमृतत्वादिरनाक्षेपे पूर्वनिर्णीतब्रह्मधर्मैः भूमा ब्रह्मेत्यपि वक्तुं शक्यत्वेन पूर्वपक्षानुदयप्रसङ्गात्। पूर्वं प्रकरणविच्छेदशङ्काया एवायुक्तत्वादित्युक्तत्वाच्चेति। आनन्दमयाक्षेपटीका तु प्रयोजनपरेति भावः। ननूक्तरीत्या सन्निहितपूर्वाक्षेपे सङ्गतिफलयोर्द्वयोरपि सम्भवात् किं व्यवहिताक्षेपेणेत्यत आह—**टीकायां त्विति॥**

विषयसंशयटीकां व्यनक्ति—**अत्रेति।** छान्दोग्ये सप्तमेऽध्याये नारदकृतप्रश्नं प्रति सनत्कुमारोक्तोत्तरत्वेन नामवाङ्मनस्सङ्कल्पचित्तध्यानविज्ञानबलान्नातेजआकाशस्मराशाप्राणशब्दवाच्यान् उषास्वाहापर्जन्यमित्राग्निवरुणचन्द्रभूतवाय्वनिरुद्धप्राणपुरन्दरोमाशिवसरस्वतीमुख्यप्राणानुत्तरोत्तरातिशयितत्वेनोक्त्वाऽनन्तरं नारदप्रश्नमन्तरेणैव "एष तु वा अतिवदति यस्सत्येनातिवदति" इति उपक्रम्य सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखपर्यन्तानुक्त्वा वक्ति सनत्कुमारः "यो वै भूमा **तत्सुखं** नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः" इति, "भूमानं भगवो विजिज्ञासे" इति, "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमाऽथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पं यो वै भूमा तदमृतं

चन्द्रिका

मुख्यवायुरुत विष्णुरिति चिन्ता। तदर्थं "तत्सुखं" इत्युक्तं पूर्णसुखत्वं किं वायोरुत विष्णोरिति। तदर्थं भूम्नो ब्रह्मत्वे प्राणात् भूयस्त्वानुक्तिरयुक्ता उत युक्तेति। तदर्थं "प्राणो वा आशाया भूयान्" इत्युक्तः प्राणः किं मुख्यवायुः उत ब्रह्मेति। प्राणस्य मुख्यवायुत्वे हि वायुतो ब्रह्मणो भूयस्त्वं वक्तव्यमिति तदनुक्तिरयुक्ता, ब्रह्मत्वे तु स्वस्मात्स्वस्य भूयस्त्वस्यावक्तव्यत्वेन तदनुक्तिः

प्रकाशः

अथ यदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि, यदि वा न महिम्नीति, गोअश्वमिह महिमेत्याचक्षते। हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमीति होवाच। अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति स एवाधस्तात् स एवोपरिष्टात् स पश्चात्स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वं" इत्यादि। स भूमा विषय इत्यर्थः। **मुख्यवायुरिति**। जडत्वकोटेरग्रे निरासिष्यमाणत्वादिति भावः। **पूर्णसुखत्वमिति**। अत्र सुखशब्दस्य तादृशसुखवाचित्वं सिद्धान्ते स्पष्टयिष्यते। **भूयस्त्वेति**। 'अस्ति वाव प्राणाद्भूयः' इत्यादिप्रश्नप्रतिवचनरूपेण भूयस्त्वानुक्तिरित्यर्थः। अस्पष्टांशे फलफलिभावमाह—**प्राणस्येति**। द्वाविह पूर्वपक्षौ, प्राणभूम्नोर्भेद इत्येकः, अभेद इत्यन्यः। तत्राद्यो न्यायविवरणानुसारी, द्वितीयो भाष्यानुसारी। तत्राद्ये भूयस्त्वानुक्तिः पूर्वपक्षयुक्तिः, अन्त्ये चोत्क्रमणालिङ्गमिति व्यवस्थेति ज्ञापनाय प्राणस्य

चन्द्रिका

युक्ता । तदर्थं "उत्क्रान्तप्राणान्" इति प्राणे श्रुतमुत्क्रमणं किं ब्रह्मणि न युक्तमुत युक्तमिति ॥

प्रकाशः

ब्रह्मत्वपक्षे भूयस्त्वानुक्तिघटनाय मध्ये फलफलिभावं प्रदर्श्य लिङ्गविषयां चिन्तां पश्चादाह—तदर्थमुत्क्रान्तेति । उत्क्रान्तः प्राणो येषां तानुत्क्रान्तप्राणान् । "शूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहासीति मातृहासीति" इति प्राणप्रकरणे प्राणस्यान्वयव्यतिरेकाभ्यां जीवनदत्वमुपपादयितुं श्रुतमुत्क्रमणमित्यर्थः । नन्वेवं "उत युक्ता" इत्यन्तचिन्तात्रयं प्रदर्श्य पश्चात् 'भूमा मुख्यवायुरुत विष्णुरिति चिन्ता, तदर्थं प्रक्रमे श्रुतः प्राणः किं मुख्यवायुरुत ब्रह्मेति, तदर्थं "उत्क्रान्त" इत्यादिचिन्ता' इत्यपि चिन्तात्रयं प्रदर्शनीयमिति चेन्मैवं, यदि प्राणभूम्नोर्भेदाभेदपक्षौ व्यवतिष्ठेयातां, तदैवं भवेत् । नचैवं, तयोरग्रे टीकारीत्या समुच्चयोक्तेः । अत उक्तप्रकारेणैव चिन्तापरम्परोपदर्शिता । तथा चायमर्थः—यदि प्राणे श्रुतं उत्क्रमणलिङ्गं वक्ष्यमाणदिशा सर्वगते ब्रह्मणि न युक्तं, तदोपक्रमे श्रुतस्य प्राणस्य वायुत्वात्ततोऽपि ब्रह्मणः श्रेष्ठत्वेन सिद्धान्तिनोपगतत्वात्प्रश्नप्रतिवचनाभ्यां प्राणाद्भूयस्त्वस्य वाच्यत्वेन तदनुक्तेरयुक्तत्वात्तस्यैव पूर्णसुखत्वं भूमत्वं चेति पूर्वपक्षे फलम् । यदा तु रूपविशेषादिना युक्तं, तदा प्राणस्य ब्रह्मत्वात्स्वस्मात्स्वस्य भूयस्त्वायोगेन तदनुक्तेर्युक्तत्वात् पूर्णसुखत्वं भूमत्वं च

प्रकाशः

विष्णोरेवेति सिद्धान्ते फलमिति । नन्वेवं "व्यतिहारो विशिंषन्ति हीतरवत्" इत्येतदवक्तव्यं प्राप्नोति । मैवं, भेदपक्ष एव तस्य प्रवृत्तेः । अभेदपक्षेऽपि प्राणान्तर्यामितयैवात्र प्राणपदेन ब्रह्मणः स्वीकारेण प्राणशब्दस्य मुख्यप्राणार्थकत्वस्यापि भावेन भूम्नः केवलं ब्रह्ममात्रत्वसिद्धये प्राणासाङ्कर्याय व्यतिहारस्यावश्यं वाच्यत्वाच्चेति । नन्वेवं प्राण एव संशयधर्मीक्रियतां, सूत्रे च प्राणपदमेव निवेश्यताम् । उभयत्र प्रसिद्धिश्च प्राणपदस्य "आकाशोऽर्थान्तरत्वादि" इत्यादौ आकाशादिशब्दस्येव पूर्वोक्तत्यन्यत्रप्रसिद्धिभ्यां भविष्यति । नायं प्राणो ब्रह्मोत्क्रमणलिङ्गादिति पूर्वपक्षश्च ऋजुः । भूमा न विष्णुः तदभिन्नप्राणे श्रुतोत्क्रमणविरोधादित्युक्तिर्वक्रा । प्राणस्याविष्णुत्वात् तत्प्रकरणस्थभूम्नः पूर्णसुखस्य चाविष्णुत्वादानन्दमयोऽपि न विष्णुरिति पूर्वाक्षेपश्च भविष्यति, यथा छन्दोनये गायत्र्या अविष्णुत्वात्तदभिन्नस्य "परो दिवो ज्योतिर्दीप्यते" इति ज्योतिषस्तथात्वेन "ज्योतिर्हृदय आहितं यत्" इत्युक्तज्योतिषोऽप्यविष्णुत्वमिति, तद्वदिति चेन्मैवं, भूम्न उक्तौ प्रागसमन्वितशब्दसमन्वयलाभात्, पूर्वाक्षेपस्य साक्षादेव सम्भवात्, चन्द्रिकोक्तदिशा पूर्वाधिकरणसङ्गतिसौकर्यात्, सम्प्रसादाध्युपदेशधर्मोपपत्तीनां सिद्धान्तहेतूनां भूमवाक्य एव श्रवणात्, सिद्धान्तेऽपि प्राणशब्दस्य मुख्यवायुपरत्वात्याजनाच्च, अन्तरनयेऽक्षिस्थ इव भूमैव

चन्द्रिका

पूर्वपक्षस्तु—भूमा मुख्यवायुरेव, "प्राणो वा आशाया भूयान्" इति प्राणशब्देनोपक्रमात् । भूम्नो ब्रह्मत्वं हि द्वेधा भवेत्, प्राणो वायुरेव भूमा तु ब्रह्मेति प्राणभूम्नोर्भेदेन वा, प्राणो भूमा च ब्रह्मैवेति तयोरभेदेन वा । नाद्यः, प्राणादुत्तममनुक्त्वा भूम्न आम्नानात् । यदि हि नामादिभ्यो वागादिवत् प्राणात् भूमाऽन्यः स्यात्तदा "अस्ति भगवो नाम्नो भूयः" इत्यादिप्रश्नवत् "वाग्वाव नाम्नो भूयसी" इत्यादि प्रतिवचनवच्च, 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नः, 'भूमा वाव प्राणाद्भूयान्' इति प्रतिवचनं च स्यात्, भूम्नः

प्रकाशः

प्राधानेन चिन्तितो न प्राण इति ॥

प्राणभूम्नोर्भेदपक्षेऽभेदपक्षे चानुक्तिरुत्क्रमणलिङ्गं च क्रमेण पूर्वपक्षप्रापके इति भावेन, "मुख्यप्राणोऽयं भूमेति पूर्वपक्षः" इत्यादिटीकां विवृण्वन् पूर्वपक्षयति—**पूर्वपक्षस्त्विति** । 'नाम' इत्यारभ्य 'अभिधाय' इत्यन्तटीकायास्तात्पर्योक्तिः—**आशाया भूयानिति** । "प्राणशब्देनोपक्रमात्" इति टीकायामेवमनुक्त्वाऽन्यथोक्तेरुपयोगोऽग्रे स्पष्टः । "तदुत्तममनुक्त्वा भूम्न आम्नातत्वात्" इति टीका प्राणभूम्नोर्भेदपक्ष एव योज्येति भावेन विकल्पयति—**भूम्न इति** । "तदुत्तमं" इत्यादिटीकां योजयति—**नाद्य इत्यादिना** । ननु प्राणाद्भूयसोऽनुक्तिर्न प्राणस्य भूमत्वसाधिका, विद्यमानस्यापि प्राणादुत्तमस्यानुक्तिसम्भवात् । अतोऽप्रयोजको हेतुरित्यत आह—**भूम्न इति** ।

चन्द्रिका

सर्वोत्तमत्वार्थमेव नामवागादितारतम्यस्य प्रक्रान्तत्वात् । न च यद्-र्थमन्यत्प्रक्रान्तं तदनुक्तिर्युक्ता । अत एव टीकायां "तारतम्यमाशावसानमुक्त्वा" इत्युक्तम् । तदुक्तं न्यायविवरणे"—"प्राणो वा आशाया भूयान्" इत्युक्त्वा प्राणाद्भूयसोऽनुक्तिः" इति । विष्णुसमाख्या तु प्राणोपक्रमात् दुर्बला । न द्वितीयः, "अत एव प्राणः" इत्युक्तरीत्या प्राणशब्दस्य ब्रह्मपरत्वसम्भवेऽपि इह "उत्क्रान्तप्राणान्" इति प्राणे उत्क्रमणश्रवणात्, तस्य च पूर्णे

प्रकाशः

एवं भूयसोऽनुक्तेर्निरवकाशत्वमुपपाद्य टीकारूढं करोति—**अत एवेति** । भून्नः सर्वोत्तमत्वार्थं तारतम्यस्य प्रक्रान्तत्वादेवावश्यवक्तव्यत्वस्फोरणाय तथोक्तमित्यर्थः । भाष्येऽप्रतीतावपि टीकायामेवमुक्तेर्मूलमाह—**तदुक्तमिति** । "न च विष्णोरपि भूमत्वस्य" इत्यादिटीकार्थमाह—**विष्णुसमाख्या त्विति** । ननु समाख्याऽपि साभ्यासत्वादिना प्रबलेति चेन्न, निरवकाशानुक्तिसाहित्येन प्राणोपक्रमस्य ततोऽपि प्राबल्यमित्याशयात्। "—"ननु प्राणो वा आशाया भूयान्" इत्युक्तप्राणस्य "अत एव प्राणः" इत्युक्तरीत्या विष्णुपरत्वात्" इत्यादिटीकां व्याचष्टे—**न द्वितीय इत्यादिना** । **इहेति** । विषयवाक्ये । **उत्क्रमणश्रवणादिति** । तथा च तत्रेवात्र निरवकाशविष्णुलिङ्गाभावात्, प्रत्युत विपरीतलिङ्गभावान्न तन्न्यायविषयत्वमस्येति भावः । 'पूर्णे' देशादितो व्याप्ते देहादुत्क्रमणायोगादित्यर्थः ।

चन्द्रिका

ब्रह्मणि अयोगात् । तदुक्तं भाष्ये "उत्क्रान्तप्राणानित्यादिलिङ्गात्" इति । वायोर्भूमत्वे तु तद्युक्तम् । न हि देशतः पूर्णत्वं भूमत्वं, "वाग्वाव नाम्नो भूयसी, वाग्वाव ऋग्वेदं विज्ञापयति यजुर्वेदं स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते" इत्यादिषु वाङ्मनस्सङ्कल्पादिवाक्येषु पूर्वत्र सर्वत्र भूयस्त्वस्य गुणज्यैष्ठ्यरूपतया 'भूमा' इत्यत्रापि तस्यैव वक्तव्यत्वात् । अत एव टीकायां "प्राणस्योत्तमत्वं" इत्युत्तमशब्दः । आनन्दमये उक्तमानन्दमयस्य पूर्णत्वं च न देशतः, किन्तु नीलतमत्वविद्वत्तमत्वादिवत् सर्वस्मात् सजातीयादुत्कृष्टत्वम्, अन्यथा "ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः" इत्याद्ययोगात् । न हि मानुषाद्यानन्देभ्यो मनुष्यगन्धर्वानन्दाः देशतः शतगुणिताः । एवं विधपूर्णानन्दत्वं चा-

प्रकाशः

भाष्यं तद्व्याख्यानं चोक्तदिशा द्वितीयपक्षनिरासपरमिति भावेनाह—**तदुक्तमिति** । ननु "उत्क्रान्तिगत्यागतीनां" इत्यादौ वक्ष्यमाणदिशा वायोरप्यणुत्वात् कथं तस्य भूमत्वं पूर्णसुखत्वं वा स्यादित्यतः, "तस्य च वायावेव सम्भवात्" इति टीकां विवृण्वन्नाह—**वायोरिति** । "वाग्वाव ऋग्वेदं" इत्यादिगुणकथनम् । "स यदा मनसा" इति मनःप्रकरणगतवाक्यम् । नन्वत्र भूम्नः "स एवाधस्तात्" इत्यादिना सर्वगतत्वेन श्रुतस्य वायुत्वे वायोरपि सर्वगतत्वापत्त्या ब्रह्मणीव वायावप्युत्क्रमणमयुक्तम् । तत्रोपचरितं चे-

चन्द्रिका

णोरपि वायोर्युक्तमिति युक्तः टीकोक्त आनन्दमयाक्षेपः। न च भूम्नः "स एवाधस्तात् स उपरिष्टात् स पश्चात्" इति वाक्य शेषस्थसर्वगतत्वविरोधेनोत्क्रमणं गौणमिति युक्तं, श्रौतोत्क्रमणाविरोधेन 'अधस्तादुपरिष्टात्' इत्याद्यनेकपदसमभिव्याहाररूपवाक्यगम्यसर्वगतत्वस्यैव गौणत्वात्। ब्रह्मणस्तु सर्वगतत्वं श्रुत्यन्तरादिसिद्धम्। एवञ्च पूर्णानन्दत्वादिरूपं सिद्धान्ते हेतूक्तं सम्प्रसादादिकं पूर्वपक्षिणा वायोश्शङ्क्यत इति न भूम्नो ब्रह्मता। न च वाच्यं "अन्यभावव्यावृत्तेः" इत्यत्र ब्रह्मणो महत्त्वेऽपि अणुत्वं वक्ष्यते। अणुत्व-

प्रकाशः

ब्रह्मण्यपि तथोपेत्य भूमत्वमुच्यतामिति भावेनाशङ्क्य निराह—**न च भूम्न इति**। **गौणमिति**। मनोगतमेवात्र भातीत्यर्थः। **श्रौतेति**। 'उत्क्रान्त' इति पदश्रुत्या प्रतीतेत्यर्थः। ब्रह्मणोऽप्यत्रोक्तं सर्वगतत्वं सङ्कुचितमुपेत्य उत्क्रमणं च मुख्यमङ्गीकृत्य भूमत्वमुच्यतामित्यत आह—**ब्रह्मणस्त्विति**। "सर्वगतं सुसूक्ष्मं"

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।

इत्यादिश्रुत्यन्तर इत्यर्थः। एतेन "सर्वगते हरावसम्भवात्" इति टीका विवृता। नन्वथाऽपि "तत्सुखं" इत्युक्तपूर्णसुखत्वाद्युपदेशादिना भूमा विष्णुः किं न स्यादित्यत आह —**एवं चेति**। अधिकरणान्तरन्यायैरेवोत्क्रमणस्यापि भगवति सिद्धेः न तेनेह पूर्वपक्षोदय इति भावेनाशङ्क्य निराह—**न चेत्यादिना**। **इत्यत्रेति**। उत्तराधि-

चन्द्रिका

मेव च क्रियावत्त्वे तन्त्रं, न तु महत्त्वाभावविशिष्टं, न वा महत्त्वाभावः, गौरवादिति, महत्त्वेमवाक्रियत्वे तन्त्रं, न तु अणुत्वाभावविशिष्टं, न वा अणुत्वाभाव इत्यपि सम्भवात्। "सर्वत्र प्रसिद्ध" इत्यत्र तु सर्वगतस्यापि व्योमदृष्टान्तेनैकदेशगतत्वमुक्तं, न तु सक्रियत्वम्। "ज्योतिर्दर्शनात्" इत्यत्र तु "स समानस्सन् उभौ लोकावनुसञ्चरति" इत्युक्तं यत्कर्मवशेनोभयलोकसञ्चरणं, तत् कर्मातीतस्य ब्रह्मणो न युक्तमिति शङ्का, नेदं सञ्चरणं कर्मवशात् किन्तु स्वेच्छयेति परिहारश्च, न तु पूर्णस्य क्रियानुपपत्त्या शङ्कातत्परिहारौ। अत एव तत्र पूर्वपक्षे टीका—"जीवस्य हि कर्मवशात् उभयलोकसञ्चरणं युक्तम्" इति, सिद्धान्ते न्यायविवरणं च—"लोकसञ्चरणं तु जीवमादाय तस्यैवादुःखेन स्वा-

प्रकाशः

करणगुणसूत्रे इत्यर्थः। **न त्विति**। 'येन ब्रह्मणि महत्त्वस्यापि भावात्क्रियावत्त्वं न स्यात्' इति वाक्यशेषः। **गौरवादितीति**। 'न च वाच्यं' इति पूर्वेणान्वयः। अभावघटितत्वादिति भावः। **इत्यपि सम्भवादिति**। तथा च ब्रह्मणि सत्यप्यणुत्वे न तेनोत्क्रमणादिक्रियावत्त्वसिद्धिः, महत्त्वस्याक्रियत्वप्रयोजकस्याकाशादाविव भावादिति भावः। **उक्तमिति**। "अर्भकौकस्त्वात्" इत्यादिगुणसूत्रेणेत्यर्थः। **ज्योतिरिति**। अत्र प्रसिद्धाक्रियावत्त्वमुपेत्यैव विशेषशङ्कया तत्प्रवृत्तमित्यर्थः। 'पूर्णस्य' देशतो व्याप्तस्य।

चन्द्रिका

तन्त्रचात्" इति। न च "शास्त्रदृष्ट्या" इति न्यायेनान्तर्यामिगता क्रिया, "एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः" इत्यादिश्रुत्या तस्यापि सर्वगतत्वात्। यदि च सर्वगतस्यापि क्रिया, तदा "उत्क्रान्तिगत्यागतीनाम्" इत्यत्र जीवस्य सक्रियत्वेन अणुत्वोक्तिरयुक्ता स्यादिति ॥

प्रकाशः

**अन्तर्यामिगता क्रियेति।** प्राणसंवादादिलिङ्गवदिति भावः। **तस्यापि सर्वगतत्वादिति।** "तत्प्राण उत्क्रान्तेऽपद्यत" इत्यादिप्राणोत्क्रमणादि तु अत्रत्यन्यायेनान्तर्यामिगतत्वेन तत्राभिमतं, न तु तत्रैव तत्सिद्धमिति भावः। एतेन "सर्वगते हरावसम्भवात्" इति टीकावाक्यमणुत्ववत्यपि हरौ सर्वगते असम्भवादिति, व्योमवदेकदेशगतेऽपि हरौ सर्वगते असम्भवादिति, अन्तर्यामिण्यपि सर्वगते हरावसम्भवादित्यादिरूपेण व्याख्यातं भवति। **उत्क्रान्तीति।** द्वितीयस्य तृतीयपादे "उत्क्रान्तिगत्यागतीनाम्" इत्यत्र जीवः किं व्याप्तोऽणुर्वेति सन्देहे, "व्याप्ता ह्यात्मानः" इति श्रुतेर्व्याप्त इति प्राप्ते, "सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छति आमुष्मादिमं लोकमागच्छति" इत्युत्क्रमणगमनागमनरूपक्रियादर्शनाद्व्याप्तस्य तदयोगादणुरेव, व्याप्तत्वश्रुतेः परमात्मविषयत्वमिति वक्ष्यमाणत्वात्तद्विरोधस्स्यादित्यर्थः ॥

चन्द्रिका

सिद्धान्तस्तु—"यो वै भूमा तत्सुखं" इति भूम्नः पूर्णसुखतोक्ता। सा च "विश्वशम्भुवं" इत्यादिभाष्योक्तश्रुत्यादिभिर्विष्णवेकनिष्ठा। न हि द्वयोस्सर्वोत्कृष्टानन्दत्वं, विरोधात्।

प्रकाशः

पराभिमतहेत्वोरनुक्त्युत्क्रमणयोः सावकाशतामग्रे विवक्षुः, सूत्रोपात्तसम्प्रसादादिहेतुना भूमा विष्णुरित्युक्तिपरां "विष्णुरेवायं भूमा" इत्यादिटीकां विवृण्वन् सिद्धान्तयति—**सिद्धान्तस्त्विति**। "पूर्णसुखरूपत्वाभिधानात्, नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्च" इति टीकोक्तहेत्वोः "पूर्णसुखत्वादिकं कुतो विष्णुत्वनिश्चायकं" इत्यादिटीकोक्तनिरवकाशतां क्रमेण विवरिष्यन्नाद्यस्य तां तावदाह—**यो वै भूमेत्यादिना**। 'विश्वशम्भुवं' पूर्णसुखाश्रयमित्यर्थः।

> लक्षणं परमानन्दो विष्णोरेव न संशयः।
> अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिनः॥

इति।

> सुखं लब्ध्वा हि कुरुते लोकचेष्टां जनार्दनः।
> अल्पात्सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत्॥

इत्यादिस्मृतयः, सर्वकर्तृत्वादियुक्तयश्चादिपदार्थः। वायोरप्यस्त्वित्यत आह—**नहीति**। एतेन "नापि पूर्णानन्दत्वं" इति टीकायां 'विरोधात्' इति पदमत्राप्यनुवर्त्य योजनीयमिति सूचितम्। सर्व-

चन्द्रिका

"तत्सुखं" इत्यत्रामुख्यभूतापूर्णसुखोक्तौ तु मुख्यामुख्यन्यायबाधः। "नाल्पे सुखं" इति निषेधायोगश्च, जडे सुखस्याप्रसक्तेः, चेतने च सुखमात्रनिषेधे बाधात्। पूर्णसुखनिषेधस्तु चेतने न बाधितः।

प्रकाशः

शब्दस्यासङ्कुचितवृत्तित्वेन अन्योन्यनिरूपितोत्कर्षस्य द्वयोरयोगा दित्यर्थः। ननु 'पूर्णसुखतोक्ता' इत्ययुक्तं, अश्रवणात्सुखशब्दस्यापूर्ण-सुखार्थत्वेऽप्युपपत्तेरित्यतः, पूर्णसुखत्वाभिधानादिति हेतोरसिद्धिं परि हर्तुं प्रवृत्तां "निरुपपदसुखशब्दमात्रस्यापि पूर्णसुखार्थत्वात्" इति टीकां विपक्षे बाधकोक्त्या व्यनक्ति—**तत्सुखमिति**। "मुख्या मुख्ययोर्मुख्ये सम्प्रत्ययः" इति न्यायबाध इत्यर्थः। 'इह' सुखश-ब्दः पूर्णसुखवाचीत्यत्र।

करोति नासुखी भूमा सुखं नाल्पे सुखं भवेत्।

इत्यानन्दमयनयानुव्याख्याने 'पूर्णमेवात्र सुखं विवक्षितं, "नाल्पे सुखमस्ति" इत्युक्तत्वात्' इतीह तत्त्वप्रदीपे चोक्तदिशाऽर्थापत्तिं चाह—**नाल्प इति**। "यो वै भूमा तत्सुखं" इत्युक्त्वा "नाल्पे सुखं" इति निषिध्यते। तत्राल्पशब्देन जडं चेतनं वा वाच्यम्। आद्ये जडे सुखस्याप्रसक्तेरप्रसक्तप्रतिषेधापातात्। न च "नान्तरिक्षे न दिवि" इतिवत् नित्यानुवादः, व्यर्थत्वात्। "नान्तरिक्षे" इत्या देस्तु उपयोगोऽन्तर्यामिनये व्यक्तः। अतश्चेतन एव निषेध इति वाच्यम्। तत्र चाहं सुखीत्यादिप्रत्यक्षादिना सुखस्य प्रमितत्वेन

चन्द्रिका

किञ्चायं चरमकक्ष्यापन्नो भूमा सर्वोत्तमः, प्राणभूम्नोरभेदपक्षे "वाग्वाव नाम्नो भूयसी" इत्यादाविव प्रतियोगिविशेषानुपादानात् ।

प्रकाशः

सुखमात्रनिषेधे बाधापत्तेः । अतः "अपशवो वा अन्ये गोअश्वेभ्यः" इत्यत्र प्रशस्तपशुत्वनिषेधवत् पूर्णसुखमेव निषिध्यत इत्युपेयम्, तादृशस्य जीवे अभावेन बाधाप्रसक्तेः । अतस्तत्र सुखनिषेधान्यथानुपपत्त्या च पूर्णसुखमेव सुखशब्दार्थ इत्यर्थः । एवं सौत्रसम्प्रसादशब्दितं पूर्णसुखस्वरूपं टीकाद्युक्तमाद्यहेतुं समर्थ्याध्युपदेशशब्दितस्य सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्चेति द्वितीयहेतोरपि भूम्नि असिद्धिं परिहरिष्यन् विष्ण्वेकनिष्ठतामाह—**किञ्चेति । प्रतियोगीति ।** 'एतस्माद्भूयान्' इत्यवधिविशेषानिर्देशादित्यर्थः । ननु प्राणभूम्नोरभेदे "प्राणो वा आशाया भूयान्" इत्याशारूपप्रतियोगिविशेषोपादानमस्ति । न च तत्प्राणस्यैव न तु भूम्न इति युक्तं, द्वयोरेकत्वादिति चेन्न, प्राणशब्दस्य वायुपरत्वमुपेत्यैव तदन्तर्यामितया विष्णोः प्राणशब्दितत्वेनोपगमेनाशोत्तमत्वस्य प्राणगतत्वात्, "महतः परमव्यक्तं" इत्यादौ अन्यगतोच्चत्वनियामकत्वेन तच्छब्दार्थतया तत्र स्थितत्वस्यानुमानिकनये वक्ष्यमाणदिशा प्राणगताशोत्तमत्वादिनियन्तृतया तत्र हरेः प्राणपदेन ग्रहणात् भूमगतोत्तमत्वं प्रत्याशायाः प्रतियोगित्वाभावात् । अन्यथा वायोरुत्तमतानुक्तिप्रसङ्गात् । एवञ्च तस्यावधिविशेषमनुपादायैव

चन्द्रिका

भेदपक्षे प्राणादप्युत्तमत्वात् । "नाल्पे सुखं" इति निरुपपदाल्पस्य प्रतियोगित्वेनोपादानाच्च, असर्वोत्तमस्य कस्माच्चिदल्पत्वेन निरुपपदाल्पस्य तत्प्रतियोगित्वायोगात् । तच्च "विश्वतः परमां" इत्यादिभाष्योक्तश्रुत्यादिभिर्विष्ण्वेकनिष्ठम् । न च द्वयोस्सर्वोत्तमत्वं, विरोधात् । तस्माद्भूमा विष्णुः ।

प्रकाशः

सर्वान्ते पाठात् सर्वोत्तमत्वसिद्धिरिति भावः । एतेन "विशेषानुक्तेराखिलेशत्वमेवोक्तं भवति । न चेदमसिद्धं, नामवागादीनां पूर्वपूर्वाधिपत्यस्योक्तत्वात्" इति सुधावाक्यं विवृतं ध्येयम् । **प्राणादपीति** । सर्वोत्तमादपि प्राणादित्यर्थः । अल्पस्य भूमप्रतियोगित्वेन उपादानेऽपि कथं सर्वोत्तमत्वलाभ इत्यत आह—**असर्वेति** । एवं टीकाद्युक्तमभ्युपदेशहेतुं सुधारीत्या सर्वोत्तमत्वरूपं भूम्न्युपपाद्य, वैष्णवत्वं तस्याह—**तच्चेति** । सर्वोत्तमत्वं । "—'विश्वतः परमां' सर्वपरमं अकारवाच्यमित्यर्थः" इति टीकायां व्यक्तम् ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः

इत्यादिरादिपदार्थः । "न च सर्वोत्तमत्वं वायोरपि, विरोधादेव" इति टीकार्थमाह—**न चेति** । सर्वशब्दस्यासङ्कुचितत्वेन अन्योन्यनिरूपितोत्तमत्वस्य द्वयोर्विरुद्धत्वादित्यर्थः । सूत्राद्युक्तहेतुद्वयसमर्थनमुपसंहरन् साध्यमाह—**तस्मादिति** । सम्प्रसादादिनिरवकाशहेतुद्व-

चन्द्रिका

न च भेदपक्षे प्राणाद्भूयसोऽनुक्तिर्बाधिका, पूर्वपक्षेऽपि प्राणस्य विष्णुतो भूयस्त्वानुक्तेर्बाधकत्वात् । विष्णोरधमत्वे हि नामादिदेवेभ्य इव प्राणस्य विष्णुतोऽपि भूयस्त्वं प्रश्नोत्तराभ्यामुच्येत । तदुक्तं न्यायविवरणे—"प्राणस्य विष्णोस्सकाशात् भूयस्त्वानुक्तिः" इति ।

प्रकाशः

यादित्यर्थः । एवं साधकोक्त्या भूमा विष्णुरित्युक्त्वा पूर्ववाद्युक्ते भूयस्त्वानुक्त्युच्चक्रमणरूपे बाधके निराचिकीर्षुरनुक्तिं तावदनूद्य न्यायविवरणोक्तदिशा साम्येन तावदापादयति—**न चेत्यादिना** । विष्णुतो भूयस्त्वानुक्तेर्निरवकाशतामाह—**विष्णोरिति** । **उच्येत इति** । त्वन्मते तस्य सर्वोत्तमत्वार्थमेव नामवागादितारतम्यस्य प्रक्रान्तत्वात् । तथा च प्राणस्यैव सर्वोत्तमत्वे विष्णुतो भूयस्त्वमाशानन्तरं 'विष्णुर्वा आशाया भूयान्' इत्युक्त्वा पश्चात् 'अस्ति भगवो विष्णोर्वाव भूयान्' इति प्रश्नः, 'प्राणो वा विष्णोर्भूयान्' इति प्रतिवचनं च स्यात्, प्रश्नादिनाऽवश्यवक्तव्यस्य भूयस्त्वस्यानुक्तौ हेत्वन्तराभावात्, तदन्यथानुपपत्त्या न प्राणस्य सर्वोत्तमत्वं शङ्क्यं, किन्तु भूम्न एव तथात्वं वाच्यमिति भावः । प्राणस्य विष्णुतो भूयस्त्वानुक्तिरूपयुक्तेः टीकाकारैरत्र न्यायविवरणे सुधायां चाव्याख्यातत्वात् अत्र तां स्वयं व्याख्याय मूलारूढां करोति—**तदुक्तमिति** । "मुख्यप्राणस्य" इति न्यायविवरणपाठः । नन्वेवं भूम्नोऽपि प्राणात् भूयस्त्वानुक्त्यन्यथानुपपत्त्या न सर्वोत्त-

चन्द्रिका

न चैवमनुक्त्योस्साम्यं, "एवं विजानन्नतिवादी" इति प्राणज्ञानिनोऽतिवादित्वमुक्त्वा "एष तु वा अतिवदति यः सत्येनातिवदति" इति सत्याख्यभूमज्ञानिनस्तु शब्देन विशेषोक्त्या भूम्नः प्राणादप्यतिशयस्योक्ततया "अस्ति भगवः प्राणाद्भूयः" इति प्रश्नादेरध्याहार्यत्वेनानुक्तेरन्यथाऽप्युपपत्तेः। अत एव "गत्यन्तरविवर्जिताः" इत्यनुव्याख्याने सिद्धान्तीयानुक्तेर्निरवकाशत्वमुक्तम्।

प्रकाश

मत्वमिति सुवचं, तथा च कथं निर्णय इति भावेनाशङ्क्य निराह—**न चेति**। "एष तु वा अतिवदति" इत्यादिटीकोक्तं समाधिं व्यनक्ति—**एवमिति**। प्राणप्रकरणे "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी भवति तं चेद्ब्रूयुः अतिवाद्यसीति अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत" इत्युक्त्वा, "एष तु वा" इत्याद्याम्नायते। ननु सत्यस्यातिशायितत्वे भूम्नः किमायातमित्यत उक्तं—**सत्याख्येति**। तयोरभेदश्च "सैव हि सत्यादयः" इत्यत्र वक्ष्यत इति भावः। **प्रश्नादेरिति**। 'भूमा वाव प्राणाद्भूयान्' इति परिहारस्य चेत्यादिपदार्थः। ननु यथा पूर्ववादिना सिद्धान्तिनं प्रत्युक्ता प्राणाद्भूयस्त्वानुक्तिर्गत्यन्तरयुक्ता, तथा सिद्धान्तिना पूर्ववादिनं प्रत्युक्ता प्राणस्य विष्णुतो भूयस्त्वानुक्तिरपि तथा स्यात्। एवं च पुनर्निर्णयो न स्यादित्यतो नैवमिति भावेनाह—**अत एवेति**। पूर्ववाद्युक्तानुक्तेः सावकाशत्वा-

चन्द्रिका

एतच्च "व्यतिहारो विशिंषन्ति" इत्यत्र सूत्रकृदेव वक्ष्यति ।

प्रकाशः

देव साम्यनिरासाय सिद्धान्तिनोक्तानुक्तेर्निरवकाशत्वं,

बाहुल्यं लिङ्गशब्दानां अनुक्तिश्च विरुद्धता ।
अनुक्तिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥
लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथा गतिः ॥
समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ।
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥
सिद्धान्तयुक्तयो ज्ञेयाः................ ।

इत्यनुव्याख्याने उक्तमित्यर्थः । विवरिष्यते चैतदग्रे । नन्वेवं निरवकाशानुक्तेरेव सिद्धान्तन्यायत्वोक्तेः पूर्वपक्षानुक्तेरन्यथोपपत्तिरूप न्यायस्य टीकायां कुतो व्युत्पादनं कृतम् । तथा सति न्यायभेदेनाधिकरणभेदः स्यात् । "सैव हि" इत्यस्य व्यर्थतापत्तेश्चेत्यतस्तत्रोक्तस्यैवात्र शिष्यहितायोक्तिरिति भावेनाह—**एतच्चेति** । पूर्वपक्षीयानुक्तेरुक्तरीत्या सावकाशत्वमित्यर्थः । तृतीयस्य तृतीयपादे द्वाविंशेऽधिकरणे, विष्णुः प्राणादुत्तमो न वेति संशये, छान्दोग्ये प्राणस्यैव सर्वोत्तमत्वेनोक्तत्वात्प्राणाद्भूयसोऽन्यस्य प्रश्नप्रतिवचनाभ्यामनुक्तेः प्राण एव सर्वोत्तम इति प्राप्ते, प्रकरणान्तर इव प्रश्नप्रतिवचनयोर्व्यतिहारोऽध्याहारः कार्यः, "एष तु वा अति-

चान्द्रिका

न चैवमिह पूर्वपक्षानुदयः, "व्यतिहारः" इत्यत्रोक्तोऽध्याहारो न युक्तः, तुशब्दस्य "विज्ञानं त्वेव विजिज्ञासितव्यं" इति सत्यानन्तरमुक्तेषु विज्ञानादिष्विवाभेदेऽप्युपपत्तेः। विज्ञानादीनां च सत्याभेदः "सैव हि सत्यादयः" इत्यधिकरणसिद्ध इति प्राप्ते, श्रुत्यन्तरे प्राणादेकस्यैवाधिकस्योक्तेः "एष तु" इत्यत्र तुशब्दोऽध्याहारकल्पकः, "विज्ञानं तु" इत्यादौ तु सत्याख्ये ब्रह्मण्येव धर्मान्तराभिप्रायत्वान्न तत्कल्पक इति सिद्धान्तस्येहाभिप्रेतत्वात्। अत एव प्राणाद्भूम्नो भूयस्त्वोक्तिरूपा सिद्धान्तयुक्तिरधिकरणान्तरव्युत्पाद्यत्वात्

प्रकाशः

वदति" इति तुशब्देन विशेषणात्, विष्णुरेव सत्यशब्देनोत्तमतयोच्यत इति वक्ष्यतीत्यर्थः। तेन गतार्थत्वमाशङ्क्य तदाक्षेपेणास्य प्रवृत्तिरित्याह—**न चैवमित्यादिना**। "सैव हि" इति उत्तराधिकरणे प्राणात्सत्यशब्दितो विष्णुरेक एव उत्तम उत बहव इति संशये, सत्यादुपरि विज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहङ्कारात्मनामुक्तत्वात् बहव इति प्राप्ते, "सत्यं भगवो विजिज्ञासे" इति सत्यनामकभगवद्गुणजिज्ञासायां विज्ञानाद्युक्तेर्दाक्षायणयज्ञाद्युक्तेरिव प्रकृतस्यैव गुणकथनपरत्वेनोपपत्तेः, सैव परदेवता सत्यादय इति वक्ष्यमाणत्वादिति भावः। 'श्रुत्यन्तरे' तैत्तिरीयादौ। 'अत एव' इत्युक्तं व्यनक्ति—**अधिकरणान्तरव्युत्पाद्यत्वादिति**। 'अनुव्याख्याने' न्यायसङ्ग्रहानुव्याख्याने। इदानीं

चन्द्रिका

इहानुव्याख्याने "अनुक्तिश्च" इति चशब्देनोक्ता, प्राणस्य विष्णुतो भूयस्त्वानुक्तिस्तु "अनुक्तिः" इति स्वशब्देनोक्ता । तदुक्तं न्यायविवरणे—"प्राणस्य विष्णोस्सकाशात् भूयस्त्वानुक्तिः, चशब्देन "एष तु वा अतिवदति यस्सत्येनातिवदति" इति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्च" इति । प्राणस्य विष्णोस्सकाशाद्भूयस्त्वानुक्तिस्त्वनन्यथासिद्धा, प्रश्नाद्यध्याहारकल्पकाभावात् । नन्वत्र "प्राणो वा आशायाः" इत्यत्र प्राणो विष्णुरित्युपेत्य भाष्ये सिद्धान्तितं, न्यायविवरणे तु मुख्यवायुरित्युपेत्य । तद्विरुद्धम् ।

प्रकाशः

"गत्यन्तरविवर्जिताः" इत्युक्तं सिद्धान्तीयानुक्तेर्निरवकाशत्वं व्यनक्ति—**प्राणस्येति** । अत्र टीकायां भाष्योक्तं प्राणभूम्नोरुभयोरपि विष्णुत्वमुत्क्रमणलिङ्गं च समर्थ्याभेदपक्षमेव प्रतिष्ठाप्य, "अस्तु वाऽयं-प्राणो वायुरेव" इति भेदपक्षमपि भाष्यानुक्तमुक्त्वोपपाद्य भेदाभेदपक्षयोरविरोधश्चोक्तः । अत्र भेदपक्षोक्तिः समुच्चयेनाविरोधोक्तिश्च किंमूला, किंनिमित्ता चेत्यतः, तदाशयं विवरीतुमभेदपक्षमाक्षिपति—**नन्विति** । **प्राणो विष्णुरित्युपेत्येति** । उत्क्रमणलिङ्गस्य हरौ समर्थनादेतदवगम्यत इति भावः । ऋगादीनां परापरार्थद्वयवदिहापि विवक्षाभेदेन कदाचिदयं कदाचित्सोऽप्यर्थोऽस्तु, को दोषः । अत एव "अन्यमीशं" इत्यस्यादृश्यत्वनयेऽन्योऽर्थो द्युम्वादिन-

चन्द्रिका

न चार्थद्वयस्य वैकल्पिकत्वादेवाविरोधः, प्राणस्य विष्णुत्वपक्षे "एष तु वा अतिवदति" इति तुशब्दायोगात् । आशाशब्दोक्तसरस्वतीतो मुख्यवायोरुत्तमत्वमनुक्त्वा विष्णोरेव तदुक्त्ययोगाच्च । न च प्राणस्य मुख्यवायुत्वेऽपि श्रीतत्त्वस्य तदुत्तमत्वमनुक्त्वा विष्णोस्तदुक्तिरयुक्तेति वाच्यं,

नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।
उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ॥

इति वचनेनैव तदनुक्तेर्गत्युक्तेः । "इयदामननात्" इत्याद्यधिक-

प्रकाशः

येऽन्योऽर्थं उक्त इत्यत आह—न चेति । प्राणभूम्नोर्भेदपक्षेऽपि दोषमाशङ्क्य निराह—न चेति । वचनेनेति । तृतीये "कामादितरत्र तत्र चायतनादिभ्यः" इत्यत्र भाष्योक्तब्रह्मतर्कवचनेनेत्यर्थः । तत्र 'यथा' इत्यस्य,

श्रुतौ तथा जीवपरावुच्येते किञ्च नेतरत् ।

इत्युत्तरार्धेनान्वयः । वैकल्पिकार्थद्वयपक्षे बाधकान्तरमाह—इयदिति । आदिपदेन "व्यतिहारः" "सैवहि" इत्यनयोर्ग्रहः । "इयदामननात्" इत्युपासनापादीयैकविंशाधिकरणे हि, नामवागादयः प्राणावसाना न वेति संशये, नामादीनां सोत्तरत्वदर्शनात् प्राणादप्युत्तमाधिकारिसाधनसौलभ्यान्नामादयोऽधिकारिणो न प्राणावसाना इति प्राप्ते, "प्राणो वाव सर्वेभ्यो भूयान्" इति श्रुतेरधिकारि-

चन्द्रिका

रणैः छान्दोग्यभाष्येण च विरोधाच्च। तत्र नित्यवद्वायुपरताया उक्तत्वादिति चेत्, न, वायुपरत्वेऽपि "आत्मन आकाशस्सम्भूतः" इत्यादावाकाशादिशब्दानामिवान्तर्यामिपरत्वस्यापि सम्भवेन भाष्ये तदुक्तेः। तदुक्तिश्च पूर्वपक्षवन्न केवलवायुपरत्वमिति स्वरूपकीर्तनार्थं वा, प्राणान्तर्यामित्वेनैव प्राणाद्भूयस्त्वं लब्धमिति परिहारान्तरोक्त्यर्थं वा, "सम्भूतः" इत्यत्र च भवनवदिहोत्क्रमणस्यापि वक्तव्यत्वेन प्रसङ्गादुत्क्रमणलिङ्गसमन्वयार्थं वेति द्रष्टव्यम्। अत एव टीकायां "प्राणशब्देनापि विष्णोरुक्तत्वात्," "अस्तु वाऽयं प्राणो वायुः" इति ग्रन्थाभ्यां भाष्यन्यायविवरणोक्तपक्षौ

प्रकाशः

णामियत् छान्दोग्योक्तं प्राणावसायित्वमेवेति वक्ष्यमाणत्वादिति भावः।

तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः।
प्राणनामान इत्येव ह्यानन्दः समुदीरितः॥
आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः।
प्राण इत्युच्यते वायुः सर्वे त्वेते दशोत्तराः॥

इत्यादिच्छान्दोग्यभाष्येणेत्यर्थः। **नित्यवदिति।** स्वार्थे वतिः। यद्वा व्यवस्थितैकैकार्थके वाक्ये "यतो वा इमानि भूतानि जायन्ते" इत्यादौ यथोक्तिस्तथेत्यर्थः। इतरथा वायुर्वेति वाशब्दः श्रूयेतेति भावः। अभेदपक्षोक्तेः फलमाह—**तदुक्तिश्चेति।** उक्तं सर्वं टीकायास्तात्पर्यवर्णनमिति भावेन तदारूढं करोति—**अत एवेति।**

चन्द्रिका

विरोधमुद्भाव्य निरसितुमापाततो वैकल्पिकत्वेनोक्त्वा "न चैतदर्थद्वयं विरुद्धं" इत्यनेन ग्रन्थेन तयोस्समुच्चयेनाविरोध एव स्थापितः। तत्त्वप्रदीपे तु—"अभ्युपगमवादत्वात्" इत्यादिनाऽयं प्राणो विष्णुरित्यभ्युपेत्यवादेन भाष्यं प्रवृत्तमित्युक्तम्। तत्र भाष्यन्यायविवरणयोः पक्षभेदेन व्यवस्थितत्वात् भाष्ये पूर्वपक्षे उत्क्रमणलिङ्गोक्तिः, सिद्धान्ते ब्रह्मण्युत्क्रमणसमर्थनं च स्वरसम्। युक्तं च ब्रह्मण्युत्क्रमणं,

जात्यादेस्सर्वगस्यापि प्रतिव्यक्ति समाप्तिवत्।
सर्वगस्यापीश्वरस्य क्रियाया अपि सम्भवात्॥

यथा सर्वगतान्तरे अदृष्टाऽपि जातिरूपसर्वगते एकैकत्र समाप्तिः, एकैकव्यक्तिदर्शनेऽपि जातिप्रतीतेः, यथा चासम्भावितमपि सर्वगतेषु गगनादिषु सर्वगतदिगाद्यसम्बद्धत्वं अजसंयोगाभावपक्षे, तथा सर्वगतान्तरे अदृष्टमपि क्रियावत्त्वं ब्रह्मण्यस्तु, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" "स्वाभाविकी ज्ञानबलक्रिया च"

प्रकाशः

परिहारान्तरमाह—**तत्त्वप्रदीपे त्विति**। भाष्यादौ हरावुत्क्रमणस्य श्रुतिसिद्धत्वमेवोक्तं, न तूपपत्तिसिद्धत्वम्। स्वयं तदाह—**युक्तं चेति**। आदिपदार्थं वदन् श्लोकं व्याचष्टे— **यथेति**। ननु तत्र प्रतीतिबलादन्यतरकर्मादिकारणाभावादिवशात्तथात्वेऽपि इह किं मानमित्यत आह—**तमिति**। विष्णुमित्यर्थः। श्रुतेरौपाधिकक्रि-

चन्द्रिका

ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।

इत्यादिश्रुतेः । क्रियाया औपाधिकत्वं तु "सर्वत्रप्रसिद्ध" इत्यत्रोक्तेनाणुत्वस्यौपाधिकत्वनिरासकन्यायेन निरसनीयम् । किञ्च क्रियावत्त्वेऽणुत्वमेव तन्त्रं, न तु महत्त्वाभावादि, गौरवात् । गुणजा-

प्रकाशः

याविषयत्वमस्त्वित्यत आह—**क्रियाया** इति । यथा सर्षपादेरणीयस्त्वे ततोऽप्यधिकपरिमाणहृदयादेरनुपाधित्वं, तथाऽत्यन्ताणुतररूपगताक्रियायामपि न ततोऽपि स्थूलस्योपाधित्वम्, "उत्क्रान्तप्राणान्" इत्यादौ क्रियोपाधेरनुक्तेश्च श्रौतोत्क्रमणानुरोधेनेश्वरस्य क्रियावत्त्वं तत्प्रयोजकमणुत्वं च स्वाभाविकम्, अक्रियत्वं तत्प्रयोजकमहत्त्वं चौपाधिकमित्यपि सुवचम् । अतिमहत्परिमाणादेः कथं ततो न्यूनपरिमाणोपाधिकृतत्वमिति चेत्सर्षपादितोऽप्यणुपरिमाणादेः कथं ततोऽधिकपरिमाणहृदयाद्युपाधिहेतुकत्वमिति सममित्यादिरूपेण निरसनीयमित्यर्थः । अत एव "स्वाभाविकी" इतिश्रुत्युक्तिः । ननु न हरौ क्रियावत्त्वं युक्तं, प्रयोजकधर्माभावात् । अन्यथोत्क्रमणादिना जीवाणुत्वादिसिद्धिर्न स्यात् । व्याप्ते हरौ पूर्वदेशविभागादिफलाभावाच्च । अतस्तन्निवृत्तौ क्रियाया अपि निवृत्तिः । श्रुत्यादि तु गौणं व्याख्येयमित्यतः प्रयोजकं तावदाह—**किञ्चेति** । आदिपदेन महत्त्वाभावविशिष्टमणुत्वं गृह्यते । महत्त्वाभावस्य तन्त्रत्वे दोषान्तरमाह—**गुणेति** । पररीत्यैतत्, "गुणाद्वा लोकवत्" इत्यत्र

चन्द्रिका

त्यादौ क्रियापाताच्च। अत एव न महत्त्वमक्रियत्वे तन्त्रं, गुणादौ महत्त्वाभावेऽप्यक्रियत्वदर्शनात्। भावरूपायां क्रियायां पूर्वं धीस्थायां पूर्वं धीस्थं यदणुत्वरूपं प्रयोजकं, तदभावादेवाक्रियत्वोपपत्तौ तत्प्रयोजकान्तरस्यानन्वेषणीयत्वाच्च। यदि च विभुद्रव्ये पूर्वदेशाद्विभागादिरूपफलाभावेन क्रिया न स्यात्, तर्हि सुखदुःखेच्छासंस्कारादिरूपफलाभावेनेश्वरे ज्ञानमपि न स्यात्। ज्ञानं नित्यत्वाल्लोकविलक्षणं चेत्, क्रियाऽपि तथाऽस्तु।

प्रकाशः

गुणेऽपि क्रियावत्त्वोक्तेः। प्रागुक्तप्रतिबन्दीं निराह—**अत एवेति**। एवमेव हेतुं व्यनक्ति—**गुणादाविति**। किं तर्ह्यक्रियत्वे तन्त्रं, यदभावाद्धरावक्रियत्वं वार्यते इत्यतः सयुक्तिकं तदाह—**भावेति**। यदपि फलाभावादक्रियत्वमिति, तदप्रयोजकमित्याह—**यदि चेति**। **तथाऽस्त्विति**। अनित्यक्रियाया विभागादिरूपफलजनकत्वेऽपि ईश्वरक्रियाया नित्यत्वेन लोकक्रियाविलक्षणत्वात्तादृशफलाभावेऽपि क्रियात्वं सम्भवतीत्यर्थः। ननु "उत्क्रान्तप्राणान्" इति भूतकालनिर्देशान्न क्रियाया नित्यत्वमिति चेत्तर्हि "तदैक्षत" इति निर्देशात् ज्ञाननित्यत्वाभावोऽपि स्यात्। यदि वेदस्यानादिनित्यत्वादद्येव श्वःप्रभृतिष्वप्यनन्तकालेष्वेवमेवोक्त्या ज्ञानस्यानाद्यनन्तकालतासिद्ध्या वा, लकारस्य कालत्रयान्यतमवाचित्वेन कालत्रयवाचिनः कस्य चिल्लकारस्य अभावाद्येन केन चिल्लङादिना निर्देशेऽपि तन्नित्यत्व एव श्रुत्यन्तरासिद्धे तात्पर्याद्वा, ज्ञाननित्यत्व-

चन्द्रिका

यद्वा—पूर्वदेशसंयोगानभिव्यक्तिरुत्तरदेशसंयोगाभिव्यक्तिश्च क्रियाभि-

प्रकाशः

सिद्धौ क्रियाया अपि तथात्वमस्तु। अत एव पूर्वं "ज्ञानं नित्यं क्रिया नित्या" इत्युदाहृतम्। ननु यदीश्वरक्रिया नित्या सर्वदोपलभ्येतेति चेन्न, अयोग्यत्वेन प्रत्यक्षेणोपलम्भायोगात्। श्रुत्यादिनोपलम्भस्य तु 'क्रिया नित्या' इति सत्त्वात्। अभिव्यक्तेः कादाचित्कत्वेन कदाचिदुपलम्भस्यापि सम्भवाच्च। उक्तं च सुधायां "अत्ता" इति नये—"कदाचिदभिव्यक्तेः कदाचिदेवोपलभ्यत इत्यङ्गीकारे न बाधकं पश्यामः" इति। एतेन भगवति नित्यमुत्क्रमणवत्त्वे जीवस्य सर्वदा मरणमेव स्यादिति निरस्तम्। शक्त्यात्मनोत्क्रमणस्य नित्यत्वेऽपि कदाचिदेव व्यज्यमानत्वेन दोषाभावात्। ननु यदि क्रिया विभागादिकार्यं न कुर्यात्तर्हि क्रियात्वं व्याहन्येत, संयोगविभागासमवायिकारणत्वात् क्रियायाः। यदि सा तौ कुर्यात्तर्हि तस्यास्संयोगविभागौ प्रत्यनपेक्षकारणत्वात् तदुत्पत्तिसातत्यप्रसङ्ग इति चेत्, ज्ञानेऽप्यस्य तुल्यत्वात्। अस्तु वा संयोगादिजनकत्वम्। तच्च द्वेधा, तदभिव्यक्तिजनकत्वेनोपचाराद्वा, मुख्यत एव वेति भावेनाद्यं तावदाह—यद्वेति। क्रियायाः शक्त्यात्मकत्वं व्यक्त्यात्मकत्वं चेति द्वैरूप्यम्। तत्र शक्त्यात्मना नित्याऽपि सा यदा व्यज्यते, तदा पूर्वदेशसंयोगानाभिव्यक्तिरुत्तरदेशसंयोगाभिव्यक्तिश्च जायते, देशान्तरसंयोगानभिव्यक्तिमात्रेण विभागव्यवहार इति भावः। ननु

चन्द्रिका

व्यक्तिफलमस्तु। अथवाऽणुत्वमहत्त्वयोः सदा सत्त्वेऽपि यदा महत्त्वस्य व्यक्त्यात्मकता, अणुत्वस्य तु शक्त्यात्मकता, तदा क्रियाया अपि शक्त्यात्मनैवावस्थानात्, ब्रह्मणः स्वतः सिद्धः सर्वैस्सह संयोग एव, न कस्मादपि विभागः। यदा तु महत्त्वस्य शक्त्यात्मकता, अणुत्वस्य व्यक्त्यात्मकता, तदा क्रियाया अपि व्यक्त्यात्मकत्वात् पूर्वदेशविभागादिकमस्तु। एकस्मिन् रूपेऽणुत्वव्यक्तावपि रूपान्तरे महत्त्वव्यक्तिरविरुद्धा, रूपाणामभेदेऽपि सविशेषत्वात्।

प्रकाशः

केयं क्रियाभिव्यक्तिर्नाम। न तावत्प्रतीतिः, ईश्वरापेक्षया नित्यसिद्धत्वेन सर्वदा संयोगव्यक्त्यापत्तेः। परापेक्षया कदाऽप्यभावेन नित्यमनभिव्यक्त्यापत्तेः। परप्रतीतिरूपक्रियाभिव्यक्तिभावे वा संयोगव्यक्त्यादिकार्योत्पादस्य तदनपेक्षत्वात्। अत एव नावरणनिवृत्तिः व्यक्तिरिति। मैवं, व्यक्तिशब्देनावस्थाविशेषस्य विवक्षितत्वादिति "अत्ते" इति नये सुधायामेवोक्तेरिति तात्पर्यात्। संयोगविशेषस्वरूपोत्पादकत्वमप्यस्तीत्याह—अथवेति। ननूक्तं तथात्वे तदुत्पत्तिसातत्यप्रसङ्ग इति। तन्न, क्रियाव्यक्तिदशायामेव देशान्तरसंयोगविभागविशेषोत्पादाभ्युपगमात्। क्रियाव्यक्तिश्च तत्प्रयोजकाणुत्वव्यक्तिदशायामेवेति न कोऽपि दोष इति। ननु क्रिया स्वसत्तोत्तरक्षणे संयोगादिकं करोति, उत विरम्य वा। नाद्यः, स्वसत्तायाः इदम्प्रथमताभावेन संयोगादिविशेषस्य विवक्षितक्षणादपि पूर्वमुत्पत्ति-

चन्द्रिका

आचिन्त्यशक्तित्वाच्चेशस्येति दिक् । जीवस्याणुत्वे तु सर्वथा पूर्वदेशविभागादिहेतुभूता क्रिया हेतुः, न क्रियामात्रमिति वक्ष्यते ॥

प्रकाशः

प्रसङ्गात् । न द्वितीयः, पूर्वोत्तरावस्थयोराविशिष्टस्य विरम्य व्यापारायोगात् । उत्तरसंयोगस्य कर्मविनाशकत्वेन कृतसंयोगस्य कर्मणोऽवस्थानानुपपत्तेश्च । तथा व्यक्तिश्च किं क्रियातो भिन्नाऽभिन्ना वेत्यादिचोद्यनिराकरणमत्ताधिकरणानुव्याख्यानसुधादौ द्रष्टव्यमिति भावेनाह—**दिगिति** । तथा हि—व्यक्त्या विशिष्टस्य कर्मणः कार्योत्पादकत्वेन शक्त्यात्मकस्य विरम्यैव तत्करणोपपत्तेः । कृतसंयोगस्य कर्मणोऽवस्थानं नेत्यस्यानित्यक्रियाविषयत्वेनोपपत्तेश्च । उक्तं च बृहदारण्यकभाष्ये—

व्यक्तिभावं गता या तु करोतीति स्वरूपिणी ।
शक्तिरूपस्थिता सैव क्रिया शक्तिरितीर्यते ॥
सा च व्यक्तिस्तु जनिवत् क्रियाया रूपमेव तु ।
तथाऽपि तु विशेषेण स्वरूपेण विशेषणम् ॥
जनेर्जनिवदेवासौ ज्ञातव्या व्यतिरेकतः ।

इति । एतेन "रूपान्तराविवक्षयोत्क्रमणस्य श्रुतिसिद्धत्वात्" इति टीकोपपादिता भवति । यदप्यवादि पूर्ववादिना, 'यदि च सर्वगतस्यापि क्रिया, तदोत्क्रान्तिगत्यागतीनां' इत्यादि, तत्राह—**जीवस्येति** ।

सूत्रे 'सम्प्रसादात्' इत्यस्य भाष्ये 'पूर्णसुखरूपत्वात्' इति

चन्द्रिका

अत्र सूत्रे, सम्यक्प्रसीदत्यनेनेति व्युत्पत्त्या सम्प्रसादः पूर्णसुखं, सुखे प्रसादशब्दस्तु ईश्वरस्य सुखं चेद्दुःखमपि स्यादिति नाशङ्क्यं, पूर्णानन्दकार्येण सम्यक्प्रसादेन दुःखाभावनिश्चयात्, ज्ञानवत् सुखस्यापि दुःखाविनाभावाभावाच्चेति दर्शयितुं प्रयुक्तः। अत्र विषयवाक्यक्रमात् सूत्रक्रमः ॥

प्रकाशः

व्याख्यानं कृतम्। तदयुक्तमिव, तथात्वे 'पूर्णसुखात्' इत्येव सूत्रणापत्तिः, कथं च सम्प्रसादपदेन तल्लाभ इत्यतस्तत्त्वप्रदीपसुधयोरुक्तयोगप्रदर्शनेन पूर्णसुखलाभप्रकारं वदन् सम्प्रसादपदप्रयोगप्रयोजनं चाह—**अत्र सूत्र इति**। सम्यक् प्रसीदत्यनेनेति संप्रेत्युपसर्गद्वयपूर्वकात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोः "अकर्तरि च कारके संज्ञायाम्" इति करणे घञ्प्रत्यये रूपमिति भावः। **सम्यक्प्रसादेनेति**। स चेश्वरे श्रुतिस्मृत्यादिगम्य इति भावः। **दुःखाविनाभावेति**। मुक्तेषु सत्यपि सुखे दुःखाभावादिति भावः। **विषयवाक्येति**। "यो वै भूमा तत्सुखं" इति वाक्यमाद्यस्य विषयः, "स एवाधस्तात्" इत्याद्युत्तरवाक्यं तु "धर्मोपपत्तेश्च" इत्यस्य विषय इति तत्क्रमात्क्रम इत्यर्थः। तत्र सर्वगतत्वादिधर्माणां प्रागाक्षिप्तानामपि सूत्रे हेतूकरणं च तदाक्षेपकस्यानुत्क्रमणरूपबाधकस्य परिहृतत्वाद्युक्तमिति भावः।

प्रकाशः

अन्ये त्विति। "भूमा त्वेव विजिज्ञासितव्यः" "भूमानं भगवो विजिज्ञासे" इत्यादौ श्रुतभूमा जडवायुरुत ब्रह्मेति संशये, "अस्ति भगवो नाम्नः" इत्यारभ्य आप्राणात्प्रवृत्तस्य भूयोविषयप्रश्नप्रतिवचनप्रवाहस्य प्राणे परिसमाप्तत्वा प्राणानन्तरं प्रश्नप्रतिवचनाभ्यां विना भूम्न आम्नानात् भूमा प्राणशब्दितो वायुरेव। किञ्च भूमेति भावप्रत्ययान्तत्वाद्भावस्य भवितृसापेक्षत्वात्प्राणस्यैवानन्तर्येण बुद्धौ सन्निधानात्तस्यैव भवितृत्वेनान्वयः। न तु "तरति शोकमात्मवित्" इत्युक्तः परमात्मा, विप्रकृष्टत्वात्। न च "तरति शोकमात्मवित्" इत्यादिनाऽऽत्मनः प्रकरणादात्मैव बुद्धिस्थ इत्यात्मप्रकरणेन सन्निधिभावात् स एव भूमेति युक्तं, नामवागादिप्रतीकोपदेशरूपाब्रह्मविषयोपसंहारानुसारेणोपक्रमस्याप्यब्रह्मविषयत्वेन ब्रह्मप्रकरणस्यानुत्थानात्। किञ्च प्राणतत्त्वमुपदिश्य प्राणोपासकस्यातिवादित्वनामकोत्कर्षमभिधाय प्राणप्रकरणविच्छेदशङ्कानिवृत्तये तदेवातिवादित्वमनुवृत्य भूमानमुपदिशत्प्राणभूम्नोरभेदं गमयति। तस्मात्प्राणो भूमा, सुखत्वामृतत्वादिकं च कथञ्चिन्नेयमिति प्राप्ते, "एष तु वा अतिवदति यः सत्येनातिवदति" इत्यत्रातिवादित्वहेतुप्राणोपासनं तुशब्देन व्यावर्त्य मुख्यातिवादित्वहेतोर्ब्रह्मणः सत्यशब्देन परमार्थसत्त्ववाचिना पृथगुपदेशात्, तथा परमोपक्रमे "तरति शोकमात्मवित्" इति वेद्यतया परमात्मन उच्यमानत्वात्, निर्विशेषब्रह्मज्ञानोपयोगि

चन्द्रिका

अन्ये तु—जडरूपः पञ्चवृत्तिर्वायुरेव भूमेति प्राप्ते, निर्विशेषं ब्रह्मैव भूमेति सिद्धान्त इत्याहुः। तन्न, पञ्चवृतौ "तरति शोक-मात्मवित्" इत्युपक्रमस्थात्मशब्दादेः "भूमैव सुखं" इत्युक्तसुखत्वस्य चायोगेन पूर्वपक्षस्यातितुच्छत्वात्। प्राणशब्दश्च "ते ह प्राणा

प्रकाशः

तया नामाद्यब्रह्मोपदेशोपपत्तेः, आत्मप्रकरणेन च सन्निधानबाधात्, तथा "यत्र नान्यत्पश्यति" इति द्वैतनिषेधेन भूम्नो लक्षणा-भिधानेनाद्वैतः परमात्मैव भूमेति सिद्धान्त इत्याहुरित्यर्थः। **जडेति।** "पञ्चवृत्तः प्राणस्य" इति तदीयभाष्योक्तेरिति भावः। **आत्म-शब्दादेरिति।** आत्मशब्दस्य मुक्तिहेतुवेदनविषयत्वादेश्चाचिद्व्यावर्त-कत्वेन पूर्वाधिकरणे ईक्षत्यधिकरणादौ चोक्तत्वात् सुखस्य चेतन-मात्रलिङ्गत्वादिति भावः। ननूक्तमत्र भामत्यां नामादिप्रतीकोपदेश-रूपेणोत्तरेणाब्रह्मविषयेण "तरति शोकमात्मवित्" इति प्रश्न-स्याप्यब्रह्मविषयत्वं वाच्यम्। अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः। अतो न ब्रह्मप्रकरणोत्थानमितीति चेन्न, निर्विशेषब्रह्मज्ञानोपयोगि-तया नामाद्यब्रह्मोपदेशोपपत्त्या सावकाशेन नामाद्यब्रह्मोपदेशरूपो-त्तरेण प्रश्नस्थात्मश्रुतेः मुक्तिहेतुवित्तिविषयत्वस्य च बाधायोगाद-न्यस्य च प्रबलजडप्रापकस्याभावात्, सन्निहितसुखत्वस्य सर्वथा ज-डेऽनुपपत्तेश्चेति। ननु जडे प्राणश्रुत्यनुसारेण श्रुतिप्रसिद्ध्यनुरोधेन सुखत्वं दुःखराहित्याद्याशयेन नेयमित्यत आह—**प्राणशब्दश्चेति।**

चन्द्रिका

अहंश्रेयसि व्यूदिरे अहं श्रेयानस्म्यहं श्रेयानस्मीति" इति "तान् वरिष्ठः प्राण उवाच" इत्यादौ तदभिमानिदेवतायामेव प्रसिद्धः। सिद्धान्तोऽप्ययुक्तः, उक्तरीत्योपक्रमानुगुणस्य गुणज्यैष्ठ्यरूपस्योत्तमत्वस्य

प्रकाशः

'प्राणाः' इन्द्रियाभिमानिनः, 'व्यूदिरे' विवादमकुर्वन्। 'प्राणः' मुख्यप्राणः। एषा छन्दोगश्रुतिः। "तान् वरिष्ठः प्राण उवाच, मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" इति षट्प्रश्ने। आदिपदेन "ते हेमे प्राणा अहंश्रेयसि विवदमानाः ब्रह्म जग्मुः। तद्धोचुः को नो वरिष्ठः" इत्यादिवाजसनेयश्रुतिर्ग्राह्या। एवशब्देनाभिमान्यधिकरणन्यायेन तत्र मुख्यत्वं सूचितम्। श्रुतीनां जडपरत्वे वचनादेरयोग इति भावः। एतेन नामवाक्चित्तसङ्कल्पादिजडप्रायपाठात् प्राणो जड इति निरस्तं, श्रौतप्रसिद्ध्या प्रायपाठबाधात्। त्वन्मते आनन्दमयनये "असन्नेव स भवति" इत्यानन्दमयपुच्छविषयश्रुत्या पुच्छस्य ब्रह्मत्वबोधिन्या अन्नमयाद्यब्रह्मपुच्छप्रायपाठबाधवत्, नामादिशब्दानामभिमानिनयन्यायेन, "नामाभिमानिनी चोषा" इत्यादिवक्ष्यमाणस्मृत्या च चेतनार्थत्वेन जडप्रायपाठाभावाच्चेति। भूमत्वं च किं वास्तवमुत कल्पितम्। न द्वयमपीत्याह—**उक्तरीत्येति**। "न हि देशतः पूर्णत्वं भूमत्वं" इत्यादिना **पूर्वोक्तरीत्येत्यर्थः**।
**'उत्तमत्वस्य'** भूमत्वस्य।

चान्द्रिका

निर्गुणे अयोगात् । कल्पितज्यैष्ठ्यस्य च "भूमा त्वेव विजिज्ञासितव्यः" "भूमानं भगवो विजिज्ञासे" इत्युक्तं चरमकक्ष्यात्वेन मुमुक्षुजिज्ञास्यत्वमयुक्तम् । किञ्च "सर्वेषु लोकेषु कामचारो भवति" इति यद्भूमज्ञानफलं श्रुतं, तदप्ययुक्तम्, निर्विशेषज्ञानस्य हि सर्वलोकानां कामस्य च निवृत्तिः फलं, न तु तत्र कामचारः ॥ यच्चोक्तं—सम्यक् प्रसीदत्यस्मिन्निति व्युत्पत्त्या सुषुप्त्यवस्थावाचिना सम्प्रसादशब्देन तत्र जाग्रत्प्राणो लक्ष्यते । तथा च प्राणादूर्ध्वमुपदेशादित्याद्यसूत्रार्थ इति, तन्न, अस्मद्रीत्या सुखे

प्रकाश

इति यद्भूमज्ञानफलमिति। यद्यपि भूमवाक्यादुपरि "अथात आत्मादेशः" इत्युक्त्वाऽऽत्मवाक्ये "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यात्मज्ञानस्यैव फलं श्रुतम्, तथाऽपि भूमात्मनोरभेदादेवमुक्तम् । अधिकरणशरीरं निरस्य सूत्रार्थमप्यनूद्य निराह—**यच्चेति** । अत्र सम्प्रसादशब्दोऽधिकरणव्युत्पत्त्या बृहदारण्यके "स एष एतस्मिन् सम्प्रसादे स्वप्ने बुद्धान्ते" इति स्वप्नजागरितस्थानाभ्यां सह पाठाच्च सुप्तिपरः । तस्यां च प्राणो जागर्तीति तेन प्राणो लक्ष्यते । तथा चार्थमाह—**तथाचेति** । "प्रसिद्धप्राणादिपदपरित्यागेनाप्रसिद्धसम्प्रसादपदोपादने कारणाभावात्" इति सुधोक्तमुपलक्षणमिति

चन्द्रिका

सम्प्रसादशब्दस्य योगसम्भवे, प्राणे योगमुखलक्षणाया अयोगात्। 'सम्प्रसादात्' इत्यस्य च "धर्मोपपत्तेश्च" इत्युत्तरसूत्रस्थचशब्दानुषङ्गेन पूर्णसुखत्वरूपेहत्वन्तरपरत्वसम्भवे "अध्युपदेशात्" इत्यनेनोक्तनिरवधिकोत्तमत्वं प्रत्यवधित्वेन सङ्कोचकत्वायोगाच्च। किञ्च न तावदयं भूम्नः प्राणत्वाभावे हेतुः, तत्त्वज्ञानार्थं वादप्रक्रियया प्रवृत्तेषु सूत्रेषु प्रथमाकाङ्क्षितस्य अध्याहारनिरपेक्षस्य च स्वपक्षहेतुत्वस्य सम्भवे तद्विपरीतस्य पूर्वपक्षानिरासहेतुत्वस्यायोगात्। स्वपक्षसाधनहेतुत्वं हि परपक्षनिरासहेतुत्ववन्नाध्याहारापेक्षम्, समन्वयसूत्रस्थस्य तच्छब्दस्याध्यायपरिसमाप्ति अनुषङ्गेण भूमा तत् ब्रह्मेत्यन्वयात्। अत एव "आनन्दमयः" इत्यादिषु स्वपक्षसाधकसूत्रेषु पक्षहेत्वोरेवोक्तिः। "नेतरोऽनुपपत्तेः" इत्यादिपरपक्षनिराससूत्रेषु तु

प्रकाशः

भावेनाह—**योगमुखेति**। तस्यातिविलम्बितत्वादिति भावः। अगत्यैवमाश्रीयत इत्यत आह—**सम्प्रसादादित्यस्येति**। अस्तु वाऽयमेक एव हेतुः, तथाऽपि स किम्पूर्वपक्षनिरासकोऽथ भूम्नो ब्रह्मत्वसाधकः। आद्यं प्रत्याचष्टे—**किञ्च न तावदिति**। 'परमात्मैवेह भूमा न प्राणः' इति परभाष्योक्तेर्द्वेधाऽपि सम्भवाद्विकल्पः। **तद्विपरीतस्येति**। प्रथममनाकाङ्क्षितत्वात् 'न प्राणः' इत्यध्याहर्तव्यत्वाच्चेत्यर्थः। अध्याहारः स्वपक्षहेतुत्वेऽपि तुल्यः, साध्यपदाश्रवणादित्यत आह—**स्वपक्षेति**। **अत एवेति**। "तत्तु समन्वयात्" इत्यतस्साध्यनिर्दे-

चन्द्रिका

साध्यस्यापि । नापि भूम्नो ब्रह्मत्वे हेतुः, प्राणादूर्ध्वमुपदेशस्यानन्दमयप्रकरणे मनोमयादिषु सत्त्वात् । भूमप्रकरणे च प्राणोपदेशादूर्ध्वं "सत्यं त्वेव विजिज्ञासितव्यं" इति सत्यशब्दार्थस्य ब्रह्मण इव "विज्ञानं त्वेव विजिज्ञासितव्यं" "मतिस्त्वेव विजिज्ञासितव्या" "श्रद्धा त्वेव विजिज्ञासितव्या" इत्यादेरुक्तत्वेन विज्ञानमतिश्रद्धाकृतिनिष्ठादिष्वपि सत्त्वात् । त्वन्मते मनोमयादीनां विज्ञानादीनां च

प्रकाशः

शस्यानुवर्तनादेवेत्यर्थः । ननु 'तत्तु' इति तुशब्दस्यावधारणार्थत्वात् भूमा तदेव ब्रह्मैवेत्युक्तावर्थान्न प्राण इत्यस्य लाभात्तत्र हेत्वन्वय इति चेन्न, साक्षादुपात्तसाध्यान्वयत्यागेनार्थिकान्वयायोगात् । अत एव तादृशस्थले साध्यस्याप्युक्तिरित्युक्तमिति ज्ञेयम् । द्वितीयं निराचष्टे—**नापीति** । "तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः" इति तस्माच्च विज्ञानमयानन्दमययोरुक्तेरित्यर्थः । ननु तत्र प्राणमयादूर्ध्वं न तु प्राणादिति चेन्न, अस्य विशेषस्याप्रयोजकत्वात् । त्वन्मते तत्र मयटो विकारार्थत्वेन प्राणविकारस्यापि प्राणत्वात् । अन्यथा तं प्रत्युदाहृतः "प्राणं देवा अनुप्राणन्ति" इति श्लोकोऽनन्वितस्स्यात् । भृगुवल्ल्यां प्राणादेव च मनःप्रभृतीनामूर्ध्वमुपदेशाच्चेति भावः । अविवादस्थलं चाह—**भूमप्रकरणे चेति** । अस्तु को दोष इत्यत आह—**त्वन्मत इति** । तथा च हेतोर्व्यभिचार इति भावः । "धर्मोपपत्तेश्च" इत्यस्य

चन्द्रिका

अब्रह्मत्वात् । यच्चोक्तं "यत्र नान्यत्पश्यति" इत्यादिनोक्तव्यवहाराभावरूपनिर्विशेषब्रह्मधर्मात् भूमा ब्रह्मैवेति द्वितीयसूत्रार्थ इति, तन्न, तत्र "एवं पश्यन्नेवं मन्वान एवं विजानन् सर्वेषु लोकेषु कामचारो भवति" इति दर्शनादिव्यवहारस्याप्युक्तेः । "नान्यत्पश्यति" इति अन्यदर्शनरूपविशेषनिषेधेन भूमद्रष्टृत्वस्याभ्यनुज्ञानाच्च । अन्यदर्शनादेरेव निषेधेनान्यस्यानुमतत्वाच्च । अत्रापि "धर्मोपपत्तेः" इत्युक्तेर्निर्धर्मकत्वमतप्रतिकूलता व्यक्तैव ॥

केचित्तु—भूमा प्राण इत्येव पूर्वः पक्षः ।

प्रकाशः

परभाष्योक्तमर्थमनूद्य निराह—**यच्चेति** । **विशेषेति** । विशेषनिषेधस्य शेषाभ्यनुज्ञानगमकत्वादिति भावः । **अन्यदर्शनादेरिति** । तथा च भूमा सद्वितीय एव, न तु निर्विशेषोऽद्वैत इति भावः ॥

**केचित्त्विति** । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा" इत्यादावुक्तो भूमा किं प्रत्यगात्मरूपो जीवोऽथ परमात्मेति संशये, नामादिषु प्रश्नोत्तरत्वेन प्रवृत्तस्य भूयस्त्ववचनस्य प्राणे पर्यवसानात्प्राणादूर्ध्वं तदनुक्तेः प्राणभूम्नोरभेदात् प्राणशब्दस्य "तरति शोकमात्मवित्" इत्यात्मजिज्ञासया प्रक्रान्ते प्रकरणे प्राणपर्यन्तोपास्योपदेशहेतूनां प्राणसाहचर्यनिमित्तेन लक्षणया जीवपरत्वात्, प्रसिद्धजडवायुपरत्वे प्रक्रान्तात्मशब्दायोगात्, "प्राणो वै पिता प्राणो वै माता प्राणो वै भ्राता

चन्द्रिका

प्राणशब्दस्तु प्राणसहचारिणि जीवे लाक्षणिकः, "प्राणो ह पिता" इत्यादिना प्राणे पितृत्वादिव्यपदेशात् । "पितृहा वै त्वमसि" इत्यादिना सप्राणस्य शरीरस्य हिंस्यत्वव्यपदेशाच्च ।

प्रकाशः

प्राणः स्वसा आचार्यः प्राणो ब्राह्मणः" इत्युक्तपितृत्वादेरयोगात्, तथा "पितृहा वै त्वमसि मातृहा वै त्वमसि" इत्यादिना तथा "उत्क्रान्तप्राणान्" इत्यारभ्य प्रवृत्तेन "न पितृहाऽसि न मातृहाऽसि" इत्यादिना चात्र प्रकरणे सप्राणेषु हिंसके पुरुषे हिंसानिमित्तोपक्रोशवचनस्य अप्राणेषु हिंसके हिंसानिमित्तोपक्रोशाभावस्य च दर्शनेन, केवलजडे हिंस्यत्वतन्निमित्तोपक्रोशादेश्च अयोगात्, लोके च सजीवनिर्जीवयोरुपमर्दकादिषूपक्रोशतदभावोपलम्भात् प्राणशब्दितो जीव एव भूमेति प्राप्ते, भूयोविषयप्रश्नप्रत्युक्त्योः प्राणपर्यन्तत्वेऽपि प्राणवादिनोऽतिवादित्वोक्त्यनन्तरं "एष तु वा अतिवदति यस्सत्येनातिवदति" इति तुशब्देनोपासकभेदं प्रतिपाद्य सत्योपासकस्य पूर्वस्मात्प्राणोपासकादाधिक्यकथनात्, अतिवादित्वस्य स्वोपास्याधिक्यवादित्वरूपत्वात्, सत्यशब्दादवसेयं ब्रह्मैव भूमा, सम्प्रसादात्प्राणशब्दिताज्जीवादूर्ध्वमुपदेशात्, अमृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मत्वादिधर्माणामुपपत्तेश्च ब्रह्मैव भूमेति सिद्धान्त इत्याहुरित्यर्थः । तर्हि को विशेष इत्यत आह—**प्राणशब्दस्त्विति** । जीवग्रहे हेतुद्वयमाह—**प्राणो हेति** । सिद्धान्त-

चन्द्रिका

न हि केवलजडस्य पितृत्वादिकं हिंस्यत्वं च युक्तमित्याहुः। तन्न, प्राणशब्दस्य प्रसिद्ध्यनुसारेण प्राणाभिमानिदेवतावाचित्वेऽपि "अथ यद्यप्येनानुत्क्रान्तप्राणान्" इत्यादिनोपपादितस्य पितृत्वादेः सम्भवेन लक्षणायोगात्। "अथ यद्यप्येनानुत्क्रान्तप्राणान्" इति प्रकृतानामाचार्यादिजीवानामुत्क्रान्तप्राणत्वस्योक्तत्वेन प्राणस्य जीवमात्रत्वायोगाच्च। न हि स्वयं स्वस्मादुत्क्रान्तो भवति। अत एव "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय" इति श्रुतेः सम्प्रसादो जीवः, तस्मादध्युपदेशादिति केषाञ्चित्सूत्राक्षरार्थोऽपि निरस्तः। तथात्वे श्रुतौ प्राणशब्दस्य जीवे लक्षणापत्तेः। जीवसामान्यादध्युपदेशमात्रेण ब्रह्मत्वासिद्धेश्च। त्वद्रीत्या श्रद्धादिषु व्यभिचाराच्च।

प्रकाशः

स्य स्फुटत्वात् पूर्वपक्षस्यैवोपन्यासः। यदुक्तं प्राणशब्दश्चेतनपर इति, तद्युक्तं, लाक्षणिकत्वं त्वयुक्तमित्याह—**प्राणशब्दस्येति**। **प्रसिद्धीति**। प्रागुक्तश्रुतिप्रसिद्ध्यनुसारेणेत्यर्थः। तदीयसूत्रार्थोऽप्ययुक्त इत्याह—**अत एवेति**। अतःशब्दार्थं व्यनक्ति—**तथात्व इति**। तथा त्वयोक्तत्वादिति भावः। "महतः परमव्यक्तं" इत्यादौ त्वन्मते जीवादधिकत्वेन निर्दिष्टशरीरे ब्रह्मत्वाभावादप्रयोजकोऽयं हेतुरित्याह—**जीवेति**। **त्वद्रीत्येति**। त्वन्मते तेषामब्रह्मत्वात्सत्यवाक्य इव "श्रद्धा त्वेव" इत्याधिक्यद्योतकतुशब्दस्य श्रद्धादौ भावादिति भावः। तथा हि तद्भाष्यं—"ब्रह्मोपासनं "सत्यं त्वेव

चन्द्रिका

"सम्प्रसादोऽस्मात्" इति श्रुतौ शरीरात् समुत्थानलिङ्गेन सम्प्रसादशब्दस्याल्पसुखयुक्तजीवे कथञ्चित् यौगिकत्वेऽपि सूत्रेऽल्पसुखदुःखयुक्तजीवपरत्वे हेत्वभावाच्च । "नामाभिमानिनी चोषा" इत्यादिस्मृत्या नामादीनामपि जीवविशेषत्वाच्चेति ॥

प्रकाशः

विजिज्ञासितव्यं" इत्युपदिश्य, तदुपायभूतं ब्रह्ममननं "मतिस्त्वेव विजिज्ञासितव्या" इत्युपदिश्य, श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमप्यर्थसिद्धं मत्वा, श्रवणोपायभूतां ब्रह्मणि श्रद्धां "श्रद्धा त्वेव विजिज्ञासितव्या" इत्युपदिश्य" इत्यादि। ननु "सम्प्रसादोऽस्मात्" इति श्रुतौ जीवे प्रयुक्तेन जीववाचिना सौत्रसंप्रसादशब्देन जीवस्योक्तेस्तदनुरोधात् श्रुतौ लक्षणाऽऽश्रीयत इत्यत आह—**सम्प्रसाद इति**। सम्प्रसादशब्दस्य जीवेऽभिधानाद्यभावेन रूढ्यभावात्स्वयोग्यकिञ्चित्पूर्णसुखवति तस्मिन् सम्बद्धं प्रसादशब्दितं सुखं यस्येति व्युत्पत्त्या सुखसम्बद्धो जीवः सम्प्रसादशब्देन ग्राह्यः। न चात्र मुख्यार्थस्य "तत्सुखं" इत्युक्तस्य सन्निहितपूर्णसुखस्य त्यागेन जीवग्रहणे हेतुरस्ति, येन श्रुतौ तद्बलाल्लक्षणाऽऽश्रीयेत इत्यर्थः। किञ्च दीवादाधिक्येनोपदेशस्य वागादावपि सत्त्वेन तत्रापि व्यभिचार इति भावेनाह—**नामेति**।

नामाभिमानिनी चोषा तस्यां ब्रह्म परं स्मरेत् ।

इत्यादिच्छान्दोग्यभाष्योदाहृतस्मृत्येत्यर्थः। "धर्मोपपत्तेश्च" इति सू-

चन्द्रिका

टीकाक्षरार्थस्तु स्पष्टः। यद्यपि श्रुतौ "विश्वतः परमं" इति द्राविड-पाठः। तथाऽपि "विश्वतः परमां" इति आन्ध्रादिपाठो भाष्ये उदाहृतः॥

प्रकाशः

त्रार्थो न विरुद्ध इति न दूषितः।

प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ॥

इत्युक्तेः प्रायिकत्वाभिप्रायत्वात्, अद्वैतमते एतत्सूत्रार्थस्यापि दूषणाच्च न प्रतिज्ञाविरोधः। एतेन रामानुजरीतिमनुसृत्य पूर्वपक्षोत्तरपक्षौ कुर्वतः कस्य चिच्छैवस्य मतं प्रत्युक्तं ध्येयम्। यदत्र सौत्रहेतोश्चन्द्रिकोक्तव्यभिचारनिरासाय सम्प्रसादाज्जीवादधिकात्मत्वेनोपदेशादित्यर्थ इत्युक्तं, तन्न, सूत्रे अध्यात्मोपदेशादिति निर्देशाभावात्। यदत्रोक्तं शिवार्कमणिदीपिकायां, निरतिशयसुखवर्णनपरस्य भूमोपदेशस्यात्मविषयत्वं स्पष्टमिति हेतावपेक्षितमप्यात्मत्वविशेषणं सूत्रे न कृतमिति, तन्न, अधिकत्वस्यापि स्पष्टत्वेनावाच्यत्वापातात्। भूमोपदेशस्यात्मविषयत्वाय निरतिशयसुखत्वस्य हेतुत्वेनाऽऽवश्यकत्वेऽस्मन्मतरीत्या सम्प्रसादादित्यस्यैव तदर्थत्वस्य न्याय्यत्वेन तेनात्मत्वं प्रसाध्याधिकात्मत्वेनोपदेशादित्याद्युक्तेः क्लिष्टत्वात्।

भूमा नारायणाख्यः स्यात् स एवाहङ्कृतिः स्मृतः।

इत्यादिस्मृतिविरोधेन शिव इति सिद्धान्तस्यानुत्थानाच्चेति। स्पष्ट-इति। उपन्यासमुखेन विवृत इत्यर्थः॥

इति भूमाधिकरणम्.

# — अथ अक्षराधिकरणम् —

अदृश्यत्वादिगुणा विष्णोरुक्ताः । "अदृष्टं द्रष्टृश्रुतं श्रोतृ" इत्यादिना, "अहं सोममाहनसं बिभर्मि" इत्यादेस्तस्यापि स-म्भवान्मध्यमाक्षरस्योक्ता इति,

तत्त्वप्रकाशिका

अत्राविनाशित्वसाम्याच्चित्प्रकृतौ हरौ च साधारणस्याक्षरन्नाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं च दर्शयति—अदृश्यत्वादीति । अदृश्यत्वादिगुणाः पूर्वं विष्णोरुक्ताः। ते च वाजसनेयके अक्षरस्योक्ताः "तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्राविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्य-दतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति। तस्याक्षरस्य विष्णोर-न्यत्वेऽदृश्यत्वादिकं चान्यस्यैव प्रसज्येत, इत्यवश्यं निर्णेयत्वम् । तदक्षरं विषयः । किं विष्णुरुत चेतनप्रकृतिरिति सन्देहः । उक्त-साधारण्यं च सन्देहबीजम् । द्रष्टृत्वादिश्रवणाज्जडप्रकृतेरोङ्कारस्य च न सन्देहानिविष्टत्वम् । उत्तराधिकरणे त्वीक्षणस्य प्रथमाप्रती-तेरस्त्यवकाशः । एतदक्षरं मध्यमं श्रीतत्वमेवेति पूर्वः पक्षः, तत्राक्षरशब्दस्य प्रसिद्धेः । "एतस्य वा अक्षरस्य प्रशासने गार्गि

अतो ब्रूते—

## ओम् अक्षरमम्बरान्तधृतेः ओम् ॥ १० ॥

तत्त्वप्रकाशिका

सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिनाऽक्षरस्य चन्द्रसूर्याद्याधारत्वप्रतीतेश्च, चन्द्राद्याधारत्वस्य च "अहं सोमं" इत्यादेस्तद्धर्मत्वात् । न च वाच्यमदृश्यत्वादिविष्णुधर्मश्रवणात्तस्याक्षरत्वमिति, अदृश्यत्वादिगुणानां मध्यमाक्षरेऽपि सम्भवात् । तथा च स्मृतिः—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥

इत्यादि । अथापि स्यात्, अक्षरश्रुतेरदृश्यत्वादिलिङ्गानां च मध्यमोत्तमाक्षरयोस्साम्येऽत्र मध्यममेवोच्यत इति निर्बन्धे को हेतुरिति, मैवम्, "न तदश्नाति किञ्चन" इत्यक्षरस्यानशनोक्तेः । तच्च विष्णोर्विरुद्धम्, "अत्ता चराचरग्रहणात्" इत्युक्तत्वात् । न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्ति । अतो मध्यमाक्षरमेवैतदक्षरं, तस्यैवादृश्यत्वादिगुणकत्वमिति भावः । 'आहनसं' यज्ञेष्वभिषूयमाणम् । लताभिमानित्वेनेयमुक्तिः, "सोमं राजानं जुह्वति, तं देवा भक्षयन्ति" इत्यादिवत् । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति । इदमक्षरं ब्रह्मैव, "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या

"एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम्,

य उ त्रिधातु पृथवीमुत द्यामेको दाधार भुवनानि विश्वा ।
भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्टः ।
यदा भारं तन्द्रयते स भर्तुं परास्य भारं पुनरस्तमेति ।
यस्मिन्निदं सञ्च वि चैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुः ।

इत्यादिश्रुतेः ।

पृथिव्यादि प्रकृसन्तं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृतौ ॥

इति च स्कान्दे ॥ १० ॥

तत्त्वप्रकाशिका

यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतं च" इत्याकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वा "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्यक्षरस्य तदाधारत्वश्रवणादित्यर्थः । सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह—**य** इति । एको देवो भर्तृत्वेन बहुधा निविष्टो जगता भ्रियमाणस्तद्बिभर्ति । स च यदा तं भारं भर्तुं नेच्छति तदाऽसौ नश्यतीत्यर्थः । एतच्च "तद्वै त्वं प्राणः" इत्युक्तप्राणस्योच्यते । यस्मिन्निदं सम्यग्विविधं चैधि तदेव ब्रह्मेत्यर्थः । विष्णुवदन्यस्यापि सर्वधारत्वं किं न स्यादित्यत आह—**पृथिव्यादीति** ॥

## ओम् सा च प्रशासनात् ओम् ॥ ११ ॥

सा च धृतिः प्रशासनादुच्यते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना । तच्च प्रशासनं विष्णोरेव,

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि।
चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ॥

इत्यादिश्रुतेः ।

एकश्शास्ता न द्वितीयोस्ति शास्ता योहृच्छयस्तमहमिह ब्रवीमि।
न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम् ॥

तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे—सा चेति । यदा सर्वाधारत्वमेवाक्षरस्य विष्णुत्वं निश्चाययति, तदा सुतरामाज्ञामात्रेण सर्वाधारत्वं विष्णुत्वनिश्चायकमित्याशयः । कुतोऽनेन विष्णुत्वनिश्चय इत्यत अह—तच्चेति । सर्वधृतिकारणं प्रशासनं विष्णोरेवेत्येतत्कुत इति तत्राह—सप्तेति । महदहङ्कारपञ्चमहाभूताख्यसप्तदेवता ब्रह्माण्डाख्यातिसमृद्धगर्भास्तदावरणभूता भुवनस्य रतिप्रदाः सारभूता वा भुवनरतिप्रदस्य विष्णोराज्ञया विविधविश्वधारणे तिष्ठन्तीत्यर्थः । सर्वधृतिहेतुप्रशासनं विष्णोरिवान्यस्यापि किं न स्यादित्यत आह—एक इति । 'बलं' बलप्रदो धृतिहेतुः ॥ ११ ॥

इत्यादेश्च ॥ ११ ॥

## ओम् अन्यभावव्यावृत्तेश्च ओम् ॥ १२ ॥

"अस्थूलमनणु" इत्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च, "अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापकोऽव्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुणः" इत्यादेः विष्णोरेवैते धर्माः ।

अस्थूलानणुरूपोऽसावविश्वो विश्व एव च ।

तत्त्वप्रकाशिका

हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रं पठित्वा व्याचष्टे— अन्येति । "एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन" इति सकलवस्तुस्वभावानां स्थूलत्वादीनामक्षरे व्यावृत्तिकथनाच्च ब्रह्मैवाक्षरमित्यर्थः । लौकिकस्थौल्यादिराहित्यं कथं विष्णुत्वनिश्चायकमित्यत आह—अस्थूल इति । लौकिकस्थौल्यादिराहित्येऽप्यलौकिकपरिमाणादिसद्भावान्न विष्णोरस्वभावत्वमिति भावेनोपलक्षणतया 'मध्यमः' इत्याद्युक्तम् । तमोवाय्वादीनां सर्वात्मना निवृत्तिः 'अदुःखमसुखं' इत्यादिवत् । लौकिकपरिमाणादिराहित्यं कथं विष्णोर्युक्तम्, सर्वपदार्थानां प्राकृतपरिमाणस्यैव दर्शनादित्यत आह—अस्थूलेति । मध्यमाक्षरस्याप्राकृतविग्रहत्वेपि भगवदपेक्ष-

विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तमः ॥

इति च ब्राह्मे ॥ १२ ॥

तत्त्वप्रकाशिका

यैव । अनेनैव "न तदश्नाति किञ्चन" इत्येतदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्यर्थमिति सूचितं भवति । अस्थूलत्वादिसमभिव्याहारात् अक्षरश्रुत्यादीनां तु विष्णावेव मुख्यता । तस्मादक्षरं विष्णुरेवेति तस्यैवादृश्यत्वादीति स्थितम् ॥ १२ ॥

चन्द्रिका

## ॥ ओम् अक्षरमम्बरान्तधृतेः ओम् ॥

यद्यप्यक्षरशब्दो वर्णेषु लोकतः प्रसिद्धः, तथाऽपि न तस्यान्यत्रप्रसिद्धता। न हि सा ब्रह्मणोऽन्यत्र यत्र क्वचन **प्रसिद्धता**, किन्तु पूर्वपक्ष्यभिप्रेतेऽन्यत्र। उभयत्रप्रसिद्धत्वं तु "विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारणः" इति न्यायविवरण

प्रकाशः

॥ ओम् अक्षरमम्बरान्तधृतेः ओम् ॥ अत्र "अविनाशित्वसाम्याच्चित्प्रकृतौ हरौ च साधारणस्याक्षरनाम्नः" इत्यादिपादादिसङ्गत्युक्तिपरटीका न युक्तेव, अविनाशित्वसाम्येऽक्षरनाम्नः साधारण्ये बीजाभावात्। यद्यपि "अविनाशित्वस्याक्षरशब्दप्रवृत्तिनिमित्तत्वादिति अत्रोपस्कर्तव्यम्" इति न्यायविवरणटीकोक्त्या सबीजत्वं, तथाऽप्यक्षरशब्दस्य विष्णुचित्प्रकृत्योर्यौगिकत्वेन वर्णेषु रूढिनिमित्तान्यत्रप्रसिद्धत्वेनास्य पूर्वत्रैव निवेशापत्तेः, अक्षरशब्दस्य विष्णवादौ यौगिकत्वेन लिङ्गतापत्त्या 'नाम्नः' इत्ययुक्तेश्चेत्यतो मूलोक्तितद्व्याख्यानादिना टीकां विवरिष्यन् अन्यत्रप्रसिद्धत्वं तावदाशङ्क्य निराह—**यद्यपीत्यादिना**। 'क्वचन' इति निपातसमुदायः। **किं त्विति**। इह च वर्णो द्रष्टृत्वादिरयोगान्न पूर्वपक्ष्यभिप्रेत इति भावः। का तर्हि पूर्वपक्षकोटिः, कथञ्चोभयसाधारण्यं, वर्णव्यावृत्तस्य तद्बीजस्याभावादित्यत आह—**उभयत्रेति**। अविनाशित्वं तु वर्णादिव्यावृत्तं कोटिद्वयमात्रसाधारणमित्यग्रे विवरिष्याम इति भावः।

चन्द्रिका

एवोक्तम् । प्रयोगसाधारण्योनोभयत्रप्रसिद्धता तु नोक्ता, पूर्वपक्षिणं प्रति सम्प्रतिपन्नप्रयोगाभावात् । वर्णादिसाधारणेन तेन ब्रह्म-चित्प्रकृतिरूपार्थद्वयमात्रसाधारण्यासिद्धेश्च । प्रवृत्तिनिमित्तोपजीविस्थ-लान्तरस्थप्रयोगानुसन्धाननिरपेक्षे समन्वेतव्यशब्दप्रवृत्तिनिमित्तसाधा-रण्यप्रयुक्ते उभयत्रप्रसिद्धत्वे सम्भवति तत्सापेक्षस्य तस्यानाद-

प्रकाशः

एतेन टीकैतन्मूलेति सूचितम् । ननु वक्ष्यमाणादिशा रूढेरप्याव-श्यकत्वात् तस्याश्च प्रयोगबाहुल्यादिरूपत्वात् प्रयोगवशादेव सा-धारण्यं कुतो नोक्तं, किं रूढितोऽप्यमुख्ययोगाश्रयणेनेत्यत आह—**प्रयोगेति** । "यया तदक्षरमधिगम्यते" इत्यादिप्रयोगात् कथमे-तदित्यत उक्तं—**सम्प्रतिपन्नेति** । तत्रासम्मतेरिति भावः । नन्वास्ति "परतः परमक्षरम् । हरिमेव" इति स्मार्तः प्रयोग इत्यनुशया-दाह—**वर्णादीति** । वर्णे लोकतः, जडप्रकृतौ च स्मार्तः । **अर्थ द्वयेति** । तन्मात्रसाधारण्यस्यैव वक्तव्यत्वेनाग्रे साधनादिति भावः । ननु द्रष्टृत्वादिना वर्णजडप्रकृत्योर्निरासे द्वयमात्रवृत्तित्वं स्यादित्यतो हेत्वन्तरमाह—**प्रवृत्तीति** । श्रौतत्वादौ स्थलान्तरप्रयोगस्यावयववृ-त्त्यैवोपपत्तौ रूढेरकल्पनादिति भावः । नन्वेवं प्रवृत्तिनिमित्तस्या-काशादावपि सत्त्वेन कथं द्वयमात्रवृत्तित्वं अक्षरशब्दस्येत्याशङ्कां हृदि कृत्वा, "उपलक्षणं चैतत्, अक्षरशब्दस्य तत्र प्रसिद्धत्वादिति

चान्द्रिका

रणीयत्वाच्च। अत्र चाक्षरशब्दो योगमात्रस्यातिप्रसक्तत्वात् पङ्कजादिशब्दवद्योगरूढः। तत्र रूढ्यंशसाधारण्यस्य "अक्षरत्रयमीरितम्" इति अदृश्यत्वाधिकरणभाष्योदाहृतस्मृत्यैव सिद्धेर्योगांश साधारण्यमात्रं "अविनाशित्वसाम्यात्" इति न्यायविवरणे उक्तम्। अत एव टीकायां—"द्रष्टृत्वादिश्रवणाज्जडप्रकृतेरोङ्कारस्य च न सन्देहनिविष्टत्वम्" इत्युक्तम्। अन्यथा हि नित्यमात्रस्य न

प्रकाश.

द्रष्टव्यम्" इति न्यायविवरणटीकायां "अविनाशित्वसाम्यात्" इत्यस्योपलक्षणत्वोक्तेर्बीजं वदन् तदनुरोधेनात्रापि टीकायां "अविनाशित्वसाम्यात्" इत्यनन्तरं 'तत्रप्रसिद्धत्वाच्चेत्यपि द्रष्टव्यम्' इति भावेन योगस्य साधारण्यमुपेत्य रूढिबलाच्चोभयमात्रवृत्तित्वं द्रष्टव्यमित्येकं पक्षं तावदाह—अत्र चेति। अत एवेति। योगरूढिभ्यां साधारण्यस्याभिमतत्वादेवेत्यर्थः। "अक्षरत्रयमीरितम्" इति जडप्रकृतौ, "यस्त्वेतं त्रिमात्रेणोङ्कारेणैवाक्षरेण परमं पुरुषमभिध्यायीत" इति ओङ्कारे च प्रयोगात्तयोरपि रूढेरविनाशित्वयोगस्य च सत्त्वात् द्वयोरेव व्यवच्छेद्यतयोक्तिः। योगमात्रस्याभिमतत्वे तस्य नित्यमात्रेऽपि सत्त्वेन तन्मात्रमेव व्यवच्छेद्यतयोपाददीतेत्यर्थः। ननु वर्णमात्रेऽपि योगरूढिभावोऽस्तीति चेत्सत्यं, वर्णमात्रोपलक्षणमेतट्टीकायाम्। अत एव न्यायविवरणटीकायां "नन्वचेतनप्रकृतौ वर्णेषु च कुतो नाशङ्का" इत्युक्तमिति ध्येयम्।

चन्द्रिका

सन्देहनिविष्टत्वमित्यवक्ष्यत् । जडप्रकृत्यादिसाधारण्येनाक्षरशब्दस्योभयत्रप्रसिद्धत्वाभावस्तु टीकायां न शङ्कितः, अन्यसाधारण्येऽपि संशयकोटिसाधारण्यमात्रेण तत्सिद्धेः । अथवा—स्वरूपध्वंस इव

प्रकाशः

ननु योगरूढ्योर्जडप्रकृत्यादावपि भावे सति पूर्वोत्तरकोटिद्वयमात्रसाधारण्याभावात् द्रष्टृत्वादिना संशयादिकोटित्वशङ्कानिरासवदुभयत्रप्रसिद्धत्वाभावमप्याशङ्क्य कुतो न तन्निरासः कृत इत्यत आह—**जडेति** । यद्येवं, तर्हि न्यायविवरणोक्तस्य उपलक्षणत्वमुपेत्य रूढिरपि नोपादेया, योगस्यान्यसाधारण्येऽपि संशयकोटिद्वयसाधारण्यमात्रेण तदुपपत्तेरित्यतो योगस्यानतिप्रसक्तत्वसम्भवात् कोटिद्वयमात्रवृत्तित्वमक्षरशब्दस्य । अत एवात्र टीकायां "अविनाशित्वसाम्यात्" इत्येवोक्तिः, न तु रूढ्या चेति रूढ्यंशस्यापि । अत एव च योगस्यान्यसाधारण्याभावादेव टीकायामन्यसाधारण्येनोभयत्रप्रसिद्धत्वाभावशङ्काभावः । "जडप्रकृतेरोङ्कारस्य च" इति विशिष्य द्वयोरेव निषेधस्तु तत्र न योगसम्भवाभिप्रायोऽपितु रूढ्याऽक्षरशब्दार्थत्वं तयोरप्यस्तीत्याभिप्राय इति भावेन योगस्यानतिप्रसक्तत्वं साधयति—**अथवेति** । इह न क्षरतीत्यक्षरमिति शरीरावियोगराहित्यरूपमविनाशित्वमभिमतम् । तच्च चित्प्रकृतीश्वरयोरेव नान्यत्रेति वक्तुं देहवियोगस्य नाशशब्दार्थत्वं तावदाह—**स्वरूपेति** । **प्रयोगादिति** । 'शरीरक्षरणाभाव' इत्यादिनाऽन्वयः ।

चन्द्रिका

शरीरवियोगेऽपि नाशशब्दप्रयोगात्,

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।

क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

इति स्मृतौ च जीवस्य क्षरत्वमुक्त्वा चित्प्रकृतेरक्षरशब्दवाच्यत्वोक्तेः, "लक्ष्मीरक्षरदेहत्वादक्षरा" इत्यादिस्मृतौ शरीराक्षरणस्य निमित्तत्वोक्तेश्चाव्यभिचरिते शरीरक्षरणाभावरूपाक्षरणविशेषे केवलयौगिकोऽ

प्रकाशः

"तन्नोन्नशद्यः पितरं न वेद" इत्यादिश्रुतौ,

नाशिता पृथिवी सर्वा धार्तराष्ट्रैस्तु दुर्नयैः ।

इत्यादिस्मृत्यादौ च प्रयोगादित्यर्थः । अस्त्वेवं तद्राहित्यं चित्प्रकृतौ, हरौ च कुतः, येन तयोरक्षरशब्दो यौगिकः स्यादित्यत आह— **द्वाविति । स्मृतौ चेति ।** गीतायाम् । **जीवस्य क्षरत्वमुक्त्वेत्यादि ।** 'तथा च चित्प्रकृतौ देहवियोगराहित्यं ज्ञायते' इति वाक्यशेषः । स्वरूपध्वंसाभावस्योभयत्राविशिष्टत्वाद्देहवियोगस्याप्यविशिष्टत्वे तद्योग्यजीवस्य क्षरत्वमुक्त्वा चित्प्रकृतेरक्षरत्वोक्तिर्न स्यादिति भावः । विष्णोर्देहवियोगराहित्यं तु "नित्यो नित्यानां" इत्यादिश्रुत्यादिना प्रमितमिति भावः । तावता तस्याक्षरपदप्रवृत्तिनिमित्तत्वं कुतः, येनाक्षरशब्दः तयोरेव स्यादित्यत आह— **लक्ष्मीरिति ।**

ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात् क्षराः ।

लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ॥

इति तत्त्वनिर्णयोक्तश्रुतावित्यर्थः ।

चन्द्रिका

क्षरशब्दः, प्राभाकरमते अचिरनिर्मथनरूपनिर्मथनाविशेषे निर्मन्थ्य-शब्दवत्। न चैवं पङ्कजादेरपि केवलयौगिकत्वापातः, तत्र पद्मत्व-

प्रकाशः

**प्राभाकरेति।** प्रथमस्य चतुर्थे नामधेयपादे "तथा निर्मन्थ्ये" इति दशमेऽधिकरणे "निर्मन्थ्येनेष्टकाः पचन्ति" इत्यत्र श्रुतोऽग्निवाचको निर्मन्थ्यशब्दोऽरणिमथनसंस्कारनिमित्तकोऽथाग्नित्वजाति निमित्तक इति संशये, मथनकर्मत्वस्य निष्पन्नेऽग्नावभावात् 'निर्मन्थ्येन पक्ष्यामः' इति लौकिकेऽपि प्रयोगान्न संस्कारनिमित्तक इति प्राप्ते, अचिरनिर्मथनविशिष्टेऽग्नौ निर्मथनविशेषस्य सत्त्वेन तत्र यौगिक इत्युक्तम्। आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतोऽग्निश्चिरनिर्मथितः। सद्य एव लौकिकमथनेन जातोऽग्निरचिरनिर्मथितः। तेनेष्टकाः पच्यन्ते। यथा पुरातननूतनयोर्घृतयोः नवनीतजन्यत्वे समानेऽपि नूतनमेव नावनीतमिति व्यवह्रियते तद्वन्निर्मन्थ्यशब्दस्य मथनकर्ममात्रे पाणिनिस्मरणेऽप्यचिरनिर्मथिते चिरनिर्मथितव्यावृत्ताचिरनिर्मथनविशेषविशिष्टे यौगिक एव, न तु तद्व्यावृत्त्यर्थं रूढिरप्याश्रयणीयेति यथोच्यते, तथाऽत्राप्यन्यव्यावृत्ताविनाशविशेष निमित्तको यौगिक एव, न त्वन्यव्यावृत्त्यर्थं रूढिरप्याश्रयणीयेत्यर्थः। नन्वेवं 'निबन्धनमते क्लृप्तशक्तिकावयवयोगादेव पङ्कजादिशब्दः, अन्यथा समुदायशक्तिकल्पनागौरवापत्तेः' इति नयविवेकवरदराजीययोरुक्त्या तदप्यनुमतमिति भ्रमनिरासाय तदाशङ्क्य निराह—**न चैवमिति।**

चन्द्रिका

जातेरपि प्रतीतेः। पङ्कजननविशेषस्य निमित्तत्वे मानाभावाच्च। कुमुदादिव्यावृत्तस्य पद्मे पङ्कजननविशेषस्याभावाच्च। अत्र त्वनेकाक्षरानुगतजातिभेदस्याप्रतीतेः। अक्षरणाविशेषस्य निमित्तत्वे स्मृतेरुक्तत्वाच्च। इतरव्यावृत्तस्य क्षरणरहितशरीरयोगरूपस्य विशेषस्य सत्त्वाच्च। वर्णादौ तु रूढः, वर्णत्वादिजातिभेदप्रतीतेः। इह च द्रष्टृत्वादिना रूढार्थबाधाद्यौगिकोऽक्षरशब्दो द्वयमात्रसाधारणः। इदमेव च ब्रह्मचित्प्रकृतिरूपार्थद्वयमात्रसाधारणं शरीराक्षरणं न्यायविवरणे अविनाशित्वपदेन विवक्षितम्। वक्तव्यं हि द्वयमात्रसाधारण्यम्, न्यायविवरणे पूर्वत्र द्युभ्वाद्यायतनत्वादौ संशयकोटिमात्रसाधारण्योक्तेः, तथोत्तरत्र सच्छब्दस्य स्वतस्सर्वसाधारणस्यापि कारणत्वमुखेन द्वयमात्रसाधारण्योक्तेः। तथा—

आहोभयगतत्वं च स्यादतो लिङ्गशब्दयोः।

प्रकाशः

जातिप्रतीतावपि क्लृप्तावयवशक्त्यैव प्रयोग इति निबन्धनमतं निराह—**पङ्कजननेति**। ननु नेदमक्षरपदप्रवृत्तिनिमित्तमव्याप्तेरित्यत आह—**वर्णादौ त्विति**। तत्र यौगिकत्वाभावान्नाव्याप्तिर्दोषायेति भावः। कथं तर्हि द्वयमात्रसाधारण्यमक्षरपदस्येत्यत आह—**इह चेति**। यथा हि परमते "अजामेकां" इति वाक्यस्थाजाशब्दः छाग्यां रूढोऽपि न तत्पर इति वक्ष्यते चतुर्थपादे तथेति भावः। **उत्तरत्रेति**। ईक्षत्यधिकरणे।

चन्द्रिका

इत्यनुव्याख्याने सिद्धान्ते निरसनीयत्वेन यत्साधारण्यं प्रसक्तं, तस्यैवोभयत्रप्रसिद्धत्वेनोक्तत्वाच्च। इन्द्रादिशब्देषु तु रूढ्यादिनैव पूर्वपक्षितत्वात् नैश्वर्यादिप्रवृत्तिनिमित्तसाधारण्यमिति नातिप्रसङ्गः। केचित्तु न्यायविवरणे अविनाशित्वं प्रवृत्तिनिमित्तमिति नाभिप्रेतं, किन्तु सर्वाधाराकाशाधाराक्षरत्वं अनित्यदेहस्य न युक्तमिति नित्यदेहस्यैव तद्वाच्यम्। तच्च ब्रह्मचित्प्रकृतिमात्रसाधारणम्। एवञ्च यथोत्तराधिकरणे स्वरूपेण सर्वसाधारणोऽपि सच्छब्दः कारणत्वमुखेन ब्रह्मजडप्रकृतिमात्रसाधारणः, एवमक्षरशब्दः स्वरूपेण वर्णादिसाधारणोऽपि नित्यदेहत्वमुखेन ब्रह्मचित्प्रकृतिमात्रसाधारण इत्यभिप्रेतमित्याहुः।

प्रकाशः

**इत्यनुव्याख्याने इति**। प्रागुदाहृतमेतद्व्याख्यातं चास्माभिः। एवं न्यायविवरणटीकारीत्या योगरूढिभ्यां, भाष्यटीकारीत्याऽनतिप्रसक्तयोगमात्रेण वा द्वयसाधारण्यं न्यायविवरणेऽभिप्रेतमित्युक्तम्। पक्षान्तरं चाह—**केचित्त्विति**। "अविनाशित्वस्याक्षरशब्दप्रवृत्तिनिमित्तत्वात्" इति न्यायविवरणटीकाविरोधाद्वा, "तत्तेजोऽसृजत" इत्यत्र कारणत्वस्येवेह नित्यत्वस्य साक्षादश्रवणेन सर्वाधारत्वान्यथानुपपत्तिकल्प्यत्वाद्वा 'केचित्तु' इत्युक्तिरित्याहुः। अस्मिन्पक्षे प्रवृत्तिनिमित्तं तु अश्नुते व्याप्नोतीत्यक्षरमित्यादिरूपेण बोध्यमिति भावः। अक्षरशब्दस्य केवलयौगिकत्वं योगरूढत्वं चेति स्वोक्तपक्षद्वयेऽपि

चन्द्रिका

टीकायां नामत्वोक्तिस्तु मध्यमाक्षरादौ यौगिकत्वपक्षे वर्णेषु रूढत्वात्, योगरूढत्वपक्षे तु योगरूढानां नामलिङ्गात्मकत्वपक्षे मध्यमाक्षरादावपि नामत्वस्यापि सत्त्वात्, केवलनामत्वपक्षे तु नामत्वस्यैव सत्त्वात्। एवञ्च न्यायविवरणे "अविनाशित्वसाम्यात्" इति यौगिकत्वोक्त्या लिङ्गत्वस्याभिप्रेतत्वात्, अनुव्याख्याने च "लिङ्गं साधारणं शब्दौ" इति शब्दपदेन नामत्वोक्तेः तयोर्विरोध इति निरस्तम्। अत्र चाद्येऽधिकरणे जडप्रकृतेर्जीवमात्रादेश्च द्युभ्वाद्यायतन-

प्रकाशः

नामत्वं व्यनक्ति—**टीकायामिति**। **रूढत्वादिति**। 'यान्यापाततो रूढान्येव तानि नामानि, तद्विपरीतानि लिङ्गानि' इत्युक्तत्वात् संशयकोट्योः यौगिकत्वेऽप्यक्षरशब्दस्य वर्णेषु रूढत्वान्नामत्वं युक्तम्, यथाऽऽनन्दमयादेः पूर्वोत्तरपक्षयोः यौगिकत्वेऽपि कोशेषु रूढत्वान्नामत्वं तद्वदिति भावः। 'यान्यापाततो रूढानि तानि नामानि, यान्यापाततो यौगिकानि तानि लिङ्गानि' इति लक्षणान्तरस्याप्युक्तत्वात्, अक्षरशब्दो योगरूढ इति पूर्वोक्ताद्यपक्षेऽपि नामत्वं युक्तमित्यर्थः। **केवलेति**। 'यान्यापाततो रूढिरहितानि तानि लिङ्गानि, यानि तु तद्विपरीतानि आपाततो रूढानि योगरूढियुक्तानि वा तानि नामानि' इति लक्षणपक्ष इत्यर्थः। **एवञ्चेति**। प्रागुक्तलक्षणत्रयेऽप्यक्षरशब्दस्य नामत्वस्य लिङ्गत्वस्य च विवक्षाभेदेन सम्भवे सतीत्यर्थः। एवं पादसङ्गतिमुक्त्वाऽनन्तरसङ्गतिं श्लिष्टतरत्वद्योतनायाऽऽदितश्चतुर्धा दर्शयति—**अत्र चेति**।

चन्द्रिका

त्वनिरासः, द्वितीये सर्वजीवश्रेष्ठस्य मुख्यप्राणस्य भूमत्वनिरासः, इह तु ततोऽपिश्रेष्ठस्य श्रीतत्त्वस्याक्षरत्वनिरास इति वा, आद्ये उभयत्र प्रसिद्धिः बहिरङ्गसमाख्याभ्यां, द्वितीये बहिरङ्गसमाख्याविषयवाक्यस्थान्तरङ्गोपक्रमाभ्यां, इह तु ततोऽप्यन्तरङ्गसमन्वेतव्यशब्दप्रवृत्तिनिमित्तसाधारण्यादिति वा, आद्ये भिन्नप्रकरणस्थजायमानत्वाजननयोर्विरोधपरिहारः, द्वितीये एकप्रकरणस्थोत्क्रमणसर्वगतत्वयोर्विरोधपरिहारः, इह तु एकवाक्यस्थास्थूलानण्वादिशब्दार्थमहत्त्वाणुत्वयोर्विरोधपरिहार इति वा, इहाणुत्वमहत्त्वयोर्भावयोः अत्तृत्वानशनयोर्भावाभावयोः स्थौल्याद्यभावान मणुत्वाद्यभावानां चेत्यनेक विरोधपरिहारः, न तु पूर्वत्रेवैकैकविरोधपरिहार इति वाऽवान्तरसङ्गतिः।

प्रकाश

**भिन्नप्रकरणेति**। जायमानत्वं विषयवाक्यगतं, अजायमानत्वं पुरुषसूक्तादिगतम्। **एकप्रकरणेति**। "उत्क्रान्तप्राणान्" इति प्राणवाक्ये "स एवाधस्तात्" इति भूमवाक्ये श्रवणेऽपि प्राणस्य विष्णुत्वाङ्गीकारेण वा पूर्वपक्षरीत्या वा तयोरेकप्रकरणत्वमिति भावः। **एकवाक्यस्थेति**। अग्रे स्पष्टमेतत्। प्रागुक्तोत्क्रमणमयुक्तं, तत्प्रयोजकस्याणुत्वस्य सर्वगते विरुद्धत्वादित्याशङ्कानिरासोऽत्र क्रियत इति सङ्गतिः स्फुटत्वान्नोक्ता। "अदृश्यत्वादिगुणाः" इत्यादिभाष्यं तु फलपरं, वक्ष्यमाणदिशा पूर्वपक्षेऽक्षरश्रुतेर्निरवकाशत्वोक्तिपरं वेति भावः। **इति वाऽवान्तरेति**। एतेन प्राणसार्वात्म्यं न गौणं, रूढ्या

चान्द्रिका

अत्र "सहोवावाच एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति

प्रकाशः

अक्षरशब्दितप्रणवसार्वात्म्यवदिति प्रत्यवस्थाननिरासात् सङ्गतिरिति कल्पतरूक्तं निरस्तम्। द्रष्टृत्वादिना प्रणवकोटेरेव अत्रानुत्थानादिति भावः।

नन्वत्र भाष्ये टीकायां वा "अदृष्टं द्रष्टृ" इत्याद्युपसंहारवाक्यं उदाहृत्य तदक्षरं विषय इत्युक्तम्। तदयुक्तमिव, तथात्वे तत्राम्बरान्तधृत्यादिरूपसूत्रोपात्तहेतूनां सर्वेषां अभावादित्यतः, पूर्वसङ्गत्यर्थं द्रष्टृत्वादिना जडप्रकृत्यादिकं नात्र शङ्कार्हमिति सूचयितुं, अम्बरे सर्वाधारत्वस्य तत्राप्रतीतावप्यम्बरधृतिरूपप्रधानहेतुरस्तीति दर्शयितुं चान्त्यवाक्योक्तावपि तदुपलक्षणमिति भावेन वा, भाष्यटीकयोरुक्तं "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ" इत्यादिचरमवाक्यस्थतदेतच्छब्दपरामर्शविषयं दर्शयितुं वा पूर्ववाक्योक्त्या विषयसंशयटीकां व्यनक्ति—**अत्र स होवाचेत्यादिना।** बृहदारण्यके पञ्चमेऽध्यायेऽष्टमब्राह्मणे गार्गियाज्ञवल्क्यसंवादे श्रूयते, "सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति। स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतं चेति। कस्मिन् खल्वाकाश ओतश्च प्रोतश्चेति। स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशम

चान्द्रिका

अस्थूलं" इत्यादिनोक्तमक्षरं किं चित्प्रकृतिः किं वा ब्रह्मेति चिन्ता।

प्रकाशः

सङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमज-रमभयमममृतमरजोऽशब्दममृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यं न त-दश्नाति किञ्चन तदश्नाति कश्चन। एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशा-सने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या याम्यां च दिशमनु। एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः, यो वा एतद-क्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते, बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति, यो वा एतदक्षरं गार्ग्यवि-दित्वाऽस्माल्लोकात् प्रैति स कृपणः। अथ य एतदक्षरं गार्गि वि-दित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः। तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ श्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्य-दतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्यत्र सर्वाधारत्वेन श्रु-तमक्षरं विषय इत्यर्थः। **चित्प्रकृतिरिति।** कोऽप्यन्तरस्याग्रे नि-

चन्द्रिका

तदर्थं "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च" इति वाक्योक्ताऽम्बरान्तधृतिः किं चित्प्रकृतेर्युक्ता उत न युक्तेति। तदर्थमत्राकाशशब्दः किं मध्यमाक्षरेतरपरः किं वा मध्यमाक्षरपर इति। तदर्थं "न तदश्नाति किञ्चन" इत्युक्तमनशनं किं ब्रह्मणो न युक्तं उत युक्तमिति। यद्याद्यः, तदा ब्रह्मपक्षे अनशनस्यैव बाधकत्वेनाकाशशब्दस्येतरपरत्वादितरधृतेश्च मध्यमाक्षरेऽपि सम्भवात्

प्रकाशः

रस्यत्वादिति भावः। **इति वाक्योक्ताऽम्बरान्तधृतिरिति**। यद्यपि तद्वाक्येऽम्बरधृतिरेवाक्षरे भाति, तथाऽपि पूर्ववाक्येऽम्बरस्य भूतभवदादिसर्वाधारत्वमुक्त्वा तादृशस्याम्बरस्य "कस्मिन् खल्वाकाश ओतश्च" इत्याधारे पृष्टे, "स होवाच" इत्यादिनाऽक्षरस्य महिमानमुक्त्वाऽनन्तरं "एतस्मिन् खल्वक्षरे गार्ग्याकाशः" इत्युक्तत्वात् सर्वाधाराम्बराधारत्वरूपाम्बरान्तधृतिस्तत्र लब्धेति भावेनैवमुक्तिः। **मध्यमेति**। चित्प्रकृतीतरपर इत्यर्थः। वक्ष्यमाणपूर्वपक्षरीत्या फलफलिभावस्यास्फुटत्वादाह—**यदीति**। अत्र हि द्वेधा पूर्वपक्षः। एको भाष्ये "मध्यमाक्षरस्योक्ताः" इति मध्यमाक्षरपदप्रयोगसूचिताक्षरश्रुतिनिरवकाशत्वमूलः। अन्यस्तु न्यायविवरणोक्तानशनविरोधमूलकः। तत्र द्वितीयपूर्वपक्षानुगुणेयं चिन्तापरम्परा प्रधानत्वात् कण्ठोक्ता। आद्यपूर्वपक्षानुगुणा तु 'ब्रह्म' इति चिन्तानन्तरं 'तदर्थमक्षरश्रुतिप्रसिद्ध्यनुसारेणाम्बरान्तधृत्यादिरूपलिङ्गं

चन्द्रिका

ब्रह्मत्वसाधकाभावात् मध्यमाक्षरमेवेहाक्षरम् । यदि तु द्वितीयः, तदा बाधकाभावेनाकाशो मध्यमाक्षरमेवेति तदाश्रयत्वस्यैव ब्रह्मत्वसाधकत्वादक्षरं ब्रह्मैव ॥

पूर्वपक्षस्तु—इदमक्षरं श्रीतत्त्वमेव, विष्णोरप्यविनाशित्वेनाक्षरत्वसम्भवेऽपि, लोकप्रयोगस्य च श्रीतत्त्वेऽप्यभावेऽपि, "ये त्वक्षरमनिर्देश्यं" इत्यादौ श्रीतत्त्वेऽक्षरशब्दवत् क्षराक्षरातीतत्वेन प्रसिद्धे

प्रकाशः

नेयं उत विपरीतमिति चिन्ता, तदर्थं श्रुतिर्निरवकाशा लिङ्गं तु सावकाशमुत विपरीतामिति चिन्ता स्फुटत्वादूह्येति नोक्ता ॥

ननु नेह पूर्वपक्षोदयः, अक्षरश्रुतेर्योगेन ब्रह्मण्यप्युपपत्तेः । लौकिकप्रयोगबाहुल्यरूपरूढेरुभयत्राप्यभावात्, "अदृष्टं द्रष्टृ" इत्यादिनाऽदृश्यत्वश्रवणाच्च, तस्य चादृश्यत्वनये वैष्णवत्वस्य समर्थनात्, द्यावापृथिव्याद्याधारत्वश्रवणाच्च, तस्य च द्युभ्वादिनये विष्णुधर्मतायाः निर्णीतत्वादित्याशङ्क्य द्वेधा पूर्वपक्षटीकां विवृणोति—**पूर्वपक्षस्त्वित्यादिना** । "तत्राक्षरशब्दस्य प्रसिद्धेः" इति टीकोक्तहेतुं समर्थयते—**विष्णोरित्यादिना अक्षरस्येत्युक्तमित्यन्तेन** । **इत्यादाविति** । टीकोदाहृतगीतारूपस्मृतावित्यर्थः । एतेन '**प्रसिद्धेः**' इत्यस्य वैदिकप्रसिद्धेरित्यर्थ उक्तो भवति । **प्रसिद्ध इति** ।

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

चन्द्रिका

विष्णौ तदभावात्, "यथा तदक्षरमधिगम्यते" इत्यादेरपि पूर्व पक्षे चित्प्रकृतिपरत्वात् । अत एवैतस्यादृश्यत्वादिगुणकस्याक्षरस्यान्यत्वे पूर्वोक्तमप्यदृश्यत्वादिगुणकमक्षरमप्यन्यत्स्यादित्यदृश्यत्वाधिकरणमाक्षिप्तं भाष्यादौ । अन्यथा "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इति द्यावापृथिव्याश्रयत्वेन श्रुतस्याक्षरस्यान्यत्वे द्युभ्वाद्यायतनमप्यन्यत्स्यादिति सन्निहितं द्युभ्वाद्यधिकरणमाक्षिप्येत । प्रवृत्तिनिमित्तसाधारण्यप्रयुक्ता

प्रकाशः

क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।

उत्तमः पुरुषस्त्वन्यः....... ............... ॥

इति गीतायां, "अक्षरा तत्परो हरिः" इति प्रागुदाहृतश्रुतौ च प्रसिद्ध इत्यर्थः । ब्रह्मण्यप्यस्त्वक्षरत्वप्रसिद्धिरित्यतो नेत्याह — **यथेति** । **अत एवेति** । पूर्वपक्षे तत्र ब्रह्मपरत्वासम्मतेरेवेत्यर्थः । यद्वा—अक्षरश्रुतेः निरवकाशत्वसम्पत्त्यर्थत्वादेवेत्यर्थः । प्रयोजनार्थं तदाक्षेप उपपन्न इत्यत आह—**अन्यथेति** । फलमात्रार्थत्व इत्यर्थः । ननु यथा पादान्त्यप्राणाधिकरणे पूर्वपक्षे "तद्वै त्वं प्राणोऽभवः" इत्यत्र प्राणशब्दस्य विष्णुत्वाक्षेपात् उभयत्रप्रसिद्ध्यभावः, तथाऽत्रापि स्यात्, ब्रह्मणि क्वाप्यक्षरपदप्रयोगासम्मतेरित्यत आह—**प्रवृत्तीति** । यथा "ज्योतिर्दर्शनात्" इत्यत्र ज्योतिश्श-

चन्द्रिका

चोभयत्र प्रसिद्धिर्न पूर्वपक्षदशायां ब्रह्मणि प्रयोगमपेक्षते। अत एव भाष्ये 'श्रीतत्त्वस्य' इति वक्तव्ये पूर्वपक्षे हेतुं दर्शयितुं 'अक्षरस्य' इत्युक्तम्। अस्तु वा "अक्षरत्रयमीरितम्" इति वचनादन्यत्राक्षरशब्दो ब्रह्मणि। अत एवोत्तमाक्षरेऽक्षरशब्दमङ्गीकृत्य तद्वृत्त्या

प्रकाशः

ब्दस्य जीवेशरूपोभयत्र प्रसिद्धिस्तथेति भावः। हेतूक्तिपरटीकायाः उद्भाष्यत्वभ्रमं निराह—अत एवेति। एवं भाष्येऽनेकज्ञापकोपलम्भबलेन "तत्राक्षरशब्दस्य प्रसिद्धेः" इति टीकां श्रुतिनिरवकाशत्वाभिप्रायतया व्याख्याय, इदानीं टीकायां 'तत्रैव' इत्यनुक्त्वा "तत्राक्षरशब्दस्य प्रसिद्धेः" इत्येवोक्तत्वात्, तथा "एतस्य वा अक्षरस्य" इत्यादिना चन्द्राद्याधारत्वं श्रीतत्त्वलिङ्गतयोपपाद्य, "अदृष्टं द्रष्टृ" इत्यादिनाऽत्र श्रुतादृश्यत्वादिकं च "ये त्वक्षरमनिर्देश्यं" इत्यादिना श्रीतत्त्वे प्रतिपाद्य, अन्ते "अक्षरश्रुतेरदृश्यत्वादिलिङ्गानां च मध्यमोत्तमयोः साम्येऽत्र मध्यममेवोच्यत इति निर्बन्धे को हेतुः" इत्यादिनाऽक्षरश्रुतिलिङ्गानां सावकाशत्वमुपेत्य, "न तदश्नाति" इत्युक्तानशनलिङ्गेन पूर्वपक्षोज्जीवनस्य कृतत्वात्तत्र कथं श्रुतिलिङ्गानां विष्णावपि क्षराक्षरातीतत्वेनोक्ते वृत्तिः, कथं चानशनेनोज्जीवनमित्यतः, श्रुत्यादेः सावकाशत्वमुपेत्य अशेषटीकां व्यनक्ति—अस्तु वेति। 'अन्यत्र' वाक्यान्तरे। श्रुतेः सावकाशत्वेन टीकाप्रवृत्तौ भाष्यज्ञापकमाह—अत एवेति।

चन्द्रिका

वृत्त्यर्थं भाष्ये मध्यमशब्दः । तथापीहाक्षरं न ब्रह्म, "सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति, "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इति चाक्षरे श्रुतस्य चन्द्रसूर्याद्याधारत्वस्य "अहं सोममाहनसं बिभर्मि" इत्यादिना श्रीतत्त्वइव द्युभ्वाद्यधिकरणन्यायेन ब्रह्मण्यपि सम्भवेऽपि, "अदृष्टं द्रष्टृश्रुतं श्रोतृ" इत्यक्षरे श्रुतस्यादृश्यत्वादेश्च "ये त्वक्षरम निर्देश्यं" इत्यादिना श्रीतत्त्व इवादृश्यत्वाद्यधिकरणन्यायेन ब्रह्मण्यपि सम्भवेऽपि, "न तदश्नाति किञ्चन" इत्यक्षरे श्रुतस्यान त्तृत्वस्य "अत्ता चराचर" इत्यत्र सर्वात्तृत्वेनोक्ते ब्रह्मण्यसम्भवात् । न चैतदशुभानशनपरं, 'किञ्चन' इत्युक्तेः । मध्यमाक्षरस्य तु

प्रकाशः

**इहेति** । विषयवाक्ये । "—'आहनसं' यज्ञेष्वभिषूयमाणं, लताभिमानित्वेनेयमुक्तिः" इति टीका । तत्त्वप्रदीपे तु 'आहनसं' आसमन्ताद्धन्तारं संहर्तारमित्यर्थ उक्तः । एतच्चाम्भ्रणीशब्दितलक्ष्मीवाक्यम् । ननु "गुहां प्रविष्टावात्मानौ" इत्यत्र अनशनश्रुतेर्गतिरुक्तेत्यतो वैषम्यमाह—**न चेति** । तत्र 'अनश्नन्' इत्येव प्रतीत्या तथा गतिसम्भवेऽपि इह 'किञ्चन' इत्युक्त्या सामान्यनिषेधस्यैव प्रतीतेरित्यर्थः । "न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्ति" इति वाक्यं टीकायामयुक्तं, श्रीतत्त्वस्यापि नित्य मुक्ततया सुखाशनस्येशरमणानिमित्तसुखभोगस्य भावाच्चेत्यतो व्यनक्ति—**मध्यमाक्षरस्य त्विति** ॥

चन्द्रिका

"अत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्" इति श्रुतौ स्वतन्त्रोन्मेषाभावेनानुन्मेषोक्तिवत् स्वतन्त्राशनाभावेन वा, ब्रह्मवत् संहर्तृत्वाभावेन वा "अत्ता" इत्यत्र संहाररूपतयोक्तस्याशनस्याभावो युक्तः। तदुक्तं न्यायविवरणे "—अत्तेत्युक्त्वा "नतदश्नाति किञ्चन" इति विरुद्धता" इति। अत एवादृश्यत्वचन्द्राद्याधारत्वादिलिङ्गानां ब्रह्मणि सम्भवमुपेत्य पूर्वपक्षस्य प्रवृत्तत्वादेव भाष्ये "तस्यापि सम्भवात्" इत्यपि शब्दः, "अदृश्यत्वादिलिङ्गानां मध्यमाक्षरेऽपि सम्भवात्" इति टीका च। अस्मिन् पक्षेऽदृश्यत्वाद्यधिकरणाक्षेपस्तु विष्णोरेवादृश्यत्वादीत्यवधारणस्याक्षेपादिति ज्ञेयम्। अत एव चात्र टीकायां "अदृश्यत्वादिकं चान्यस्य प्रसज्यते" इत्युक्तं, न त्वन्यस्यैवेति। अत एवाम्बरान्तधृतिप्रशासनादिकमपि मध्यमाक्षरस्यैवेति ॥

प्रकाशः

टीकायामनशनलिङ्गेन पूर्वपक्षोज्जीवनं मूलारूढं दर्शयति—**तदुक्तमिति**। एवं तर्हि कथं पूर्वाक्षेपः, प्रागुक्तस्य ब्रह्मण्यभ्युपेतत्वादित्यत आह—**अस्मिन्निति**। ननु सर्वाधारत्वादिलिङ्गाद्विष्णुः किं न स्यादित्यत आह— **अत एवेति** ॥

"इदमक्षरं ब्रह्मैव" इति सूत्रभाष्याद्युक्तप्रतिज्ञांशेनैवाक्षरश्रुतेर्विष्णौ महायोगविद्वद्रूढिभ्यां मुख्यत्वस्य सूचनात् न तयाऽन्यप्राप्तिर्युक्तेति भावेनान्यत्रोक्तश्रुत्यादिना हरौ महायोगविद्वद्रूढी दर्शय-

चान्द्रिका

सिद्धान्तस्तु— अक्षरं ब्रह्मैव, चतुर्विधविनाशरहिते तत्रैवाक्षरशब्दप्रवृत्तिनिमित्तपौष्कल्यात् । "तस्मादक्षरं तस्मादक्षरमित्याचक्षते एतमेव सन्तं" "अक्षरं ब्रह्म परमं" इत्यादिश्रुतिस्मृतिषु तस्य तत्र प्रयोगाच्च । अत एव तत्रोत्तमाक्षरत्वप्रसिद्धिः ।

प्रकाशः

न्नाद्यं श्रुत्यनवकाशत्वप्रयुक्तपूर्वपक्षं तावन्निराह—**चतुर्विधेति** ।

अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तः तदभावो हरेस्सदा ॥

इति स्मृतेरिति भावः । प्रयोगबाहुल्यरूपरूढौ ऐतरेयश्रुतिमाह—**तस्मादिति** । प्रवृत्तिहेतुपौष्कल्यादित्यर्थः । 'एतं सन्तं' प्रवृत्तिनिमित्तवत्तया विद्यमानं ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥

इति गीता । 'अत एव' अक्षरशब्दमुख्यार्थत्वादेवेत्यर्थः । क्षराक्षरातीतत्वं च मुख्यवृत्त्याऽक्षरशब्दार्थत्वेऽपि परतन्त्रचेतनवैलक्षण्यमात्रेणोपपन्नामिति भावः । प्रसिद्धिः "परतः परमक्षरम्" इत्यादौ । एवं प्रतिज्ञांशसूचितन्यायं भाष्यादावस्फुटमपि,

शब्दप्रवृत्तिहेतूनां तस्मिन् मुख्यसमन्वयात् ।
अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा ॥
तद्वाचकत्वं शब्दानां बहुलातिप्रयोगतः ।

चन्द्रिका

किञ्चेहाकाशं, "यद्भूतं" इत्यादिना "आकाश एव तदोतं च प्रोतं च" इत्यन्तेन सर्वचेतनपोषकतया, "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्यनेनान्याश्रितत्वेन चोच्यते। न च तत् चित्प्रकृतितोऽन्यत्र युक्तम्। न चात्रौतत्वादिकं उपादेयत्वमाधेयत्वं वा, न तु पोष्यत्वं, तच्च सर्वस्य जडप्रकृतिं प्रति सम्भवतीति

प्रकाशः

रूढमित्येव साध्यं स्यात्............... ॥

इत्यानन्दमयनयानुव्याख्याने सामान्यतः उक्तमन्यत्रोक्तश्रुत्यादिना स्फुटीकृत्य, इदानीं 'अम्बरान्तधृतेः' इति सौत्रलिङ्गोक्तिपरटीकां विवृण्वन्, तस्य निरवकाशत्वं वक्तुं आकाशशब्दस्य "आकाशाख्य प्रकृते" इति टीकोक्तचित्प्रकृतिरूपमध्यमाक्षरार्थत्वमाह—**किञ्चे-त्यादिना आकाशं चित्प्रकृतिरेवेत्यन्तेन**। इह 'आकाशं' इ-त्यस्य 'उच्यते' इत्यन्वयः। **यद्भूतमिति**। "यद्भूतं च भवच्च भविष्यच्चेत्याक्षते आकाश एव तदोतं च प्रोतं च" इत्यन्ते-नेत्यर्थः। "कस्मिन् खल्वाकाश ओतश्च प्रोतश्च" इति प्रश्ने "एतस्मिन्" इति परिहारः। **न च तदिति**। सर्वोपजीव्यत्वे सत्यन्यैकाश्रितत्वस्य श्रीतत्त्वासाधारणलिङ्गत्वस्य "अव्यक्तात्पुरुषः परः" "ममयोनिरप्स्व १ न्तस्समुद्रे" इत्यादिमानसिद्धत्वादिति भावः। ओतत्वं पोष्यत्वमित्येतत्साधयति—**न चेत्यादिना**। 'उपादेयत्वं' उपादानपरिणामत्वमित्यर्थः।

चन्द्रिका

शङ्क्यं, "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च" इत्याकाशाश्रयत्वेनोच्यमानाक्षरस्य द्रष्टृत्वादिना चेतनत्वेनोपादानत्वायोगात् । "कस्मिन् खलु इन्द्रलोका ओताश्च प्रोताश्च" इति "प्रजापतिलोकेषु गार्गि" इत्यादावाधेयत्वस्याप्यभावाच्च । नह्यधस्तन इन्द्रलोक उपरितने प्रजापतिलोके आहितः। एकप्रकरणस्थस्यौतादिशब्दस्य नानार्थत्वं चायुक्तम् । यस्मात् "रुद्रं समाश्रिता देवाः" "राज्ञि राज्यं समाहितम्"

प्रकाशः

**आधेयत्वस्याप्यभावाच्चेति** । इन्द्रलोकस्य प्रजापतिलोकादधस्तनत्वादिति भावः । अस्य वाक्यस्य सिद्धान्तार्थस्तु—

शिवो हीश्वरनामा स्यात्तत्पारम्यात्सरस्वती ।
इन्द्रेत्युक्ता तत्सुखानां ब्रह्मादिर्मुक्तिगामिनाम् ॥
तत्सुखानां परं ब्रह्म मुक्तिगानां परायणम् ।

इत्यादिब्रह्माण्डस्मृत्या ध्येयः । संसाराल्लुप्तानां मुक्तानां कानि सुखानि लोका इत्यर्थः । ननु तत्र बाधकादर्थान्तरमस्त्वित्यत आह—**एकेति** । अदृश्यत्वनये अक्षरशब्दस्य नानार्थत्वं परावधित्वादिबाधकात् "अक्षरत्रयमीरितम्" इत्यादिस्मृतिबलाच्चोपेतमपि नेहैकार्थत्वे बाधकमस्तीति भावः । तावतौतत्वं पोष्यत्वरूपमिति कुत इत्यत आह—**तस्मादिति** । परिशेषादित्यर्थः ।

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः ॥

चन्द्रिका

इत्यादाविव पोष्यत्वादिकमेवौतत्वम् । न चाचेतनस्य पोष्यत्वं युक्तमिति भूतादिपदमपि देहद्वारा भूतत्वादियुक्तचेतनपरमेवेत्याकाशं चित्प्रकृतिरेव । ततश्च तदाश्रयोऽक्षरं ब्रह्मैव, न चित्प्रकृतिः, स्वाश्रयत्वस्य विरुद्धत्वात् । तदुक्तं न्यायविवरणे—"सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धम्" इति । उक्तं च बृहदारण्यकभाष्ये—

दीप्तिराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता ।
तदाश्रयः परो विष्णुः सोऽस्थूलादिगुणो मतः ॥

इति । एवञ्च "मयि सर्वमिदं प्रोतं" इत्यादिस्मृतिरप्यनुगृहीता भ-

प्रकाश.

इत्यादिभारतवाक्यादाविवेत्यर्थः । ननु "भूतं च भवच्च" इत्युक्तजडस्य कथं पोष्यत्वम् । अत एतस्मादेव बाधकान्नानार्थत्वं युक्तमित्यत आह—न चेति । टीकायां भाष्येऽनुक्तस्यापि "आकाशाख्यप्रकृतेः" इत्यस्योक्तिर्निर्मूला । किञ्चेदं लिङ्गमन्यस्य नेत्येतदपि टीकायां न प्रतीयते, यस्यात्र विवरणं क्रियत इत्यत आह—**तदुक्तमिति** । 'विष्णोरन्यस्य' श्रीतत्त्वस्येत्यर्थः । टीकायां न्यायविवरणे च प्रकृतिपदस्यैव प्रयोगाच्चित्प्रकृतिपरत्वे स्पष्टं ज्ञापकमाह—**उक्तं चेति** । समाख्याबलाच्चैवमिति भावेनाह—**एवञ्चेति** । विष्णोरेव सर्वाधारत्वे,

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।

चन्द्रिका

वति । न चाकाशपदस्य प्रसिद्ध्यनुसरणे भूताकाशपरता, आकाशाधिकरणानुसरणे च ब्रह्मपरता, न तु जडाजडपरत्वमिति, पूर्वपक्षः सिद्धान्तश्चायुक्त इति वाच्यं, "आकाशस्तल्लिङ्गात्" इत्यत्र प्रसिद्धत्यागेन लिङ्गानुसार्यर्थपरत्वस्योक्ततया लिङ्गानुसारिप्रकृतिपरताया अपि तन्न्यायसिद्धत्वात् । किञ्च "अक्षरस्य प्रशासने" इत्यत्र प्रशब्दार्थोऽसङ्कुचितविषयत्वानन्यायत्तत्वादिरूपप्रकर्षो भाष्योक्तश्रुत्यादिभिर्न ब्रह्मणोऽन्यत्र युक्तः ।

प्रकाशः

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ॥

इत्यादिगीताऽप्यनुकूलिता भवतीत्यर्थः । अत्राकाशस्य चित्प्रकृतिपरत्वं आकाशनयन्यायसिद्धत्वं चेत्यतच्छङ्कापूर्वमाह—**न चाकाशेति । लिङ्गानुसारीति** । तथा च पूर्वपक्षे सर्वाधारत्वे सत्यक्षरशब्दितश्रीतत्त्वाधीनत्वस्य जडप्रकृतिलिङ्गत्वात्, सर्वधारत्वे सति ब्रह्मैकाश्रितत्वस्य चित्प्रकृतिलिङ्गत्वात्सिद्धान्ते चित्प्रकृतिपरत्वं युक्तमिति भावः । "सा च प्रशासनात्" इति सूत्रोक्तहेतोरपि निरवकाशत्वमाह—**किञ्चेति । भाष्योक्तेति** । "सप्तार्धगर्भा भुवनस्य" इत्यादिभिरित्यर्थः । एतेन "युक्त्यन्तरेण विष्णोरेवाक्षरत्वं" इत्यादिटीकातात्पर्यार्थ उक्तो भवति । "अन्यभावव्यावृत्तेश्च" इति सूत्रोक्तहेतुः भाष्यादावन्यवस्तुस्वभावानां लौकिकस्थौल्यादीनां राहित्यकथनादिति व्याख्यातः । स न युक्तः, श्रुतौ तथा प्रती-

चान्द्रिका

किञ्च "अस्थूलमनणु" इत्यादिना न स्थौल्यादिमात्रस्य निषेधः, निस्स्वभावत्वापातात्, श्रुत्यन्तरविरोधाच्च । प्राकृतस्य स्थौल्यादेर्निषेधोऽपि चित्प्रकृतावीश्वर इव न निरपेक्षः ।

प्रकाशः

त्यभावेनासिद्ध्यापत्तेः । टीकायां लौकिकस्थौल्यादिराहित्यस्य "मध्यमाक्षरस्याप्राकृतविग्रहवत्त्वेऽपि" इत्यादिना व्यभिचारमाशङ्क्य "भगवदपेक्षयैव" इति समाधानमुक्तम् । तदपि न युक्तं, निरपेक्षस्थौल्यादिराहित्यस्य श्रुतौ अप्रतीतेरित्यतो भाष्याद्याशयं व्यञ्जयन् "अन्यभाव" इतिसूत्रोक्तनिरपेक्षप्राकृतस्थौल्यादिराहित्यस्य श्रुत्यभिप्रेतत्वं साधयति—**किञ्चेत्यादिना** । अस्तु को दोष इत्यत आह—**श्रुत्यन्तरेति** । "अस्थूलोऽनणुरमध्यमो मध्यमो व्यापकोऽव्यापको यो हरिः" "अणोरणीयान् महतो महीयान् ज्यायान्पृथिव्या दिवो ज्यायान्" इत्यादिश्रुत्यन्तरविरोधाच्चेत्यर्थः । यद्वा-

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः ।
दोषाःश्रुताश्च नेत्याद्याः प्रमाणं श्रुतिरत्र च ॥

इत्यनुभाष्योक्तश्रुत्यन्तरेत्यर्थः । सुधायां तु—"सर्वत्र प्रसिद्धोपदेशात्" "अत्ता चराचरग्रहणात्" "रूपोपन्यासाच्च" इत्युक्तविरोधः स्यादित्यप्युक्तम् । निस्स्वभावस्य सर्वत्र स्थित्यदनादेरयोगादित्येतदुपलक्षणमिति भावः । **न निरपेक्षइति** । तथैव दहरनये भाष्यादौ सत्यकामत्वादिषु प्रतिपादनादिति भावः । अस्तु

चन्द्रिका

न च "यस्य पर्णमयी जुहूर्भवति" इत्यादौ प्रकृतिगतनिरपेक्षजुह्वा इवात्रापि निरपेक्षास्थूलत्वादेर्ग्रहणसम्भवे सापेक्षं ग्राह्यम्। किञ्च भाष्योक्तश्रुत्यादिभिरस्थूलत्वादि विष्णावेव प्रसिद्धम्। न च प्रसिद्ध सम्भवेऽप्यप्रसिद्धं ग्राह्यम्।

प्रकाश

तर्हि श्रुतौ प्राकृतस्य स्थौल्यादेर्निषेधः, तावता निरपेक्षमेव अस्थूलत्वादिकं श्रुतावुच्यत इति कुतः, येन चित्प्रकृतौ व्यभिचारो न स्यादित्यत आह—**न च यस्येति**। पर्णमय्यधिकरणशरीरं "प्राणस्तथाऽनुगमात्" इत्यत्र विवृतम्। "यस्य पर्णमयी जुहूर्भवति न स पापश्श्लोकं शृणोति" "यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति सरसा अस्याहुतयो भवन्ति" इत्यादौ प्रकृतिरूपक्रत्वर्थतया फलानिरपेक्षफलजुह्वनुवादेन पर्णमयीत्व विधिः, न तु पुरुषार्थतया क्रत्वङ्गजुह्वाः क्रतुफलेनैव फलवत्त्वेन पृथक्फलानपेक्षत्वात् फलश्रुतिरर्थवाद इत्युच्यते, तद्वन्निरपेक्षस्य ग्रहण मित्यर्थः। प्राकृतस्थौल्यादिराहित्यं न चित्प्रकृतौ व्यभिचारीत्यत्र युक्त्यन्तरमाह—**किञ्चेति**। श्रुत्यादिप्रसिद्धं विष्णवसाधारणमेवास्थूलत्वादिकं श्रुतौ ग्राह्यमिति कुत इत्यत आह—**न च प्रसिद्धेति**। अत्र भाष्ये

अस्थूलानणुरूपोऽसावविश्वो विश्व एव च।
विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तमः।

इत्यैश्वर्येण ईश्वरे विरोधसमाधानमयुक्तं, तथात्वे जीवेशाभेदोपगमे

चान्द्रिका

ब्रह्मणः परस्परविरुद्धस्थौल्याणुत्वोभयराहित्यं च श्रुतत्वात् न विरुद्धम्।

दर्वीहोमा यथैवान्ये प्रकृतेर्विकृतेरपि ।

ईश्वरोऽपि तथैवान्यो महतोऽप्यणुतोऽपि हि ॥

युक्तं हि दर्वीहोमानां परस्परविरुद्धप्रकृतिविकृतित्वोभयराहित्य-

प्रकाशः

नाल्पज्ञत्वसर्वज्ञत्वाद्यपि समाधेयं स्यादित्यतः प्रमाणभावाभावाभ्यां व्यवस्थेति भावेनाह—**ब्रह्मण इति**। यद्वा—लोके भिन्नाधिकरणतयोपलब्धानामस्थूलत्वानणुत्वादीनां कथं विष्णौ समावेश इत्यत आह—**ब्रह्मण इति**। **श्रुतत्वादिति**। यत्र हि धर्माणां भिन्नाधिकरणत्वं प्रमितं, तत्रैव तेषां समावेशाभ्युपगमे हि विरोधः, यत्र प्रमाणेनैव सहोपलम्भोऽवगतः, तत्र तथैवाभ्युपगमो न विरुद्ध इति भावः। सदृष्टान्तं युक्त्या चोपपादयति—**दर्वीति**। श्लोकोक्तमुपलक्षणमिति भावेन श्लोकोक्तं व्यनक्ति—**युक्तमिति**। 'प्राकृतपरिमाणद्वयराहित्यं' इत्यन्वयः। तत्र हेतुगर्भं—**अप्राकृतस्येति**। असम्भावनानिरासाय दृष्टान्तः—**दर्वीत्यादि**। "तस्मिन् होमः प्रवर्तेत अव्यक्तत्वात्" इत्यष्टमाध्यायान्तिमाधिकरणे "यदेकया जुहुयाद्दर्वीहोमं कुर्यात्" इत्यर्थवादगतदर्वीहोमशब्दितान् वास्तुहोमादीन् उदाहृत्य, किमेते सोमयागादिप्रकृतिका उतापूर्वा एवेति संशये, अश्रुतेतिकर्तव्यताकत्वात् देवतासम्बन्धस्यास्पष्टत्वेनाव्यक्तेतिकर्तव्यताकत्वाच्च "अव्यक्तासु तु सोमस्य" इति न्यायेन सोमयागप्रकृतिका इति

चन्द्रिका

वत्, वाय्वादिस्पर्शस्योष्णशीतबहिर्भाववद्पाकजरूपस्याबादेः पाकज-नीलानीलरूपराहित्यवच्चाप्राकृतस्य ब्रह्मणः प्राकृतपरिमाणद्वयरा-

प्रकाशः

प्राप्ते, सोमस्य यागत्वादेतेषां होमत्वात् सादृश्याभावान्न तत्प्रकृतिकाः, किन्तु नारिष्टाग्निहोत्रादिहोमप्रकृतिका इति पक्षान्तरमुक्त्वा, नारि-ष्टाङ्गभूतानामिध्मादीनां त्र्यम्बकहोमेषु दर्वीहोमनामकेष्वभावदर्शना-दपूर्वा एव दर्वीहोमा इति सिद्धान्तितम्। तथा चैवमुक्तन्यायेन विकृतित्वराहित्यं, तन्मुखनिरीक्षकस्यान्यस्य कर्मणोऽभावात् प्रकृति-त्वराहित्यं च यथा दर्वीहोमनामकानां होमानां, तथा प्रकृतेऽपीत्यर्थः। यद्यपि प्रकृतित्वविकृतित्वयोः न परस्परं विरोधः, अग्नीषोमीय-पशोः पश्वन्तरापेक्षया प्रकृतित्वेऽपि दर्शपौर्णमासापेक्षया विकृति-त्वात्। द्वादशाहस्याहर्गणापेक्षया प्रकृतित्वेऽपि ज्योतिष्टोमापे-क्षया विकृतित्वाच्च। तथाऽपि प्रतियोगिभेदाभावे तयोर्विरुद्धत्व-मस्तीति वा, स्वापेक्षया स्वस्य द्वयं विरुद्धमिति वा, परस्प-रपरिहारणे क्वचिद्दर्शपौर्णमासादौ दृष्टत्वाभिप्रायेण वा 'परस्पर-विरुद्ध'* इति प्रकृतिविकृत्योर्विशेषणमुपात्तम्। **वाय्विति**। यथा तार्किकमते तेजोगतस्य स्पर्शस्योष्णत्वं, जलगतस्य शीतत्वं, वायुग-तस्योभयबहिर्भावः, पृथिवीवाय्वोरनुष्णाशीतस्पर्शोररीकरणात्तद्वदित्य-र्थः। **पाकजेति**। पृथिवीगतस्य रूपस्य तपनादितेजस्सम्बन्धेन पा-कजत्वमङ्गीकृतमिति— **पाकजेत्युक्तम्**।

* 'यद्वा—'विरुद्ध' इति राहित्ययोर्विशेषणम्।' इति क्वचित्पुस्तके दृश्यते।

चन्द्रिका

हित्यम् । अथवा—अनुव्याख्यानसुधोक्तरीत्याऽस्थूलादिपदैस्तद्विरुद्धा-णुत्वादिविधिरस्तु । न चैवं विरोधः,

यथैकस्यैव दध्यादेः क्रत्वर्थपुरुषार्थते ।
अणीयस्त्वमहीयस्त्वे तथैकस्यैव हीशितुः ॥

दर्शपूर्णमासादीनां केवलप्रकृतित्वेऽपि, पशुगणादीनां केवलविकृति-

प्रकाशः

एवं भाष्याद्युक्तं सूत्रे साक्षादुपात्तं प्राकृतस्थौल्यादिराहित्यरूपहेतुं समर्थ्य, सौत्रचशब्दसूचितमनुव्याख्यानादौ विवृतं हेत्वन्तरं समर्थ-यमानः पक्षान्तरमाह—**अथ वेति । न चैवमिति ।** अस्थूलानण्वा-दिशब्दैस्तद्विरुद्धाणुत्वमहत्त्वादिप्रापणे सतीत्यर्थः । श्लोकगतहिशब्दो क्तहेतुना 'न च विरोधः' इति साध्यस्यान्वयः, 'यस्मादीशितुः ते युक्ते, तस्मान्न विरोधः' इति । श्लोकोक्तमुपलक्षणमित्यभिप्रेत्य पूर्वार्धं तावद्व्याचष्टे—**दर्शेति ।** अष्टमे प्रथमपादे "इष्टिषु दर्श-पूर्णमासयोः प्रवृत्तिः स्यात्" इति चतुर्थेऽधिकरणे "सौर्यं चरुं निर्वपेत्, ऐन्द्राग्नमेकादशकपालं निर्वपेत्" इत्यादिवाक्योक्तसौर्यै-न्द्राग्नादिषु दार्शपौर्णमासिको विध्यन्त उत सौमिक इति संशये, नियामकाभावादनियम इति प्राप्ते, तद्धितेन देवतानिर्देशो निर्वपति-शब्दश्चेत्यादिलिङ्गविशेषाद्दार्शपौर्णमासिक इति सिद्धान्तितम् । तेन तत्र दर्शपूर्णमासयोः सर्वाङ्गोपदेशेन केवलप्रकृतित्वं सिद्धम् । आ-दिपदेनाग्निहोत्रादिग्रहणम् । तथा तत्रैव "तत्प्रवृत्तिर्गणेषु स्यात्

प्रकाशः

प्रतिपशु यूपदर्शनात्" इत्यष्टमेऽधिकरणे "मैत्रं श्वेतमालभेत, वारुणं कृष्णम्" इत्यादिषु पशुगणेषु किमग्नीषोमीयस्य पशोः विध्यन्त उतैकादशिनानां पशूनां विध्यन्त इति संशये, आलभत्यादिसामान्यादग्नीषोमीयस्येति प्राप्ते, प्रतिपशु यूपदर्शनादिविशेषलिङ्गात्, अग्नीषोमीयप्रकृतित्वे चोदकेनैकस्यैव यूपस्य प्राप्तत्वेन प्रतिपशु यूपदर्शनं विरुध्येतेति पशुगणेष्वेकादशिनाना पशूनां विध्यन्त इति सिद्धान्तितम्। तेन तत्र पशुगणानां केवलविकृतित्वं सिद्धम्। आदिपदेन शाक्यानामयनादिसंवत्सरसत्राणां ग्रहणम्। तथा तत्रैव "पशौ च लिङ्गदर्शनात्" इति पञ्चमेऽधिकरणे "अग्नीषोमीयं पशुमालभेत" इत्युक्ताग्नीषोमीयपशौ किं दार्शपौर्णमासिको विध्यन्त उत सौमिक इति सन्देहे, अनियम इति प्राप्ते, तद्धितेन देवतानिर्देशात् लिङ्गदर्शनाद्दार्शपौर्णमासिको विध्यन्त इति उक्तत्वादग्नीषोमीयपशोर्विकृतित्वं सिद्धम्। तथा तत्रैव "दैक्षस्य चेतरेषु" इति षष्ठेऽधिकरणे सवनीयानुबन्ध्यनिरूढादिपशुषु किं दार्शपौर्णमासिको विध्यन्त उत दैक्षस्य दीक्षितेनानुष्ठीयमानेषु प्राथमिकत्वाद्दैक्षशब्दितस्याग्नीषोमीयस्येति संशये, पूर्ववद्दार्शपौर्णमासिक इति प्राप्ते, पशुद्रव्यकत्वसामान्याद्विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्याग्नीषोमीयस्य विध्यन्त इत्युक्तत्वादग्नीषोमीयस्य पशोः सवनीयादिपशुबन्धं प्रति प्रकृतित्वं दर्शपूर्णमासाविकृतित्वं च पूर्वोक्तदिशा

चन्द्रिका

त्वेऽपि अग्नीषोमीयपश्वादीनां प्रकृतित्वे सति विकृतित्ववत्, अवघा तादीनां दृष्टमात्रार्थत्वेऽपि प्रोक्षणादीनामदृष्टमात्रार्थत्वेऽपि स्विष्ट-कृदादीनामुभयार्थत्ववत्, अन्यत्र कामाधिकारनित्याधिकारयोरन्यत

प्रकाशः

सिद्धमिति द्वैरूप्यं ध्येयम् । **अवघातादीनामिति** । "छन्दोभि-धानात्" इत्यत्र प्राक् प्रपञ्चितमेतत् । "तानि द्वैधं गुणप्रधान भूतानि" इत्यधिकरणे दृष्टतुषविमोकमात्रार्थत्वं सिद्धम् । **प्रोक्ष-णेति**। द्वितीयस्याद्यपादे "धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्" इति पञ्चमेऽधिकरणे "व्रीहीन् प्रोक्षति, स्रुचः संमार्ष्टि" इत्यु-क्तप्रोक्षणसम्मार्जनादीनां द्रव्यगतसंस्काररूपादृष्टार्थत्वमुक्तम् । **स्विष्ट-कृदिति** । स्विष्टकृदधिकरणं जिज्ञासाधिकरणे प्रपञ्चितम् । **का-मेति** । "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इत्यादीनां का-माधिकारत्वं षष्ठाद्यस्वर्गकामाधिकरणे सिद्धम् । "यावज्जीवमग्नि-होत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादीनां "अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधी-यते" इति "सर्वशक्तौ प्रवृत्तिः स्यात् तथा भूतोपदेशात्" इत्यादिषु नित्याधिकारत्वं षष्ठे द्वितीयपादे, तृतीयपादाद्ये च सिद्धम् । यद्वा नित्यशब्दो नैमित्तिकपरः, जीवनादिगृहदाहाद्यनागन्तुकानित्याधि-कारत्वतान्निमित्तवत्त्वमात्रेण नित्यनैमित्तिकयोर्भेदात् । क्वचित्तु "नै-मित्तिक" इत्येव पाठः । "यस्य गृहान् दहति अग्नये क्षाम-वते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादेर्नैमित्तिकाधिकारत्वं, "क्षामे

चान्द्रिका

रमात्रस्य सत्त्वेऽपि जातेष्टौ द्वयोः संवलनवत्, व्रीह्यादीनां क्रत्व र्थमात्रत्वेऽपि गोदोहनादीनां पुरुषार्थमात्रत्वेऽपि दध्यादीनामुभ

प्रकाशः

तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात्" इति षष्ठचतुर्थपादीयपञ्चमाधिकरणे सिद्धम् । "यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्" इत्यादेराधिकारद्वयसंवलनं, "पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये" इति प्रथमाध्यायचतुर्थपादीयद्वादशाधिकरणे "फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात्" इति चतुर्थाध्यायतृतीयपादीयसप्तदशेऽधिकरणे च सिद्धम्, पुत्रजन्मनिमित्तकत्वस्य फलार्थत्वस्य च श्रवणात् । **व्रीह्यादीनामिति** । एतच्च "तानि द्वैधं गुणप्रधानभूतानि" इत्यत्र सिद्धम् । तानिद्वैधाधिकरणं छन्दोनये विवृतम् । **गोदोहनेति** । चतुर्थस्याद्यपादे "यस्मिन् प्रीतिः पुरुषस्य तस्लिप्साऽर्थलक्षणाऽविभक्तत्वात्" इति सूत्रे तृतीयवर्णके "गोदोहनेन पशुकामस्य प्रणयेत्" इति दर्शपूर्णमासप्रकरणे श्रुतं गोदोहनं क्रत्वर्थमपि उत पुरुषार्थमेवेति संशये, षष्ठीश्रुत्या पुरुषार्थं क्रतूपकारकत्वाच्च क्रत्वर्थमित्युभयार्थमिति प्राप्ते, उपकारकत्वलक्षणशेषत्वानिराकरणादन्यार्थस्यापि क्रतूपकारकत्वाविरोधात् श्रुत्या पुरुषार्थत्वमेवेति सिद्धान्तितम् । **दध्यादीनामिति** । चतुर्थस्य तृतीयपादे "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति तृतीयेऽधिकरणे "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्राग्निहोत्रप्रकरणगते वाक्ये किं काम्यमेव दधि नित्येऽप्यग्नि

चन्द्रिका

यार्थत्ववच्च, अन्यत्राणुत्वमहत्त्वयोरेकैकमात्रस्य सत्त्वेऽपि अणुन्येव कृ-ष्णस्य मुखे गर्भीकृतब्रह्माण्डे महत्त्वग्राहकस्य यशोदाप्रत्यक्षस्य, अणु-

प्रकाशः

होत्रे स्यात् उत ततोऽन्यन्नित्यं इति संशये, काम्यस्य नित्यार्थत्वासम्भवादन्यदेव नित्यं स्यात्, न च "दध्ना जुहोति" इति दध्नो नित्यार्थत्वमपि श्रूयत इति वाच्यं, तस्य काम्यवाक्यैकवाक्यत्वादिति प्राप्ते, उभयोर्वाक्ययोर्नैराकाङ्क्ष्येणैकवाक्यत्वासंभवात् संयोगपृथक्त्वेनोभयार्थत्वमिति सिद्धान्तितम् । एवं दृष्टान्तपरं पूर्वार्धं व्यक्तीकृत्योत्तरार्धोक्तं दार्ष्टान्तिकं व्यनक्ति—अन्यत्रेत्यादिना । सत्त्वेऽपीति । 'ब्रह्मण्युभयमुपपन्नं' इत्यन्वयः । ननु दृष्टान्तोक्त्या सम्भावनैवोक्ता, न तु प्रमेयं तेन सिध्यति, मानाधीनत्वात्तस्येत्यतः "—"अणोरणीयान्" इत्याद्यागमस्य, उभयकार्यदर्शनानुमानस्य, यशोदादिप्रत्यक्षस्य च प्रमाणत्वात्" इति सुधावाक्यं विवृण्वन् प्रत्यक्षादिप्रमाणान्याह—**अणुनीति** । अल्पपरिमाणे इत्यर्थः । उक्तं च सन्न्यायरत्नावल्यां—"दृष्टश्चैवं विधः प्रभावो यशोदया गोविन्दे । तथाहि भागवतवचनं,

पीतप्रायस्य जननी सुतस्य रुचिरस्मितम् ।
मुखं लालयती राजन् जृम्भतो ददृशेऽखिलम् ॥
खं रोदसी ज्योतिरनीकमास्ये सूर्येन्दुवह्निश्वसनान् ऋषींश्च ।

इत्यादि" इति । **अणुत्वालिङ्गस्येति** । अणुत्वानुमापकस्य । 'म-

चन्द्रिका

त्वलिङ्गस्य एकेनापि दाम्ना बन्धनस्य, महत्त्वलिङ्गस्यानेकैरप्यबन्धनस्य, "अणोरणीयान्महतो महीयान्" इत्यागमस्य च सत्त्वात्, अणुत्वादेर्महत्वाद्यसामानाधिकरण्ये च प्राकृतत्वस्योपाधिकत्वात्, भेद प्रतिनिधेर्विशेषस्य सत्त्वाच्च, "त्वयीश्वरे ब्रह्मणि नो विरुध्यते" इत्यादावैश्वर्यादेवाविरोधोक्तेश्च ब्रह्मण्युभयमुपपन्नम् । तदुक्तमनुव्याख्याने—

प्रकाशः

हत्त्वलिङ्गस्य' महत्त्वानुमापकस्येत्यर्थः। 'सत्त्वात्' इत्यन्वयः। एतच्च,

गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ।
तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः ॥
द्व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिका ।

इत्यादिना,

दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत्स्वबन्धनः ।

इत्यादिना चावसेयम् । 'अणोर्महतः' इति च पञ्चमी । नन्वेवं घटादावपि रूपरसवदणुत्वमहत्त्वे स्यातां इत्यतः 'एकत्र युगपदणुत्वमहत्त्वविरोधस्तु प्राकृतत्वोपाधिकृतः' इति सन्नचाररत्नावल्युक्तमाह—**अणुत्वादेरिति** । आदिपदेन ह्रस्वत्वदीर्घत्वादिग्रहः । **भेदेति** । यथा भेदेन सूचीकटाहादेरणुत्वमहत्त्वादिनिर्वाहस्तथेह "नेहनाना" इत्यादिना भेदस्य निषेधेन भेदाभावेऽपि तत्प्रातिनिधेः तत्कार्यनिर्वाहकस्य विशेषस्य सत्त्वादित्यर्थः । **इत्यादाविति** ।

विरुद्धधर्मरूपोऽसावैश्वार्यात्पुरुषोत्तमः ।

इति भाष्योक्तं ग्राह्यम् । उक्तं च च्छान्दोग्यभाष्ये सप्तमे "अ-

चन्द्रिका

अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥

इति ।

प्रकाशः

ल्पपरिमाणस्यापि महत्परिमाणं च युज्यते अचिन्त्यशक्तित्वात् । "यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या" इत्यादि । उक्तं चात्र तत्त्वप्रदीपे 'यद्यपि लोकेऽतिस्थूलत्वात्यणुत्वादयो धर्मा एकत्र विरुद्धास्तथाऽपि विष्णावैश्वर्यादुपपद्यन्ते । तदाह—विरुद्धधर्मरूपोऽसावैश्वर्यादिति' इति । **अत इति** । यतो ब्रह्म विरुद्धलक्षणैर्युक्तमेवातो विरुद्धार्थप्रतिपादकमिव प्रतीतमपि वाक्यं तत्त्वतो व्याख्याय हरौ योजनीयं योजयितुं शक्यमिति । नन्वणुत्वमहत्त्वयोरन्यत्र सहानवस्थानरूपविरोधमभ्युपेत्य ब्रह्मण्यप्राकृतत्वेन वा, विशेषबलेन, अचिन्त्यैश्वर्येण वा द्वयमप्युपपन्नमित्युक्तमयुक्तमिव, अणुत्वमहत्त्वादिपरिमाणावान्तरजातेर्वैशेषिकाधिकरणानुव्याख्यानादौ निराकृतत्वात् । परिमाणापकर्षोत्कर्षयोरेवाणुत्वादिशब्दार्थत्वात् । तयोश्च प्रतिवस्तु स्थितेरभ्युपगतत्वेन विरोधस्यैवाभावात् । उक्तं चानुव्याख्याने—

अणुत्वं च महत्त्वं च परमाणावणावपि ।
कथं त्र्यणुकपूर्वेषु नाणुत्वमपि कथ्यते ॥

इति ।

प्रकाशः

अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया।
तारतम्यास्थिता यस्मात्पदार्थाः सर्व एव च ॥

इति चेति। मैवं, तात्पर्यभेदात्। ब्रह्मणोऽपरिच्छिन्नत्वेन ततोऽधिकपरिमाणस्यान्यस्य वस्तुनोऽभावेन तदपेक्षयाऽणुत्वासम्भवात्, स्वापेक्षयैव स्वस्याणुत्वस्य वक्तव्यत्वात् तस्य च घटादावदर्शनात् विरुद्धत्वमिति भावेन ब्रह्मण्युक्तयुक्त्या तयोस्समर्थनात्। तथा चोक्तमत्र सुधायां—"न चैकपरिमाणोपेतमेवोत्कृष्टापकृष्टापेक्षयाऽणु महद्दीर्घं ह्रस्वं चेत्युच्यत इत्याश्रयणेन विरोधपरिहारः, घटादितुल्यत्वेनावक्तव्यत्वात्। उत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावाच्च" इति। तथा

अणीयांश्च महीयांश्च भगवानागमोदितः।

इति वैशेषिकनयानुव्याख्यानव्याख्यावसरे चोक्तं—"नन्वेवं स्वस्मादेव स्वयमुत्कृष्टोऽपकृष्टश्चेत्यागतम्। को नेत्याह" इति। एवं लोके विरोधमुपेत्य द्वयोर्ब्रह्मणि समावेशः समर्थितः। इदानीं घटादावन्यापेक्षयाऽणुत्वमहत्त्वयोरविरोध इव स्वापेक्षयाऽपि स्वस्य तथाभावो युक्तः,

महतोऽल्पत्वमपि हि व्योमवत् प्राह वेदवित्।

इति।

अतः सर्वपदार्थानां भागास्सन्त्येव सर्वदा।
सर्वदिक्ष्वपि सम्बन्धात्.................... ॥

इत्यादिवैशेषिकनयानुभाष्योक्त्यनुरोधेनात्र सुधायां "किञ्चाऽऽकाशस्य परमाणुसंयोगः किमाकाशैकदेशे वर्तते उताऽकाश एव" इत्यादिना प्रपञ्चितरीत्या परिच्छिन्ने गगनादौ परिमाणापकर्षलक्ष-

चन्द्रिका

किञ्च—

प्रतिसम्बन्धिना तुल्यदेशे सम्बन्धिनि स्थितेः ।
संयोगस्याणुसंयोगो ह्याकाशेऽप्यणुमात्रगः ॥

आकाशस्येश्वरस्य च परमाणुना संयोगः प्रतिसम्बन्धिभूतपरमाणुतुल्यपरिमाणाकाशादिप्रदेशवृत्तिर्वाच्यः, सूच्यग्रादिना पर्वतादेः संयोगस्य सूच्यग्रसमपरिमाणपर्वतादिप्रदेशवृत्तित्वदर्शनात् । यदि चान्यत्राद्दष्टाऽपि आकाशसंयोगस्य प्रतिसम्बन्धिपरिमाणादधिकपरिमाणदेशवृत्तिता, तर्ह्यन्यत्राद्दष्टमीश्वरस्य महतोऽप्यणीयस्त्वं स्यात् । भेरीशब्दासमवायिकारणस्य हन्यमानभेर्याकाशसंयोगस्य कृत्स्नाकाशवृत्तित्वं च स्यात् ।

प्रकाशः

णाणुत्वस्याऽपि दर्शनेन विरोधस्यैवाभावात्, ब्रह्मणि तत्समावेशो युक्त इत्यभिप्रेत्याऽऽकाशेऽणुत्वमपि साधयति—**किञ्चेत्यादिना नाणुत्वमहत्त्वयोर्विरोध इत्यन्तेन**। यद्वा—'परमाणुसम्बद्ध ईश्वरप्रदेशः परमाणुपरिमाणतामायाति, मेरुमन्दरादिगतस्तत्परिमाणतामुपैति। स एव गगनसम्बन्धी ताद्दशो भवति । न हि तेषां प्रदेशानां ईश्वरान्मिथो वा भेदं वादिनो वदन्ति' इत्यादिना तत्त्वप्रदीपोक्तादिशा 'ईश्वरोऽणुपरिमाणाश्रयः अणुपरिमाणपरमाणुसंयोगाश्रयत्वात्' इत्यनुमानमभिप्रेत्य हेतोर्व्याप्तिसिद्ध्यर्थं गगनादौ द्दष्टान्ते दार्ष्टान्तिकेश्वरे च तत्साधयति—**किञ्चेत्यादिना** । श्लोकं व्याख्याति—**आकाशस्येति** । अप्रयोजकत्वमाशङ्क्य विपक्षे बाधकद्वयमाह—**यदि चेति**। अस्तु कृ-

चान्द्रिका

तथा च त्वन्मते जन्यविभुविशेषगुणानां देशानियमस्यासमवायिकारणकृतत्वात् आद्य एव भेरीशब्दः कृत्स्नव्यापीति तस्य सर्वत्रोपलब्धिः स्यात्। वीचीतरङ्गन्यायेन शब्दपरम्परोत्पत्तिप्रक्रियाभङ्गश्च स्यात्। संयोगस्य स्वात्यन्ताभावसमानाधिकरण्याददोष इति चेन्न, अणुत्वमहत्त्वयोरसामानाधिकरण्यनियमे भावाभावयोः सुतरां सामानाधिकरण्यायोगात्। किञ्च भेर्यवच्छिन्नप्रदेशे संयोगवत्तदत्यन्ता

प्रकाशः

त्मवृत्तित्वं, को दोष इत्यत आह—तथा चेति। एतेन "भेरीसंयोगस्यापि तथात्वोपपत्तेः। तथा च सर्वत्र शब्दोपलब्धिप्रसङ्गात्" इति सुधावाक्यं विवृतं भवति। संयोगस्याव्याप्यवृत्तित्वं मत्वोक्तबाधकपरिहारमाशङ्कते—संयोगस्येति। अदोष इति। संयोगस्य प्रदेशवृत्तित्वदर्शनादीश्वरे गगनादौ च परमाणुतुल्यपरिमाणप्रदेशोऽपि परमाणुसंयोगाश्रयतयाऽभ्युपगन्तव्य इति दोषो नास्तीत्यर्थः। अन्यथा न्यायमते प्रदेशस्य प्रदेशिनो भिन्नत्वेनान्यवृत्तिधर्मस्यान्यवृत्तित्वाभ्युपगमेऽतिप्रसङ्गादिति भावः। "भावाभावयोरन्यत्र सर्वत्र सहानवस्थितयोः कथं विरोधो न भवेत्" इति सुधोक्तं दोषं व्यक्तमाह—अणुत्वेति। सुतरामिति। अणुत्वमहत्त्वयोरेकत्र वृत्तौ हि तत्परिमाणप्रदेशादिनिष्ठतया संयोगतदभावयोरविरोधो नान्यथेति भावः। अल्पपरिमाणप्रदेशवृत्तित्वमङ्गीकृत्य स्वात्यन्ताभावसामाधिकरण्यनियमे दोषान्तरं चाह—किञ्चेति। यद्वा—एकत्र संयोगतदभावौ प्रतीतिविरोधान्न स्त इत्याह—किञ्चेति। नन्वस्तु

चान्द्रिका

भावस्य, अन्यत्र च तदत्यन्ताभाववत् संयोगस्य धीः स्यात् । प्रदेशस्यौपाधिकत्वे तूपाधिसंयोगोऽप्युक्तरीत्याऽणुप्रदेशवृत्तिः स्यात् । न च निरवयवे गगनेऽणुपरिमाणः प्रदेशोऽन्योऽस्तीति महतो गगन-

प्रकाशः

उक्तदिशा परमाणुसंयोगो गगनादौ परमाणुतुल्यपरिमाणप्रदेशवृत्तिः, न तावता गगनादेरणुत्वमहत्त्वासिद्धिः, प्रदेशस्यौपाधिकत्वात्, स्वाभाविकत्वे वा पटादाविव भिन्नत्वेनाणुत्वस्य तन्मात्रनिष्ठत्वेन गगनादावभावादित्यतो द्वयमपि क्रमेण निराह—**प्रदेशस्येति** । **उक्तरीत्येति** । सूच्यग्रेत्यादिनोक्तरीत्येत्यर्थः । नन्वस्तूपाधिसंयोगोऽप्यणुपरिमाणकप्रदेशवृत्तिः, को दोष इति चेत्, सोऽपि किमौपाधिक उत स्वाभाविकः । नाद्यः, आत्माश्रयाद्यापत्तेः । द्वितीये तु स्वाभाविकाणुपरिमाणकप्रदेशो गगनादावङ्गीकृतस्स्यादिति भावः । उक्तं च तत्त्वविवेकटीकायां—"तथैवांशांशिनोरपि" इत्येतद्व्याख्यावसरे—"किञ्चाकाशस्य तावदंशास्सन्तीत्यङ्गीकरणीयम् । अन्यथाऽऽकाशे विहगशरीरभावाभावौ न स्याताम् । संयोगः स्वात्यान्ताभावसमानाश्रय इति चेन्न, विरोधात् । अन्यथा सर्वत्र भावाभावविरोधाभावप्रसङ्गात् । न चोपाधिकृतांशसद्भावादविरोधः, उपाधेरपि विहगशरीरसमानयोगक्षेमत्वात्" इति । **निरवयव इति** । "कूटं खं विदलं व्योम" इत्यादौ विदलत्वप्रसिद्धेः, परैरपि तथाऽङ्गीकाराच्चेति भावः । 'गगने प्रदेशोऽन्यो न ह्यस्ति,' इत्यनेनैतदपि निरस्तम् । संयोगः प्रदेशवृत्तिरित्ययुक्तं, तथात्वे घटादिसं-

चन्द्रिका

स्यैवाणुत्वं सिद्धमिति नाणुत्वमहत्त्वयोर्विरोधः। अत्तृत्वानशनयोरवि रोधस्तु "अनशनोक्तिस्त्वनुपजीवनार्थत्वेन" इति न्यायविवरण एवोक्तः।

साशनानशनत्वेन नरदेवौ यथोदितौ।
अत्ति विनाऽप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुजिः॥

प्रकाशः

योगोऽपि घटाद्यंशसंयोगपूर्वकः, सोऽपि तदंशसंयोगपूर्वक इत्यनवस्थापत्तेः। न चेयं निरंशे परम्परा विश्राम्यतीति वाच्यं, उक्त रीत्या कस्याप्यनंशत्वाभावात् इति। प्रदेशप्रदेशिनोरभेदेन प्रदेश संयोगस्यैव प्रदेशिसंयोगत्वेन अनवस्थाभावात् इति। एतेनैवान्य-संयोगस्य कथमन्यसंयोगत्वम्, अतिप्रसङ्गादित्यपि प्रत्युक्तम्, तयो रभेदादिति। प्रपञ्चितं चैतत् वैशेषिकनयानुव्याख्यानसुधयोः,

अंशांशिनोरभेदेन त्वंशसंयोग एव हि।
अंशिनो नानवस्थाऽतो यद्यप्यंशेष्वविश्रमः॥
एकस्मिन् जात एवान्यः संयोगो जायते यदि।
अनवस्था तदैव स्यात्संयोगैक्ये भवेत् क्व सा॥

इत्यादिनेति भावः। एवं सूत्रोपात्तसाधकान्युपपाद्य, यत्पूर्वपक्षिणाऽनशनं बाधकमिति शङ्कितं तत्, "अनेनैव "न तदश्नाति किञ्चन" इत्येतदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्यर्थमिति सूचितम्" इति टीकोक्तेर्मूलं वदन्, निराह—अत्तृत्वेति। नन्वर्भकौकस्त्वादि-नाऽणुत्वमुक्तं,

चन्द्रिका

इति च स्मृतिः । "सर्वत्र प्रसिद्ध" इत्यत्र सर्वगतस्याप्येकदेशवृत्तिः शते पञ्चाशन्न्यायेनाविरुद्धा, एकदेशमात्रगतत्वं त्वसिद्धमित्युक्तम् । भूमाधिकरणे तु सर्वगतेऽप्यणुत्वमत्र वक्ष्यमाणं सिद्धं कृत्वा तद्बलादुत्क्रान्तिरुक्ता । इह तु पुनर्महतोऽप्यणुत्वमुच्यते । "अल्पश्रुतेः" इत्यत्र तु गगनवन्नावयविरूपेणैव महत्त्वं, किन्त्ववयवरूपेणापीति वक्ष्यते इति भेदः ।

अत्र चाद्ये सूत्रे विषयवाक्यस्थसाधकोऽक्तिः । द्वितीये तदुत्तर-

प्रकाशः

महतोऽल्पत्वमपि हि व्योमवत् प्राह वेदवित् ।

इत्याद्यनुव्याख्यानोक्तेः । अतः पौनरुक्त्यमित्यत आह—**सर्वत्रेति** । विवृतं चैतत्तत्रैवास्माभिः । "**अल्पश्रुतेः**" इति । दहराधिकरणे ।

**विषयवाक्यस्थेति** । ननु भाष्यटीकारीत्या "अदृष्टं द्रष्टृ" इत्यादिचरमवाक्यस्य विषयत्वे तत्र "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च" इति श्रवणेऽप्यम्बरधृतेरेव श्रवणेनाम्बरान्तसर्वधृतिर्न श्रुता । चन्द्रिकोक्तरीत्या "तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलम्" इत्यादेर्विषयत्वे तत्राम्बरस्यैव सर्वाधारत्वश्रवणेन सर्वाधाराम्बराधारत्वस्य तत्राश्रवणात्कथं विषयवाक्यस्थसाधकोक्तिरिति । मिलित्वा सर्वस्य विषयत्वात् 'विषयवाक्यस्थ' इत्युक्तिरित्युक्तावपि द्वितीये 'तदुत्तरवाक्यस्थ' इत्युत्तरग्रन्थासङ्गतिः, तस्य मध्यवाक्यस्थसाधकत्वात्, नैवं, भाष्याद्युक्तेः सङ्गत्याद्यर्थतयोपपत्त्या चन्द्रिकोक्तस्यैव विषयत्वात् ।

चन्द्रिका

वाक्यस्थस्य । तृतीये तु यद्यपि विषयवाक्यस्थास्थूलत्वादिरूपसाधकोक्तिः । तथाऽपि तेनैव ब्रह्माक्षरं चेत् स्थौल्यादिरहितत्वान्निःस्वभावं स्यादिति शङ्कितस्य बाधकस्य पदार्थान्तरस्वभावभूतप्राकृतस्थौल्यादिरहितं न तु सर्वथेत्येवमुद्धारात, तथाऽणुत्वमहत्त्वादिकं विरुद्धमिति शङ्कितस्य बाधकस्य अणुत्वमहत्त्वयोर्विरोधे प्राकृतत्वं तन्त्रं, ब्रह्म तु प्राकृतपदार्थव्यावृतमित्येवमुद्धारात्तस्यान्त्यता ।

प्रकाशः

तत्राम्बरे सर्वाधारत्वमात्रश्रवणेऽपि सर्वाधाराम्बरस्याक्षराधारकत्वविवक्षयाऽक्षरस्य "अस्थूलं" इत्यादिना महिमोक्तेः अम्बरान्ताधारत्वं तत्राभिमतमिति—**विषयवाक्यस्थेत्युक्तम्**। यद्वा—'विषयवाक्यस्थ' इत्यस्याद्यन्तविषयवाक्यस्थेत्यर्थः । आदावम्बरे सर्वाधारत्वस्य अन्तेऽक्षरेऽम्बराधारत्वस्य श्रवणात् । अत्रान्तपदं प्रकृतिद्वाराऽक्षरस्य सर्वाधारत्वोक्त्यर्थं, अम्बरस्य चित्प्रकृतित्वोक्त्यर्थं च । तेनान्तपदं व्यर्थमिति कस्यचिद्दूषणमलग्नकं ध्येयम् । 'द्वितीये तदुत्तरवाक्यस्थस्य' इत्यस्य तु आदिवाक्यापेक्षयोत्तरवाक्यस्थस्येत्यर्थः । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्युत्तरवाक्ये सा च धृतिः आज्ञामात्रेणोच्यत इत्यर्थः । "अन्य भावव्यावृत्तेः" इत्यस्याद्यत्वमाशङ्क्यान्त्यत्वमुपपादयति—**तृतीय इति**।

चन्द्रिका

अन्ये तु—वर्णा एवाक्षरं, अक्षरशब्दस्य तत्र रूढेः। न च वर्णेष्वाकाशस्यौतत्वाद्ययोगः, सर्वस्यापि रूपधेयस्य गौरयं वृक्षोऽयमिति नामधेयानुविद्धतया भानात्। तथा च वर्णमात्रमेवाक्षरमिति पूर्वः पक्षः। भाष्ये 'ओङ्कारोऽक्षरं' इत्युक्तिस्त्वोङ्कारस्य सर्ववर्णात्मक-

प्रकाशः

**अन्ये त्विति**। भामत्युक्तमनुवदति—**वर्णा एवाक्षरमिति**। **रूढेरिति**। 'अक्षरसमाम्नायः' इत्यादौ प्रसिद्धत्वात्, ब्रह्मणि तु अवयवप्रसिद्ध्या यौगिकः, अवयवप्रसिद्धेश्च समुदायप्रसिद्धिरूपरूढिर्बलीयसीति भावः। **रूपधेयस्येति**। रूप्यते निरूप्यत इति अभिधेयमिति कल्पतरूक्त्याऽभिधेयवाचिरूपशब्दात् "भागरूपनामभ्यो धेय" इति स्वार्थे धेयप्रत्ययः। वाच्यार्थस्येत्यर्थः। **अनुविद्धतयेति**। तादात्म्येनेत्यर्थः। 'वर्णमात्रं' वर्णसामान्यमित्यर्थः। ननु परभाष्ये"—'ओङ्कार एवेदं सर्वं' इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मत्वावधारणात्" इत्युक्त्या ओङ्काररूपवर्ण एवाक्षरम् इति प्रतीतेः वर्णमात्रमेवेति कथमुच्यत इत्यतो "नामानि चोङ्कारात्मकानि तद्व्याप्तत्वात्" इत्यादिना भामत्युक्तमेवाशयमाह—**भाष्य इति**। "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि एवमोङ्कारेण सर्वा वाक्" इति श्रुतेरित्यर्थः। तथा च "ओङ्कार एवेदं सर्वं" इति श्रुत्यन्तरे ओङ्कारस्य सर्वात्मकत्वश्रवणात्, "ओङ्कारेणैव" इति श्रुत्या सर्ववर्णात्मकत्वात्, इह च श्रुतौ पृथिव्याद्यम्बरान्तसर्वतादात्म्येन ओतप्रोतप-

चन्द्रिका

त्वश्रुतेः । सिद्धान्तस्तु—पृथिव्यादेर्भूताकाशान्तस्य विकारजातस्य धारणात्, न क्षरतीत्यादिव्युत्पत्तिसम्भवाच्च निर्विशेषं ब्रह्मैवाक्षरमित्याहुः। तन्न, गौरित्यादौ गोत्वादिजातिसम्भेदस्य गोशब्दादिवाच्यत्वस्य वा भानेऽपि "कस्मिन् खल्वाकाश ओतश्च प्रोतश्च" इत्यादिश्रुत्युक्तस्याकाशाश्रयत्वस्याभानेन वर्णेषु द्रष्टृत्वादेरसम्भवेन च पूर्वपक्षा-

प्रकाशः

द्राभ्यां श्रुतमक्षरं वर्णा एवेति अक्षरे विषयवाक्यश्रुतसर्वात्मकत्वं वर्णेषूपपादयितुं वर्णानां सर्वात्मकत्वे स्पष्टश्रुतेरभावात्, ओङ्कारस्य सर्ववर्णात्मकत्वं श्रुत्यन्तरसिद्धं हृदि सिद्धवत्कृत्य ओङ्कारस्य सर्वात्मकत्वे "ओङ्कार एवेदं सर्वं" इति भाष्ये श्रुतिरुक्ता, न त्वत्रोङ्कार एवाक्षरमित्युपेत्येति भावः। **विकारजातस्येति** । सर्वस्य ब्रह्मविकारत्वात् ब्रह्मण्येवाकाशादेरोतत्वं युक्तं, न तु वर्णेषु । न च नामधेयात्मकं रूपधेयमित्युक्तत्वात् वर्णेष्वपि तद्युक्तमिति वाच्यं, स्वरूपभेदादुपायभेदादर्थक्रियाभेदाच्च तयोर्भेदात् । तथा हि—शब्दत्वसामान्यात्मकानि श्रोत्रग्राह्याणि अर्थप्रत्ययार्थक्रियाणि नामधेयानि, रूपधेयादीनि तु घटादीनि घटत्वसामान्यात्मकानि चक्षुरादीन्द्रियग्राह्याणि जलधारणप्रावरणाद्यर्थक्रियाणीति तयोर्भेदात् । वर्णेष्वाकशादेरोतत्वाद्ययोगात् ब्रह्मैवाक्षरमित्याहुरित्यर्थः। 'जातिसम्भेदस्य' जातितादात्म्यस्येत्यर्थः। नन्वत्राप्योतप्रोतशब्दाभ्यां पृथिव्याद्यम्बरान्तसर्वात्मकत्वमेवोच्यते, न तु तदाश्रयत्वमिति चेन्न, सूत्रे 'धृतेः' इति

चन्द्रिका

नुदयात्। उत्तराधिकरणे तु यथेक्षितृत्वश्रवणेऽपि जडप्रकृतेः प्राप्तिः तथा तत्रैव वक्ष्यते। किञ्चैवं पूर्वपक्षे पृथिव्यादेर्नामानुविद्धताया आकाशव्यवहितत्वाभावेन श्रुतौ मध्ये आकाशोक्तिर्व्यर्था स्यात्।

प्रकाशः

धृतिपदायोगात्। 'पृथिव्यादेराकाशान्तस्य धारणात्' इति त्वदीयभाष्याद्युक्तचयोगाच्च। न चात्राक्षरस्य सर्वात्मकत्वं भ्रान्त्वाऽक्षरस्य वर्णत्वं शङ्क्यत इति युक्तं, तथात्वे गौरयं वृक्षोऽयमित्यादौ रूपधेयस्य नामधेयसम्भेदेन भानेऽपि इह सर्वाधारत्वमेवोच्यते, न त्वम्बरान्तसम्भेदोऽक्षरस्योच्यते, येन नामरूपसम्भेदोपपादनं सङ्गच्छेतेत्येव समाधिर्वाच्यः। न तु नामरूपभेदसमर्थनेन समाधिर्वाच्यः। एतेन भाष्ये "ओङ्कार एवेदं सर्वं" इति सर्ववर्णात्मकतया श्रुत्यन्तरसिद्धोङ्कारस्य सर्वात्मकत्वोक्तिरपि व्याधिकरणा, विषयवाक्ये अक्षरस्य सर्वभेदाश्रयणादित्युक्तं भवति। नन्वत्र द्रष्टृत्वादिना वर्णानामक्षरत्वशङ्कानुपपत्तावुत्तराधिकरणे "तदैक्षत" इतीक्षणश्रवणेऽपि कथं प्रधानमिति पूर्वपक्ष इत्यत आह—उत्तरेति। अन्तर्याम्यधिकरणे द्रष्टृत्वादिश्रवणेऽपि प्रधानमिति पूर्वपक्षकरणमनेन न विरुध्यते इत्येतत्तत्रैवोक्तमस्माभिः। अक्षरस्य वर्णत्वेन पूर्वपक्षे दोषान्तरमाह—**किञ्चैवमिति**। गौरयं वृक्षोऽयमित्यादौ नाम्नो रूपात्मना भानेनात्र अक्षरशब्दितेषु वर्णेषु "यद्भूतं" इत्यादिना सर्वात्मकत्वकथनं यद्यभिमतं, तदा "ओङ्कारएवेदं सर्वं"

चन्द्रिका

सिद्धान्तोऽप्ययुक्तः, "आकाश एव तदोतं च" इति पूर्ववाक्ये त्रिकालवर्तिवस्त्वाश्रयत्वेनोक्तस्याकाशस्यानित्यभूताकाशतायाः, तथाऽवाच्ये निर्विशेषे ब्रह्मणि न क्षरतीति त्वदुक्तस्य योगस्य, तथा "एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इति श्रुत्युक्तस्य वाच्यत्वस्य, द्रष्टृत्वादेश्चायोगात्। आद्यसूत्रे धृतिपदं चायुक्तम्, त्वन्मते भ्रमाधिष्ठानत्वादन्यस्य धारणस्याभावात्, तस्य च "अकाश एव तदोतं" इत्यादिप्रक्रमानानुगुण्यात्। न ह्याकाशे त्रैकालिकं वस्त्वध्यस्तम्।

प्रकाशः

इति श्रुताविव "यद्भूतं च भव च्च भविष्यच्चेत्याचक्षते तदक्षरे ओतं च प्रोतं च" इत्येव साक्षात्सर्वसम्भेदोऽक्षरेऽभिधीयेत, तन्मध्ये आकाशप्रणाड्या तदभिधानं व्यर्थमिति श्रुतहानिः स्यादित्यर्थः। 'व्यर्था' इत्युपलक्षणम्, वक्ष्यमाणदिशा भूतभवद्भविष्यदाद्योतत्वस्यानित्याकाशेऽनुपपत्त्या विरुद्धार्था च स्यादित्यपि ध्येयम्। **अनित्येति**। "आत्मन आकाशः सम्भूतः" इत्यादिश्रुत्या, "न वियदश्रुतेः" इति वक्ष्यमाणादिशा च भूताकाशस्यानित्यत्वादिति भावः। **त्वदुक्तस्य योगस्येति**। 'न क्षरत्यश्नुतेचेति नित्यत्वव्यापित्वाभ्यां परमेव ब्रह्म' इति परभाष्येऽभिधानादिति भावः। सूत्रार्थानपि प्रत्याह—**आद्येति**। श्रुतावोतपदास्वारस्यं चाह—**तस्य चेति**। भ्रमाधिष्ठानत्वस्येत्यर्थः। **वस्त्वध्यस्तमिति**। येनाक्षरे 'ओतं'

चान्द्रिका

द्वितीयोक्तं प्रशासनं चायुक्तं, यतः,

अध्यस्तस्याम्बरान्तस्य ह्यधिष्ठानात्मिका चितिः ।

न शास्त्री न हि शुक्त्यादिः शास्ति रूप्यादिकं क्वचित् ॥

नहीह सविशेषं ब्रह्म प्रतिपाद्यम् । न च निर्विशेषे व्यावहारिकमपि शास्तृत्वस्ति । प्रातिभासिकं तु प्रधानेऽपि । यच्चोक्तं चेतनधर्मः

प्रकाशः

इत्यत्राप्योतशब्दस्याध्यस्तत्वमर्थस्स्यादिति भावः । **द्वितीयेति** । आद्यसूत्रेऽम्बरान्तधृत्या वर्णानामक्षरत्वं निरस्तम् । "सा च प्रशासनात्" इति सूत्रे जडप्रकृतेरक्षरत्वं निरस्यते । तथा हि—अम्बरान्तधृतेर्विश्वोपादाने प्रधानेऽपि सम्भवात्प्रधानमेवाक्षरमिति शङ्कायां, सा च धृतिः परमात्मन एव कर्म, "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिनाऽऽज्ञापरपर्यायस्य प्रशासनस्य श्रवणात् । नह्यचेतनस्य प्रशास्तृत्वं युक्तमित्यर्थ उक्तः । तत्र प्रधान इव निर्विशेषब्रह्मण्यपि प्रशासनं न युक्तम् । सविशेषं तु नात्र प्रतिपाद्यं, पादासङ्गतेः, स्थौल्यादिनिषेधानुपपत्तेश्चेति भावः । शास्तृत्वं किं तात्त्विकं, उत व्यावहारिकं, अथ प्रातिभासिकम् । आद्यद्वयं निराह—**न चेति** । अपिपदेन तात्त्विकं तु न शङ्कार्हमिति समुच्चीयते, निर्विशेषत्वादित्यर्थः । तृतीये तु न प्रधाननिरास इत्याह—**प्रातिभासिकं त्विति** । प्रातिभासिकप्रशासनपक्षे कल्पतरूक्तं समाधिमनूद्य निराह—**यच्चेति** । एतच्चोपलक्षणम् ।

चन्द्रिका

शास्तृत्वं चेतने ब्रह्मण्येवारोप्यते, न त्वचेतने प्रधाने। नहि राजत्वं राजपरिवारोपेते आमात्य इव कुड्येऽपि आरोप्यत इति, तन्न, परमतेऽधिष्ठानाध्यस्तयोस्सादृश्यनियमाभावात्। अमात्ये राजसादृश्यवत् निर्विशेषे ज्ञातृरूपचेतनसादृश्याभावाच्च। शासनकर्तृत्वरूप शास्तृत्वादेः जडान्तःकरणधर्मत्वेन जडस्य प्रधानस्यैव तत्सदृशत्वाच्च। यच्चोक्तं—यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते प्रधानजीवादि, तद्भावादिदमक्षरं व्यावर्तयति श्रुतिः, द्रष्टृत्वादेः प्रधानादावसम्भवादिति तृतीयसूत्रार्थ इति, तन्न, द्रष्टृत्वादेरिवाम्बरान्तधृतिप्रशासनयोरपि

प्रकाशः

यद्यत्र वर्णप्रधानयोः क्रमेण निरासस्तर्हि अक्षरं प्रशासनादित्येतावन्मात्रोक्तावपि चेतनधर्मेण प्रशासनेन वर्णप्रधानयोर्द्वयोरपि जडयोर्निराससिद्ध्याऽम्बरान्तधृत्युक्तिर्योगद्वयोक्तिश्च व्यर्था। किञ्च—प्रागुक्तरीत्या प्रकृष्टशासनस्य जीवेऽप्ययोगेनाक्षरं प्रशासनादित्येतावतैव जीवस्यापि निरासादुत्तरसूत्रवैयर्थ्यं चेत्यपि ध्येयम्। एवं वर्णप्रधानयोरक्षरशब्दार्थत्वं व्युदस्य, जीवस्याक्षरशब्दार्थत्वं व्युदसितुं प्रधानादिसर्वनिराससाधारणं "अन्यभावव्यावृत्तेः" इति सूत्रम्। तदर्थमनूद्य निराह—**यच्चेति**। "अदृष्टं द्रष्टृ" इत्यादिश्रुतिः, "अचक्षुष्कमश्रोत्रं" इति च श्रुतिरित्यर्थः। आदिपदेनाचक्षुष्कत्वादेर्जीवेऽसम्भवादिति गृह्यते। यत्त्वत्र "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ" इत्यादिनाऽऽत्मभेदप्रतिषेधात् न शारीरस्या-

चान्द्रिका

वर्णादावसम्भवतोरनेनैव सूत्रेण विवक्षासम्भवेन पूर्वसूत्रयोर्वैयर्थ्यात् । अक्षरप्रकरणस्थं "नान्यदतोऽस्ति द्रष्टृ" इत्यादिवाक्यं त्वन्यत्र व्याख्यातम् । अत्रापि परमते "अन्यभावव्यावृत्तेः" इत्यनेन जीवा द्भेदोक्तेः अभेदनिषेधस्स्पष्ट एव ॥

एतेन, यत्के चित् जडं प्रधानमेवाक्षरमिति पूर्वपक्षयन्ति, तदपि

प्रकाशः

क्षरशब्दवाच्यत्वमित्युक्तं भाष्ये, तदप्ययुक्तमित्याह—**अक्षरेति** । 'अन्यत्र' न्यायामृते प्रथमपरिच्छेदे । अतो नेदं वाक्यं निर्विशेषबोधकमित्यर्थः ॥

**एतेनेति** । "अस्थूलमनणु" इत्यादिनोक्तमक्षरं प्रधानजीवान्यतरत् उत ब्रह्मेति संशये, अक्षरशब्दस्य वर्णेषु रूढिसम्भवेऽपि "अह्रस्वमदीर्घं" इत्यादिनिषेधायोगेन वर्णानां शङ्कानर्हत्वात्, प्रधानस्य च सर्वविकारास्पदत्वेनाकाशपृथिव्यादिधारणसम्भवात् प्रधानं वा चित एवाचिद्वस्त्वाधारत्वसम्भवाज्जीवो वेति प्राप्ते, न तावत्प्रधानं, त्रिकालवर्तिसकलवस्त्वाधारतयोच्यमानस्य भूताकाशत्वायोगेनाव्याकृतापरनामकप्रधानपरत्वात् "अक्षरे गार्ग्याकाश ओतः" इत्युक्तप्रधानाधारत्वस्य प्रधानेऽनुपपत्तेः । नापि जीवः, द्वितीयसूत्रोक्तस्याप्रतिहताज्ञापरनामकस्य प्रशासनस्य जीवेऽनुपपत्तेः । अन्यभावस्य परमात्मनोऽन्यत्वस्य "अदृष्टं द्रष्टृ" इत्यादिनाऽक्षरस्य व्यावृत्तेश्च परमात्मैवाक्षरमिति सिद्धान्तः । तत्र दूष्यांशमनुवदति—**जडमिति** ।

चन्द्रिका

निरस्तं, जडस्य शास्तृत्वद्रष्टृत्वादेरयोगेन पूर्वपक्षानुदयात् । यच्च—श्रुतावाकाशशब्दः प्रधानपर इत्युपेत्य, सूत्रेऽम्बरशब्दः भूताकाशपरः, तथा चाम्बरस्य अन्तः अवधिः कारणमिति अम्बरान्तपदं प्रधानपरमित्युक्तं, तन्न, सूत्रे श्रुत्यनुसारित्वस्यैव न्याय्यत्वात् । अन्तपदं तु अम्बरं अन्तो यस्येति व्युत्पत्त्या पृथिव्यादिपरं सत् तस्यापि प्रकृतिद्वारा ब्रह्मैवाश्रय इति सूचयितुम् । तथा च "पृथिव्यादिप्रकृत्यन्तं" इति स्मृतिरपि सूत्रेणानुसृता भवति ।

प्रकाश

एवकारः परोक्तवर्णमात्रव्यावर्तकः । एतेनेत्युक्तमेवाह— **जडस्येति** । सूत्रार्थं च प्रत्याह—**यच्चेति** । **श्रुत्यनुसारित्वस्येति** । श्रुताविव सूत्रेऽप्यम्बरशब्दस्यैव प्रधानपरत्वं वाच्यमित्यन्तपदं व्यर्थमित्यर्थः । आकाशस्य चित्प्रकृतित्वपक्षेऽप्येष दोषस्तुल्य इत्यत आह—**अन्तपदन्त्विति** । 'तस्यापि' पृथिव्यादेरपि ।

पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृतौ ॥

इति स्कान्दस्मृतिरित्यर्थः ।

एतेन, अक्षरं प्रणवजीवान्यतरादिति प्राप्ते, अम्बरान्तधृत्यादेशिशवधर्मत्वाच्छिव एवेति कस्य चित्प्रलपनं प्रत्युक्तं, द्रष्टृत्वादेरयोगेन पूर्वपक्षानुदयात् । भाष्योक्तश्रुत्यादिनाऽम्बरान्तधृत्यादेर्विष्णवैकनिष्ठत्वेन शिव इति सिद्धान्तानुदयाच्चेति ।

चन्द्रिका

टीकाक्षरार्थस्तु—"**सोमं राजानं जुह्वति तं देवा भक्षयन्ति**" **इत्यादिवदिति**। यथा "सोमं राजानं" इत्यादौ हूयमानभक्ष्यमाणसोमलताभिमानित्वात् चन्द्रे हूयमानत्वादिव्यपदेशः, तथाऽत्रापि "सोममभिषुणोति'' इति वाक्यविहिताभिषवयुक्तसोमलताभिमानित्वाच्चन्द्रेऽभिषूयमाणत्वव्यपदेश इत्यर्थः। "एको देवो बहुधा निविष्टः" इत्यस्य शेषभूतं वाक्यं "यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमेति" इति। तस्यार्थमाह—**स च यदा तं भारं भर्तुं नेच्छतीति**। "यस्मिन्निदं सं च वि चैधि सर्वं" इति श्रुतौ यच्छब्दस्य "यतः प्रसूता" इत्यादियच्छब्दवत् "तदेव ब्रह्म परमं कवीनां" इत्युत्तरवाक्यस्थेन तच्छब्देनान्वय इत्याह—**तदेव ब्रह्मेत्यर्थ इति**। श्रुतौ 'एधि' इत्यस्यावर्धतेत्यर्थः। **मध्यम इत्याद्युक्तामिति**। श्रुतौ मध्यमादिशब्दः स्थौल्यादेरुपलक्षक इत्यर्थः। **तमोवाय्वादीनां सर्वात्मनेति**। "अदुःखमसुखं" इत्यादौ यथा 'असुखं' इत्यनेन बाह्यसुखनिषेधेऽपि

प्रकाशः

टीकायां दुर्गमानि कानि चिद्वाक्यानि व्यनक्ति—**टीकेति**। भाष्ये शेषस्यानुदाहृतत्वात् "स च यदा" इत्यादि कस्यार्थ इत्यज्ञानादाह—**एको देव इति**। भाष्येऽनुक्तमपि "तदेव ब्रह्म" इति कस्मादुच्यत इत्यत आह—**यस्मिन्निति**। टीकायामनुक्तेः 'एधि' इत्यस्य "अस भुवि" इत्यस्य रूपत्वाद्भवेत्यर्थत्वेऽन्वयायोगादाह—**श्रुताविति**।

चन्द्रिका

'अदुःखं' इत्यनेन दुःखमात्रनिषेधः, तथाऽत्रापि 'अस्थूलं' इत्यादौ प्राकृतस्थौल्यादिनिषेधेऽपि "अतमोऽवायु" इत्यादौ सर्वात्मना तमआदेर्निषेध इत्यर्थः ॥

प्रकाशः

"एधवृद्धौ" इत्यस्य रूपमिति भावः। **श्रुतौ मध्यमादिशब्द इति।** "अस्थूलोऽनणुरमध्यमो मध्यमः" इति श्रुतावित्यर्थः।

॥ इत्यक्षराधिकरणम् ॥

---

# — अथ सत्स्थानाधिकरणम् —

“सदेव सौम्येदमग्र आसीत्” इत्यादिना सतः स्रष्टृत्व-मुच्यते। तच्च सत् “बहु स्यां प्रजायेय” इति परिणाम-प्रतीतेर्न विष्णुः, स हि “अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः” इत्यादिनाऽविकारः प्रसिद्ध इति।

तत्त्वप्रकाशिका

अत्र “सदेव सोम्य” इत्यादिसृष्टिप्रतिपादकस्थानगतसन्नाम्नो ब्रह्मप्रधानयोः कारणत्वसाम्येन साधारणस्य भगवति समन्वयप्र-तिपादनादस्ति शास्त्रादिसङ्गतिः। श्रुत्यादिसङ्गतिं विषयवाक्यमुदा-हृत्य विषयादिकं च सूचयति—**सदिति**। “जन्माद्यस्य यतः” इति जगत्स्रष्टृत्वं विष्णोरुक्तम्। तच्छन्दोगश्रुतौ सतः प्रतीयते, “तत्तेजोऽसृजत” इत्यादिना। तस्य च विष्णोरन्यत्वेऽन्यस्यैव स्र-ष्टृत्वप्रसङ्गादवश्यं निर्णेयत्वम्। तत्सदत्र विषयः। किं ब्रह्म उत प्रधानमिति सन्देहः। कारणत्वसाम्यं सन्देहबीजमिति भावः। सयुक्तिकं पूर्वपक्षयति—**तच्चेति**। एतत्सत् प्रधानमेव भवेन्न तु विष्णुः, “बहु स्यां प्रजायेय” इति सतो बहुभावाख्यविकारित्वश्र-वणादित्यर्थः। विकारित्वप्रतीतावपि कुतोऽयं न विष्णुरित्यत आह—**स हीति**। विष्णोः प्रमाणैरविकारित्वप्रसिद्धेस्तस्मिंस्तदसम्भवात्, प्र-धाने च तत्सम्भवात्तदेव सदिति तस्यैव जगत्कारणत्वमिति भावः। नन्वेतत्स्थाने प्रधानस्य प्रतिपाद्यत्वेऽपि तस्योपादानकारणताभ्युप-गमेनानिष्टाभावाद्व्यर्थमेवेदमधिकरणं प्रतीयत इति, मैवम्, भवे-देतद्यद्येतत्प्रकरणे विकारिकारणमेवोच्येत। नैतदस्ति, “एकमेवा-

अतो ब्रवीति—

**ओम् ईक्षतिकर्मव्यपदेशात्सः ओम् ॥ १३ ॥**

"तदैक्षत" इति ईक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते। "नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ" इत्यादिना तस्यैव हि तल्लक्षणम्। बहुत्वं चाविकारेणैवोक्तं "अजायमानो बहुधा विजायते" इति ॥ १३ ॥

तत्त्वप्रकाशिका

द्वितीयम्" "तत्तेजोऽसृजत" "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सता सोम्य तदा सम्पन्नो भवति" इत्यादि ब्रह्मलक्षणानां श्रवणात्। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति। "सदेव" इत्यादिस्थाने सच्छब्देन विष्णुरेवोच्यते, सतः "तदैक्षत" इतीक्षत्याख्यव्यापारश्रवणात्, जडप्रधानस्येक्षणासम्भवादित्यर्थः। अपि च विष्णवन्यस्य कस्यापीक्षतिर्मुख्यतो न विद्यते, किमु जडस्येत्याशयेनाह—नेति। एतेन "सोमो वै राजा गन्धर्वेष्वासीत्" इत्यादिवदभिमानिविवक्षयेक्षत्युक्तिरिति परास्तम्। ननु निरवकाशविकारित्वलिङ्गेनेक्षतिव्यपदेशो गौणः किं न स्यात्, "सत्त्वात्संजायते ज्ञानं" इत्यादेः प्रधानस्य ज्ञानोपादानत्वादित्यत आह—बहुत्वं चेति। बहुभावस्य विकारित्वं विनैव स्वरूपबहुत्वेन सावकाशत्वान्न तद्बलेनेक्षतेर्गौणत्वं कल्प्यमिति भावः। 'अजायमानः' अविकुर्वाणः। अतः परं ब्रह्मैवैतत्स्थानप्रतिपाद्यं सदिति तस्यैवैतल्लक्षणत्वमिति सिद्धम् ॥ १३ ॥

चन्द्रिका

## ॥ ओम् ईक्षतिकर्मव्यपदेशात्सः ओम् ॥

अत्रोभयत्र प्रसिद्धिः "कारणत्वसाम्याद्विष्णोरचेतनप्रकृतेश्च "सदेव" इत्यादिसृष्टिस्थानं साधारणम्" इति न्यायविवरण एवोक्ता। तत्र यद्यपि यत्कारणत्वसामान्यं ब्रह्मप्रधानसाधारणं न तन्मात्रमिह वाक्ये भाति, "तदैक्षत, तत्तेजोऽसृजत" इत्यत्र चेतनमात्रासाधारणस्र-ष्टृत्वरूपविशेषस्यैव, "बहु स्याम्" इत्यत्र च जडमात्रासाधारणो-

प्रकाशः

ओम् ईक्षतिकर्मव्यपदेशात्सः ओम्। "-"सदेव सोम्य" इत्यादि-सृष्टिप्रतिपादकस्थानगतसन्नाम्नो ब्रह्मप्रधानयोः कारणत्वसाम्येन साधा रणस्य" इत्यादिटीकोक्तेर्मूलं परिष्कर्तुमाह—**अत्रोभयत्र प्रसिद्धि-रिति**। नास्माभिरपूर्वतया वाच्येत्येवकारार्थः। तत्र प्रतीतानुपपत्तिनिरा-सेन तत्समर्थनमात्रं कार्यमिति भावः। यद्वा—न, अत्र टीकायां 'सन्नाम्नः' इत्युक्तेः, तत्र तु 'स्थानं' इत्युक्तेर्न मूलमूलिभाव इति शङ्क्यं, वक्ष्य-माणदिशैकार्थ्यादिति भावेनैवकारः। न्यायविवरणटीकायां "यद्यपि निमित्तत्वमुपादानत्वं च विलक्षणं, तथाऽपि कारणत्वमात्रं विष्णोरचेत-नप्रकृतेश्च समम्। महदादीनां कारणत्वेऽपि न सर्वकारणत्वम्। कार-णत्वं चात्र स्थाने सतः प्रतीयते। "तदैक्षत" इति प्रकृतौ विरुद्धमिति चेत्, "बहु स्याम्" इति विष्णोरपि साम्यमेव" इति ग्रन्थेन "कार-णत्वसाम्यात्" इत्येतदाक्षिप्य समाहितम्। तदस्पष्टत्वाद्विवरीतुं शङ्को-त्तरे आह—**तत्र यद्यपीति**। 'तत्र' न्यायविवरणे। साधारणमभिम-

चन्द्रिका

पादानत्वरूपविशेषस्यैव भानात्। तथाऽपि यदा स्रष्टृत्वविकारयो रविरोधायान्यतरानुसारेणान्यन्नेयमित्येव निश्चयः, न त्वेतदनुसारेणै-तन्नेयमिति विशेषनिश्चयः, तदा "सदेव सोम्येदमग्र आसीत्" इत्यादिवाक्येन प्रतीतनियतपूर्वसत्त्वरूपकारणत्वमात्रनिश्चयात्तद्विशेषस्य चानिश्चयात् तस्य साधारण्यम्। एवञ्च भूमाधिकरणीयन्यायविवर-णस्थं अङ्गपदं इहापि न्यायविवरणेऽनुषञ्जनीयम्। अत एव न्यायविवरणे टीकायां च "—"सदेवसोम्य" इत्यादि" इत्युक्तम्। यद्यप्यबाध्यत्वादिवाची सच्छब्दः स्वत एवोभयत्रप्रसिद्धः, निर्दो-षत्वादिवाची तु कारणत्वमुखेनापि न जडप्रकृतौ प्रसिद्धीकर्तुं शक्यः। यथा चाबाध्यत्वादि ब्रह्मप्रधानाभ्यामन्यत्राप्यस्ति, तथा

प्रकाशः

तमिति शेषः। **अनुषञ्जनीयमिति**। 'अङ्गानां कारणत्वसाम्यात्साधारणं' इत्यनुषञ्जनीयमित्यर्थः। **अत एवेति**। नियतपूर्ववृत्तित्वरूपकारण-त्वस्य विवक्षितत्वादेवेत्यर्थः। "स्थानमिति स्थानेऽनुवर्तमानसन्नाम्नो वि वक्षितत्वात्। तथाच संक्षेपे "सोऽक्षरः सन् हृदब्जगः" इति, "सतः स्रष्टृत्वं" इत्यादि भाष्ये च" इति न्यायविवरणटीकादिरीत्या स्थान-पदेन सन्नामग्रहणमुपेत्य शङ्कते—**यद्यपीति**। ननु नाबाध्यत्वमेव सत्त्वं, किंतु निर्दोषत्वाद्यपि, तच्च न स्वत उभयत्रप्रसिद्धमिति वा, अबा-ध्यत्वस्य पूर्वोत्तरकोटिद्वयादन्यत्र वियदादावपि सत्त्वाद्वा कारणत्वमु-खनिरीक्षणमावश्यकमित्यतः, क्रमेण द्वयमपि निराह—**निर्दोषत्वेति**।

चन्द्रिका

कारणत्वमप्यदृष्टादौ । तथाऽपि "सदेव" इत्यादिवाक्ये एकव्यक्तेरेव सर्वकारणताप्रतीतेरदृष्टादिव्यक्तीनां च भिन्नत्वाद्व्यक्त्यैक्येन वा, उपादानत्वकर्तृत्वयोरन्यतरत्वेन वा विशिष्टस्य कारणत्वस्य द्वयमात्रसाधारण्याद्बाध्यत्वाद्यर्थस्य च सच्छब्दस्य सर्वसाधारण्यात् कारणत्वमुखेनैवोभयत्र प्रसिद्धिरुक्ता । यद्यपि च "आकाशादेव समुत्पद्यन्ते" इत्यादावप्यापाततः साधारणस्य कारणत्वमात्रस्यैव धीः, तथाऽपि सच्छब्दस्य स्वतोऽर्थविशेषे प्रसिद्ध्यभावेन कारणत्वपारतन्त्र्यवत्, आकाशशब्दस्य स्वतोऽर्थविशेषे प्रसिद्धत्वेन तत्परतन्त्रत्वस्याभावात्, प्रत्युत कारणत्वस्यैव तत्परतन्त्रत्वान्नाकाशादिशब्दाना कारणत्वमुखेनोभयत्रप्रसिद्धत्वापातः ।

प्रकाशः

**विशिष्टस्येति** । कारणत्वमात्रं सन्नाम्नो नोभयत्र प्रसिद्धिसंपादकं, किं त्वेकव्यक्तित्वे सति कारणत्वं वा, उपादानत्वकर्तृत्वन्यतरत्त्वे सति कारणत्वं वा तथा, तादृशं च नातिप्रसक्तमित्यर्थः । नन्वेतदपि महत्तत्त्वादावतिप्रसक्तमिति चेन्न, सच्छब्दार्थे प्रतीयमानसर्वकारणत्वस्य तत्राभावात्, कारणत्वपदेनोक्तविशेषणविशिष्टस्य सर्वकारणत्वस्याभिमतत्वादितिन्यायविरणटीकायां स्पष्टत्वादिति भावः । एतेन टीकास्थकारणत्वशब्दस्यैवमेवार्थो ध्येय इत्युक्तं भवति । अतिप्रसङ्गमाशङ्क्य निराह—**यद्यपि चेति** । **आपातत इति** । विमर्शे सति तस्य कर्तृत्वरूपत्वात् पूर्वपक्षे चोपादानत्वरूपत्वादिति भावः । न्यायवि-

चन्द्रिका

न च यस्य कारणत्वस्य साधारण्यात् सच्छब्दस्य साधारण्यं, तस्यैव कारणत्वरूपलिङ्गस्य समन्वय उच्यतां, सन्नामसमन्वयस्तु अर्थात्सिद्ध्यत्विति वाच्यं, प्रथमश्रुतस्य सच्छब्दस्यातिक्रमायोगात् । अक्षरनामसमन्वयोक्त्या नाम्न एव बुद्धिस्थत्वाच्च। श्रुतिरूपप्रबलनामसमन्वयस्यार्थात्सिद्धिः, दुर्बललिङ्गसमन्वयस्य तु साक्षादुक्तिरित्यस्यान्याय्यत्वाच्च । सन्नामसमन्वयोक्तौ "सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, सता सोम्य तदा सम्पन्नो भवति, सति सम्पद्य न विदुः, सत आगत्य न विदुः" इत्यादीनां सच्छब्दयुक्तानां सर्वाधारत्वसुषुप्तगम्यत्वादिगुणप्रतिपादकानामनेकेषां प्रकरणानां ब्रह्मणि समन्वयस्यार्थात् सिद्ध्या सन्नामसमन्वये फलाधिक्याच्च । अत एवानुव्याख्याने "स्थानं लिङ्गमनुग्रहः" इति, न्यायविवरणे च "--"सदेवसोम्य" इत्यादिसृष्टिस्थानम्" इति अनेकप्रकरणवाचिस्थानपदप्रयोगः। भाष्ये "तच्च सत्" इति सच्छब्दप्रयोगस्तु सच्छब्दस्य साक्षात्समन्वयोक्त्यभिप्रायेण। अनुव्याख्याने पादार्थोक्तिदशायां "लिङ्गनाम्नाम्" इति लिङ्गनामग्रहणमपि अस्मिन् पादे

प्रकाशः

वरणटीकायां च "सदेव" इति वाक्योपादानस्य कृत्यान्तरं शङ्कापूर्वं व्यनक्ति —**न चेत्यादिना**। **अर्थात्सिध्यत्विति**। एतेन न्यायविवरणेऽनेकप्रकरणजातरूपस्थानोक्तिरार्थिकाभिप्राया, भाष्याद्युक्तसन्नामानुरोधादित्युक्तं भवति। **अत एवेति**। उक्तदिशा स्थानसमन्वयस्या-

चन्द्रिका

पूर्वपादद्वय इव लिङ्गनाम्नोरेकैकस्यैव समन्वय इति नियमव्यवच्छेदार्थम्, न तु स्थानसमन्वयव्यवच्छेदार्थं, स्थानसमन्वयस्य साक्षात्त्वव्यवच्छेदार्थं वा। एवञ्चाधिकरणान्तरेष्वपि तत्तदधिकरणसमन्वेतव्येन नाम्ना लिङ्गेन वा युक्तानां स्थानानां समन्वयोऽप्यर्थात्सिद्ध इति द्रष्टव्यमिति प्रदर्शनार्थं तच्चोक्तम्। यद्वाऽन्यत्र समन्वेतव्यशब्दयुक्तानेकावान्तरप्रकरणाभावात् अत्र च तत्सद्भावादिह स्थानसमन्वयोक्तिः। अथवाऽत्र सदात्मादिनानाशब्दयुक्तानां विप्रकीर्णानां "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिसृष्टिप्रकरणानां समन्वयसिद्धेरन्यत्र तदभावात् इह स्थानसमन्वयोक्तिः। सिद्धे च स्थानसमन्वये तदेकदेशयोः प्रकरणवाक्ययोरपि स कैमुत्यन्यायसिद्ध इति न ते पृथगुक्ते। समाख्यायास्तु ब्रह्मपरत्वस्यानिर्णये

प्रकाशः

त्यभिमतत्वादेवेत्यर्थः। ननु स्थानसमन्वयस्याऽऽर्थिकत्वे तन्न वक्तव्यं स्यात्, साक्षादन्वीयमानस्यैव वाच्यत्वादित्यतस्तदुक्तेः प्रयोजनमाह—**एवं चेति**। अर्थात्समन्वीयमानं स्थानमपीत्यर्थः। अत्रैवैतस्य वचने को हेतुरित्यतः पक्षान्तरमाह—**यद्वेति**। पादान्त्यप्राणनयविषयवाक्ये प्राणशब्दयुक्तावान्तरप्रकरणमस्तीत्यतः पक्षान्तरमाह—**अथवेति**। नन्वर्थात्समन्वीयमानस्याप्युक्तौ वाक्यप्रकरणसमाख्यानामप्युपादानप्रसङ्ग इत्यत आह—**सिद्धे चेति**। स इति। समन्वय इत्यर्थः। "—"सदेवसोम्य" इत्यादिना प्रतिपादितं सृष्ट्यर्थं प्रलये प्रथममवस्थानमित्येके

चन्द्रिका

समाख्यात्वस्यैवायोगात्, निर्णये च निर्णीतसमन्वयस्य निर्णेतव्य-नामादिसमन्वयाधीनत्वायोगात् न साऽपि पृथगुक्ता। केचित्तु अनु-व्याख्यानादौ स्थानपदं सृष्टिकालेऽवस्थानवाचीत्याहुः। तस्माद्युक्ता पादसङ्गतिः। पूर्वाधिकरणवैषम्यप्रदर्शनेन वा, पूर्वाधिकरणासिद्धान्त न्यायेन वा, अम्बरान्तधृतिरूपपूर्वहेत्वाक्षेपेण वा पूर्वपक्षोत्थानादवा-न्तरसङ्गतिः। त्रेधा पूर्वपक्षोत्थानं चानन्तरमेव दर्शयिष्यते।

प्रकाशः

वर्णयन्ति। एवं तर्हि विषयमालायां लिङ्गमित्येव वक्तव्यं, सत्यं, विशेषतस्तदेव प्रदर्शितमित्यदोषः" इति न्यायविवरणटीकोक्तं पक्षा-न्तरमाह—**केचित्त्विति**। अत एव,

तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः।

इत्यनुव्याख्याने 'लिङ्ग' इत्येवोक्तिरिति भावः। एवमन्तर्भावसङ्गतिपर-टीकायामुपपादनसापेक्षपादान्तर्भावांशं समर्थ्य, इदानीं "जन्माद्यस्य यतः" इत्यादिटीका फलपरेति भावेन पूर्वानन्तर्ये सङ्गतित्रयमाह—**पूर्वेति**। प्रत्युदाहरणरूपा वा, अपवादरूपा वा, आक्षेपकी वेत्यर्थः। एतेन

अम्बरावधिकाधारात् प्रणवः पर्युदासितः।

तद्ध्येयमपरं किं वा परमित्यत्र चिन्त्यते॥

इति बुद्धिसङ्गतिरिति कल्पतरूक्तं निरस्तं, पूर्वत्र द्रष्टृत्वाद्ययोगेन वर्णपक्षस्य प्रत्याख्याततया बुद्धिसन्निध्यभावात्। भामत्यादौ वर्ण-मात्रस्यैव पर्युदस्तत्वेन विशिष्य प्रणवपर्युदासाभावाच्च। परात्पर-

चन्द्रिका

अत्र "सदेव सोम्येदमग्र आसीत्" इति श्रुतं सत् किं जडप्रकृतिः किं वा ब्रह्मेति चिन्ता । तदर्थं "तदैक्षत" इति श्रुतं सत ईक्षणं किं गौणं किं वा मुख्यमिति । तदर्थं "बहु स्याम्" इयुक्तो बहुभावः किं विकारः किं वा स्वरूपबहुत्वमिति ॥

पूर्वपक्षस्तु—इदं सत् प्रधानमेव, न तु ब्रह्म, "बहु स्यां प्रजायेय" इति सति श्रुतस्य विकारस्य निर्विकारे ब्रह्मणि विरोधात् । युक्तो हि भूमगतयोरुत्क्रमणसर्वगतत्वयोरविरोधः, तयोः प्रतियो-

प्रकाशः

त्वरूपलिगङ्गत्यागेन सूत्रे ईक्षतिकर्मत्वोक्त्या "त्रिमात्रेणोमित्यनेन" इत्युदाहरणस्य सूत्राननुगुणतयाऽन्यस्यैवात्र विषयत्वाच्चेति ।

"तत्सदत्र विषयः" इत्यादिविषयसंशयटीकां व्यनक्ति—**अत्रेति** । छान्दोग्ये षष्ठेऽध्याये "सदेव सोम्येदमग्र असीदेकमेवाद्वितीयं" इत्युपक्रमेण "तदैक्षत बहु स्यां प्रजायेय" इति "तत्तेजोऽसृजत" इत्यादि श्रूयते, तत्रत्यसच्छब्दो विषय इत्यर्थः । यदि विकारस्तदा बहुभावाद्बाधकादीक्षणं गौणमिति जडप्रकृतिरिति सिध्यति, अन्यथा तु विष्णुरिति स्पष्टमिति भावः ।

"सत्प्रधानमेव भवेत्" इत्यादि "इति भावः" इत्यन्तटीकां विवृण्वन् पूर्वपक्षयति—**पूर्वपक्षस्त्विति** । ननु पूर्वत्रेवात्रापि विकारतद्भावयोरीश्वरे विरोधसमाधनसम्भवान्नायं हेतुः पूर्वपक्षप्रापक इत्यतः, पूर्ववैषम्येणास्य निरवकाशत्वमाह—**युक्तो हीति** ।

चन्द्रिका

ग्यनुयोगिभावाभावात् । युक्तश्चाक्षरधर्मयोर्महत्त्वाणुत्वयोरप्यविरोधः, तयोः प्रतियोग्यनुयागिभावेऽपि भावरूपत्वेन भावाभावरूपत्वाभावात् । युक्तश्च तद्धर्मयोरेव स्थौल्याभावाणुत्वाभावयोरविरोधः, तयोरप्यभावरूपत्वेन भावाभावरूपत्वाभावात् । युक्तश्च तद्धर्मयोरेवात्तृत्वानशनयोरप्यविरोधः, तयोर्भावाभावरूपत्वेऽपि अनशनस्यात्तृत्वविशेषाभावरूपत्वेनात्तृत्वसामान्याभावरूपत्वाभावाद्विशेषाभावसामान्ययोश्चाविरोधात् । इह तु "बहु स्याम्" इति श्रुतेन विकारेण "निर्विकारः सदा शुद्धः" इत्यादौ श्रुतस्य विकाराभावस्याविरोधो न युक्तः, तस्य विकारसामान्याभावरूपत्वात्, सामान्याभावविशेषयोश्च विरोधात् । न ह्यनशनश्रुतेरिव निर्विकारश्रुतेरपि विशेषनिषेधपरता सिद्धान्तिन इष्टा, युक्ता वा, चेतने विकारसामान्यस्य क्वाप्यदर्शनात् । तदुक्तं न्यायविवरणे "अन्यस्यान्यभावादृष्टिः"

प्रकाशः

**प्रतियोग्यनुयोगिभावेऽपीति**। निरूप्यनिरूपकभावेऽपीत्यर्थः। **अत्तृत्वविशेषेति**। उपजीवनार्थादनरूपविशेषेत्यर्थः। पनसे चूतत्वाभाववृक्षत्वयोरिवेति भावः। **विकारसामान्याभावरूपत्वादिति**। एतेन विकाराविकारयोः प्रतियोग्यनुयोगिरूपत्वादित्यपि सिद्धं बोध्यम् । भाष्यादावविकारे विकारासम्भवइत्येवोक्त्या तदुपपादनस्यास्पष्टत्वादाह— **तदुक्तमिति** । लोके क्वचिद्विशेषसामान्याभावयोरविरोधादृष्ट्या विरुद्धत्वमित्येतदर्थः । विस्तृतं चैतत्,

चन्द्रिका

इति । न च नानाविधहेयात्मना विकारो गुणः, येन "गुणाः श्रुतास्सुविरुद्धाश्च देवे सन्ति" इत्यादिश्रुत्या विरुद्धोऽप्यङ्गीक्रियेत, प्रत्युतानर्थत्वाद्दोष एव । न च प्रधानेऽपि "तदैक्षत" इत्युक्तमीक्षणं विरुद्धमिति शङ्क्यं, प्रधानस्य ज्ञानहेतुसत्त्वगुणयोगेन वा, कार्योन्मुखत्वेन वा, अभिमानिन ईक्षितृत्वेन वा तस्य गौणत्वात् ।

प्रकाशः

न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम् ।
नाचेतनविकारोऽपि चेतनः स्यात्कदाचन ।
न चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते ।

इत्यादिचतुर्थपादीयानुव्याख्यानसुधयोः । एतेन "युक्तो हि" इत्यादिना "पूर्वधिकरणवैषम्यप्रदर्शनेन" इत्युक्तं उपपादितं ध्येयम् । अन्यत्रादृष्टमपि श्रुतत्वादस्त्वित्यत आह—**न चेति** । श्रुतौ हि "बहु स्याम्" इति तेजःप्रभृत्यात्मना नानाविधमहं 'स्यां' भवेयमिति तेजः प्रभृत्यात्मना बहुभवनं सङ्कल्प्य "तत्तेजोऽसृजत" इति तत्तेजोऽभवदिति तेजःप्रभृत्यात्मना नानाभवनश्रवणात्तस्य च गुणत्वाभावादित्यर्थः । भाष्याद्युक्तो विकारासम्भवो हरावुपलक्षणं, "तदैक्षत" इतीक्षणोपपत्तिश्च प्रधाने ध्येयेति भावेन शङ्कासमाधी आह—**न च प्रधानेऽपीति** । टीकोक्तमाह—**ज्ञानेति** ।

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।

इति गीतोक्तदिशा ज्ञानहेतुसत्त्वगुणयोगेन 'चक्षुः पश्यति' इतिवत् "तदैक्षत" इति निर्देश इत्यर्थः । ननु प्राथमिकेक्षणानुरोधेन चरम-

चन्द्रिका

युक्तं चेक्षणस्य गौणत्वं, "तत्तेज ऐक्षत, ता आप ऐक्षन्त" इति गौणेक्षणप्रायपाठात्। एतेनेक्षणं मुख्यं विकारस्तु गौण इति ब्रह्मैव सदस्त्विति निरस्तम्। पूर्वाधिकरणे चरमस्य द्रष्टृत्वादेर्मुख्यत्वाय प्रथमस्य भूतभवत्त्वादेर्गौणत्ववदत्रापि चरमस्य विकारस्य मुख्यत्वाय प्रथमस्येक्षणस्यैव गौणताया न्याय्यत्वाच्च।

प्रकाशः

बहुभाव एव गौणो नीयतां इत्यत आह—युक्तमिति। तेजःप्रभृतेः पूर्वपक्षे जडत्वादिति भावः। ननु प्रधानेऽभिमानिनमङ्गीकृत्येक्षणमुपपादयन् तेजःप्रभृतेः कथमभिमानिचेतनत्वं नोपैतीति चेत्सत्यं, एवमप्यभिमानिद्वारा गौणताया अवश्यं वाच्यत्वादिति भावः। अत एव 'गौणेक्षणप्रायपाठ' इत्येवोक्तम्। एतेनेति। प्रायपाठेनेत्यर्थः। न केवलं प्रायपाठेन, अपि तु पूर्वसिद्धान्तन्यायेनापीत्याह —पूर्वेति। "नान्यदतोऽस्ति द्रष्टृ" इत्यादिवाक्यशेषबलात् "अदृष्टं द्रष्टृ" इत्यादिना प्रतीतानन्याधीनासङ्कुचितप्रशास्तृत्वास्थूलत्वानणुत्वादेश्च ब्रह्मण्येव मुख्यतया तदनुरोधेन ततः प्राक् श्रुतस्याक्षरस्य ब्रह्मत्वे तदेकाश्रितत्वलिङ्गेनाकाशस्य चित्प्रकृतित्वात्तदोतत्वादिनोक्तभूतभवदादेर्जडत्वे पोष्यत्वादिरूपौतत्वस्यायोगेन देहद्वारा भूतत्वभवत्त्वादियुक्तचेतनपरतया भूतत्वं भवत्त्वं भविष्यत्त्वमित्येतत् गौणं तथेहापीत्यर्थः। अन्यथा तत्र भूतभवत्त्वादेः मुख्यत्वाय "भूतं च भविष्यच्च" इत्युक्तस्य जडत्वे तदाधारत्वस्य प्रधानेऽपि सम्भवात् सर्वाधारप्रधाना-

प्रकाशः

धारस्याक्षरस्य चित्प्रकृतितापत्त्या द्रष्टृत्वादिकमन्याधीनममुख्यं प्राप्नोतीति भावः। एतेन "पूर्वाधिकरणसिद्धान्तन्यायेन वा पूर्वपक्षोत्थानात्" इत्येतदुपपादितं बोध्यम्। अत्रास्थूलत्वादेरिति वक्तव्ये "द्रष्टृत्वादेः" इति वचनं तस्य साक्षात्सूत्रोपात्तास्थूलत्वादेरिवास्यापि सिद्धान्तसाधकतासूचनाय। उक्तं च बृहदारण्यकभाष्ये "नान्योऽतोऽस्ति द्रष्टेत्यादियुक्तिभिश्च" इति। यद्यपि पूर्वं पोष्यत्वाद्यर्थकौतत्वान्यथानुपपत्त्यैव भूतभवत्त्वादेर्गौणत्वं युक्तमिति चरमौतत्वमुख्यत्वाय प्रथमभूतभवत्त्वादेर्गौणत्ववदित्यपि वक्तुं शक्यम्, भाष्यादावनुक्तत्वं चोभयत्र समं। तथाऽपि द्रष्टृत्वादेर्मुख्यत्वमपि तद्गौणतायां बीजमिति दर्शयितुं एवमुक्तम्। न चास्मिन् पक्षेऽम्बरशब्दितश्रीतत्त्वाधारतयाऽक्षरस्य ब्रह्मत्वोक्तिविरोधः, अक्षरस्य ब्रह्मत्वनिर्णयेन आकाशस्य चित्प्रकृतिपरत्वनिर्णयेऽन्योन्याश्रयश्च स्यादिति वाच्यं, अस्मिन् पक्षेऽम्बरान्तधृतिहेतोरविवक्षितत्वात्। द्रष्टृत्वादिनैवाक्षरस्य ब्रह्मत्वनिर्णये अन्योन्याश्रयाभावाच्च। अत एव पूर्वत्राद्यहेतुसमर्थनायौतत्वमुखेनैवाऽऽकाशस्य चित्प्रकृतिपरत्वमुक्तम्। केचित्तु—आकाशः प्रधानं चित्प्रकृतिर्वेति विशये भूतभवत्त्वादेर्मुख्यत्वाय प्रधानमिति प्राप्ते, स्वतन्त्रद्रष्टृत्वादेर्मुख्यत्वायाक्षरस्य ब्रह्मतया तदेकाश्रितत्वालिङ्गेनाऽऽकाशस्य श्रीतत्त्वपरतया तत्पोष्यत्वनिर्वाहाय भूतत्वादिकं गौणं यथेति विचारान्तराभिप्रायेण तदित्याहुः। पूर्वतन्त्रादौ प्रथमेन चरमस्य बाधोक्तावपीह पूर्वसिद्धान्तन्यायेनात्र चरमेण पूर्वस्य बाधशङ्कनादत्र शास्त्रे चरमस्यैव प्राबल्याश्रयणाच्चर-

चन्द्रिका

नन्वेवं प्रधानस्योपादानत्वेऽपि निमित्तत्वं ब्रह्मण एवेति "सतः स्रष्टृत्वमुच्यते" इति भाष्योक्तजन्मादिसूत्राक्षेपो न युक्त इति चेत्, उच्यते, 'सदेव' इत्यवधारणेन प्रधानातिरिक्तकारणव्यवच्छेदात्, सर्वाणि कारणवाक्यानि प्रधानपराणि, प्रधानस्य परिणामश्च क्षीरस्य दधिभाववच्चेतननिरपेक्षः, अभिमानिचेतनमात्रसापेक्षो वा, तथा चेश्वरस्य कारणतैव नेति वा, श्रुत्यन्तरेणेश्वरस्य कारणत्वेऽपि इहाद्वितीयपदसन्निधानात् प्रतीताऽनन्याधीनकारणता प्रधानस्यापीति वा पूर्वःपक्षः । एवञ्च श्रुतौ भाष्ये च स्रष्टृत्वव्यपदेशो लक्षणया

प्रकाशः

मेण पूर्वस्य बाधोक्तिरदोषायेति भावः । एवं प्रधानपक्षे "तदैक्षत" इत्यस्य गतिमुक्त्वा "तत्तेजोऽसृजत" इत्याद्युक्तेर्गतिं विवक्षुः "नन्वेतत्स्थाने प्रधानस्य प्रतिपाद्यत्वेऽपि" इत्यादिटीकायां सृष्ट्युक्तिगत्युक्तिद्वारा जन्मादिसूत्राक्षेपप्रकारस्यास्फुटत्वात्तां तात्पर्यतो विवृण्वन् टीकोक्ताक्षेपमनूद्य पञ्चधा समाधिमाह—**नन्वेवमित्यादिना** । केवलजडस्य कथं परिणाम इत्यत आह—**प्रधानस्येति** । तत्राप्यातञ्चनकर्तुः सत्त्वेन विवादादाह—**अभिमानीति** । **तथा चेति** । सकलकारणवाक्यानां प्रधानपरत्वे सतीत्यर्थः । **प्रधानस्यापीति** । तथा च प्राचीनपक्षे ब्रह्मणि कारणत्वरूपलक्षणस्यासम्भवः, द्वितीयपक्षेऽतिव्याप्तिरिति भावः । एवं तर्हि श्रुतौ "असृजत" इति, भाष्ये "सतः स्रष्टृत्वमुच्यते" इति स्रष्टृपदं च विरुध्यत इत्यत आह—**एवं चेति** । स्रष्टृत्वं

चन्द्रिका

कारणत्वमात्रपरः, गौण्या अनन्याधीनकारणत्वपरो वा, प्रधानाभिमानिचेतनस्य स्रष्टृत्वपरो वा। तथा च ईक्षणादेर्गौणत्वेन प्रधानस्यास्रष्टृत्वेऽपि जन्मादिसूत्रोक्तकारणत्वसामान्यस्य वा, अनन्याधीनकारणत्वस्य वा, स्रष्टृत्वस्य वाऽऽक्षेपो युक्तः। अथवा––यथा विवर्तमते तत्त्वतो निर्विकारस्यैव ब्रह्मणोऽतात्त्विको विकारः, तथा तत्त्वतोऽचेतनस्य विकारिणश्च प्रधानस्यातात्त्विकमीक्षणं स्रष्टृत्वं चास्तु। एवञ्चेक्षणादिकमपि मुख्यमेव, न तु गौण मिति पूर्वः पक्षः। यद्वा––यथा विशिष्टोपादानमते विशेष्यस्य निर्विकारत्वेऽपि विशिष्टस्य तात्त्विक एव विकारः, तथा प्रधानस्याचेतनत्वेऽपि स्वाभिमानिचेतनविशिष्टस्य तात्त्विकमेवेक्षणादीति पूर्वः पक्षः।

प्रकाशः

नाम कृतिमत्कारणत्वं, तत्र तदेकदेशः कारणत्वमात्रं लक्ष्यत इत्यर्थः। **गौण्येति**। यथा स्रष्टाऽनन्याधीनः तथाऽनन्याधीनं कारणमपीत्यर्थः। पूर्वं श्रुत्यादिगतेक्षणादेरमुख्यत्वमुपेत्याऽऽक्षेपप्रकार उक्तः। इदानीं मुख्यत्वमुपेत्याह––**अथवा–यथा विवर्तमत इति**। तात्त्विकमेवेक्षणादिकमुपेत्याह––**यद्वा––यथा विशिष्टेति**। प्राक्पक्षे अतात्त्विकत्वमेवास्वारस्यबीजं, अस्मिन् पक्षे च प्रागुक्तस्रष्टृत्वाक्षेपः सुकर इति भावः। अस्मिन् पक्षे विशिष्टस्येक्षितृत्वस्रष्टृत्वलाभेऽपि बहुभवनरूपविकारस्य केवलप्रधाननिष्ठतयेक्षणस्रष्टृत्वविकाराणामेकनिष्ठ

चन्द्रिका

यद्वा—यथा पूर्वाधिकरणसिद्धान्ते विशेष्यभूतब्रह्मनिष्ठयोस्तात्त्विक* एवाणुत्वमहत्त्वयोरविरोधः, तथा प्रधानेऽपि श्रौतत्वात् जाड्यच-क्षणयोर्विकारस्रष्टृत्वयोश्चाविरोध इति पूर्वः पक्षः। न ह्यत्र सांख्य-मतं पूर्वः पक्षः, किन्तु श्रुत्यवष्टम्भेन सम्भावितं मतम्। एवञ्च पूर्व-पक्षे उपादानस्य प्रधानस्यैव स्रष्टृत्वमपीति जन्मादिसूत्राक्षेपो युक्तः। अथवा—प्रधानस्य सांशत्वात् एकेनांशेन चेतनत्वस्रष्टृत्वे, अशान्तरेण त्वचेतनत्वविकारित्वे, ब्रह्म तु निरंशम्, तथा च प्रधानस्यैव स्रष्टृत्व-मिति पूर्वपक्षप्रवृत्तेस्तदाक्षेपः। अत्र यद्यपि पूर्वपक्षे "सदायतनाः" इत्युक्तं सर्वाधारत्वमपि प्रधानस्य स्यादिति अम्बरान्तधृतिरूपपूर्वाधि-करणहेतुर्वा, द्युभ्वाद्यधिकरणं वाऽऽक्षेप्तुं शक्यं, तथाऽप्यस्य सर्वस्य

प्रकाशः

त्वाय पक्षान्तरमाह—**यद्वा—यथा पूर्वाधिकरणेति**। एतेन "पूर्वा-धिकरणसिद्धान्तन्यायेन वा पूर्वपक्षोत्थानात्" इत्येतत्प्रकारान्तरेणापि प्रदर्शितं भवति। ननु साङ्ख्यमते प्रधानस्यैवंविधत्वानङ्गीकारा-दपसिद्धान्त इत्यत आह—**न हीति**। अत एव टीकादौ माया-वादिमत इवोक्तदिशा निर्वाहस्सुकर इति विशिष्य प्रपञ्चनाभाव इति भावः। उपादानस्यैव स्रष्टृत्वे कार्यानुस्यूत्यननुस्यूत्योरयोगात् तद-नुगुणं पक्षान्तरमाह—**अथवेति**। एवं भाष्यकारीयं जन्मादिसू-त्राक्षेपप्रकारमुपपाद्य तदाक्षेपोक्तौ भाष्यकृतोऽचातुर्यमाशङ्क्याह—**अत्र यद्यपीति**। **आक्षेप्तुं शक्यमिति**। एतेन "अम्बरान्तधृतिरूप-

* 'तात्त्विकयोः' इति च पाठः.

चन्द्रिका

जन्मादिसूत्रनिर्वाहार्थत्वेन तच्छेषत्वात् "सदेव" इत्यादिवाक्ये कारणत्वस्य प्रथमप्रतीतत्वाच्च तदेवाक्षिप्तम् । यद्यपि चात्रत्यस्य स्त्रष्टुरन्यत्वे "सोऽकामयत बहु स्यां प्रजायेयेति, स इदं सर्वमसृजत" इत्युक्त आनन्दमयरूपोऽपि स्त्रष्टाऽन्यः स्यात्, ब्रह्म तु तदवयव इत्यजिज्ञास्यं स्यादिति जिज्ञासासूत्रमेवाक्षेप्तुं शक्यं, तथाऽपि तदाक्षेपस्यानन्दमयाक्षेपसापेक्षत्वात्, निरपेक्षो जन्मादिसूत्राक्षेप एव कृतः । यत्तु—"ब्रह्मलक्षणानां श्रवणात्" इति टीकायां "एकमेवाद्वितीयं" इत्यद्वितीयादिपदोक्तानां सर्वोत्तमत्वादीनां ब्रह्मधर्मत्वमाक्षिप्तं, तदनुव्याख्यानादिस्थस्थानपदानुसारेण । भाष्यस्थं स्त्रष्टृपदं गुणान्तरस्याप्युपलक्षणम् ।

प्रकाशः

पूर्वहेत्वाक्षेपेण वा पूर्वपक्षोत्थानात्" इत्येतद्विवृतं भवति । अत्र यद्यपि "सन्मूलाः सोम्येमाः सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठाः" इति प्रजानामेव सदाधारकत्वमुच्यते, न तु पृथिव्यादिप्रकृत्यन्तरूपाम्बरान्तस्य सदाधारकत्व, येन सच्छब्दार्थस्य प्रधानत्वे तत्र श्रुताम्बरान्तधारकत्वमप्यस्यैवेति प्रागुक्ताम्बरान्तधृतिरूपहेतुर्न विष्णुत्वसाधक इत्याक्षेपेण पूर्वपक्षस्स्यात्, तथाऽपि पूर्वत्राम्बरान्तपदेन पृथिव्यादिप्रकृत्यन्तस्य चेतनराशेरेवाभिमन्यमानसहितस्य विवक्षितत्वेनेहापि प्रजापदेन तथैव विवक्षोपपत्तेः सङ्कोचकाभावादिति भावः । टीकाविरोधमाशङ्क्य तत्तात्पर्यमाह—**यत्त्विति** ।

चन्द्रिका

ततश्च सर्वोत्तमत्वादिगुणान्तराक्षेपोऽपि सम्भवतीत्यभिप्रायेण, न तु स्रष्टृत्वाक्षेपो न सम्भवतीत्यभिप्रायेण। अत एव टीकायां "यद्यत्र विकारिकारणत्वमेवोच्येत" इत्यवधारणप्रयोगः, "तत्तेजोऽसृजत" इति स्रष्टृत्ववाचिवाक्योदाहरणं च ॥

सिद्धान्तस्तु—न तावदाद्यः पूर्वः पक्षो युक्तः, यतः,

ईक्षतिर्बहुभावश्च मुख्यौ ब्रह्मपरिग्रहे।
प्रधानपक्षे तु तयोरमुख्यत्वं प्रसज्यते ॥

आद्यपूर्वपक्षे ईक्षणं तावद्गौणमिति परेणैवोक्तम्। बहुभावोऽपि गौण एव, "तत्तेजोऽसृजत" इति यत्तेजःप्रभृतिसृज्यमुक्तं, तदात्मना हि त्वया बहुभावो वाच्यः। तेजःप्रभृति च चेतनं, "तत्तेज ऐक्षत" "तदपोऽसृजत" "ता आप ऐक्षन्त" "ता अन्नमसृजन्त" "तिस्रो

प्रकाशः

**अवधारणेति**। तेन स्रष्टृत्वरूपकारणत्वस्याप्यनुमतत्वप्रतीतेरिति भावः।

क्रमेणोक्तान् पञ्च पक्षान् निराकरिष्यन् सिद्धान्तयति—**सिद्धान्तस्त्विति**। "–"सदेव" इत्यादिस्थाने सच्छब्देन विष्णुरेवोच्यते, सतः "तदैक्षत" इतीक्षत्याख्यव्यापारश्रवणात् जडप्रधानस्येक्षणासम्भवात्" इत्यादिना कृत्स्नसिद्धान्तटीकायामीक्षणबहुभावौ विष्णावुपपाद्य प्रधाने सूत्रोपात्तेक्षणासम्भव एवोक्तो न तु बहुभावासम्भवोऽपि। अतः टीकोक्तमुपलक्षणं मत्वा सर्वं तावत् संगृह्याह—**यतः, ईक्षतिरिति**। 'यतः' इत्यस्य श्लोकेनान्वयः। ततो न युक्त इत्यर्थः। उत्तरार्धं विवृणोति—**आद्यपूर्वपक्ष इत्यादिना**।

चन्द्रिका

देवतात्वेऽपि त्रिवृत्करणाविरोधः छान्दोग्यभाष्यादवगन्तव्यः । न च जडस्य प्रधानस्य चेतनात्मना बहुभावो मुख्यः । एतेन प्राय-

प्रकाश.

**त्रिवृत्करणेति** । "या इमास्तिस्रो देवताः तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इत्युक्ततेजोबन्नानां त्रयाणां मेलनेनैकद्रव्यान्तरकरणरूपं यत्त्रिवृत्करणं तद्विरोधः, देवतानां तदयोगात् ।

सृष्टेष्वेतेषु भगवानीक्षांचक्रे स केशवः ।

जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः ॥

तेन रूपेण लक्ष्मयादीन् प्रविष्टो रूपनामनी ।

करिष्ये त्रिवृतश्चैतान् एकैकं करवाणि च ॥

इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि ।

नामरूपाणि कृतवान् तांश्चान्योन्यप्रवेशिनः ॥

कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन् विदधे पुनः ।

इत्यादिनाऽभिमन्यमानतेजोबन्नांशैः द्रव्यान्तरं कृत्वा तत्राभिमानिदेवतांशानामपि प्रवेशकरणेन त्रिवृत्करणोक्तेरविरोधो बोध्य इत्यर्थः। तथा "अन्नमाशितं त्रेधा विधीयते । यः स्थविष्ठो भागस्तत्पुरीषं यो मध्यमस्तन्मांसं" इत्यादिनोक्ताध्यात्मात्रिवृत्करणाविरोधोऽपि "देवता एव मांसादिशब्दवाच्याः, तत्र प्रवेशात्, अदृश्यमानाच्च उपजीव्यत्वात् । न च दुःखं तासां, ऐश्वर्यात्" इति भाष्यवाक्यादवगन्तव्य इत्यर्थः । **एतेनेति** । तेजःप्रभृतेश्चेतनत्वेन तत्र श्रुतेक्षणस्य

चन्द्रिका

पाठोऽपि निरस्तः। ब्रह्मपक्षे तु न केवलमीक्षणं मुख्यं, किन्तु बहुभावोऽपि, "गुहां प्रविष्टौ" इत्यत्रैकस्मिन्नपि बहुत्वस्य, "द्युम्वादि" इत्यत्र चाजेऽपि जनेरुक्तत्वात्। न चैवमिदमधिकरणं व्यर्थमिति शङ्क्यं, "बहु स्याम्" इति तेजआद्यात्मना बहुभाव एव सङ्कल्पितो न स्वरूपबहुभावः, "तत्तेजोऽसृजत" इति वाक्यशेषात्। न हि स्वरूपबहुभावं सङ्कल्प्य तेजःप्रभृतिसर्जनं युक्तं, तेजआदिभावश्च न ब्रह्माणि युक्त इति शङ्कायां, तत्समाधानार्थ-

प्रकाशः

गौणत्वाभावेन गौणेक्षणप्रायपाठात् "तदैक्षत" इति श्रुतमीक्षणं गौण मित्येतन्निरस्तमित्यर्थः। नन्वस्त्वीक्षणबहुभावयोः मुख्ययोः प्रधानेऽसम्भवः, हरौ तु कथं, ईक्षणस्य चेतनत्वेन "नान्योऽतोऽस्ति द्रष्टृ" इत्यादिभाष्योक्तश्रुत्या च मुख्यस्य सम्भवेऽप्येकस्मिन्नजे "अजायमानो बहुधा विजायते" इति श्रुत्युक्तत्वेऽपि बहुत्वजननयोरनुपपत्तिः। तथा च "बहुभावस्य विकारित्वं विनैव स्वरूपबहुत्वेन सावकाशत्वात्" इति टीका न युक्ता, तत्सङ्ग्रहश्चात्र श्लोके न युक्त इत्यतः पूर्वार्धं विवृणोति—**ब्रह्मपक्षे त्विति**। "न ह्यन्यार्थं सङ्कल्पमभिधायान्यक्रियाभिधानं सङ्गच्छते। न हीश्वरोऽस्वतन्त्रोऽसत्यकामो वा" इति चतुर्थपादीयसुधोक्तदिशा वाक्यशेषस्योक्तार्थज्ञापकत्वं व्यनक्ति—**न हीति**। अतः तेजःप्रभृत्यात्मनैव बहुभावः सङ्कल्पित इति वक्तव्यमिति भावः। **न ब्रह्माणि युक्त** इति।

चन्द्रिका

त्वादस्य । समाधानं तु—

बहु स्यामिति सङ्कल्पश्च तेजःप्रभृतिसर्जनम् ।

गुरुः स्यामिति सङ्कल्पश्च शिष्यसम्पादनादिवत् ॥

तत्तन्नियामकस्वरूपबहुभावं सङ्कल्पश्चानन्तरं नियम्यसृष्टिर्युक्तैव, गुरुत्वराजत्वादेः शिष्यभृत्यादिसापेक्षत्ववन्नियामकताया नियम्यसापेक्षत्वात् । अत एव श्रुत्यन्तरे "सोऽकामयत बहु स्यां प्रजायेय" इति

प्रकाशः

न चेतनविकारःस्याद्यत्र क्वापि ह्यचेतनम् ।

इति चतुर्थपादीयानुभाष्योक्तदिशेति भावः । यद्वा—प्रागुक्तदिशा निर्विकारत्वादिति भावः ।

बहु स्या मिति तस्यैव ह्युक्तमार्गेण युज्यते ।

तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जगत् ॥

इति चतुर्थपादीयानुव्याख्यानोक्तं दृष्टान्तपूर्वं संगृह्योपपादयति—**समाधानं त्वित्यादिना ।**

सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते ।

तत्सृष्ट्वेति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ॥

इत्युत्तरपादीयानुव्याख्यानोक्तमाह—अत **एवेति** । स्वरूपबहुत्वसङ्कल्पानन्तरं नियम्यसर्जनस्योक्तदिशाऽभिमतत्वादित्यर्थः । नन्वस्तु तैत्तिरीयश्रुतौ "तत्सृष्ट्वा" इति वाक्यशेषबलात् तथोपपत्तिः, नैवं छन्दोगश्रुतौ, तथोपपत्तिकल्पकवाक्यशेषाभावात् । तथा च "बहु

चन्द्रिका

प्रक्रम्य "स इदं सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत्" इति, अत्रापि श्रुतौ "अनेन जीवेनात्मनाऽनुप्रविश्य" इति भगवतः स्वसृष्टवस्तुनियमनाय तदनुप्रवेश उक्तः। तदेतदभिप्रेत्योक्तं न्यायविवरणे—"अचेतनस्येक्षणाद्दृष्टिः। बहुभावश्रुतिस्तु अन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यते" इति। तस्मादीक्षणबहुभावौ द्वावपि मुख्यौ। एकस्य गौणत्वेऽपीक्षितृत्वस्रष्टृत्वमध्यगतत्वेन ताभ्यां सन्दष्टो बहुभाव एव गौणः।

प्रकाशः

स्यामिति तस्यैव ह्युक्तमार्गेण" इत्यनुव्याख्याने "तच्च त्यच्च" इति वाक्यव्याख्यानन्यायेनेत्युक्तिरयुक्तेत्यत आह—**अत्रापि श्रुताविति**। अनेन जीवनामकेनानिरुद्धेन स्वात्मना तेजोबन्नशब्दितान् श्रीब्रह्मरुद्रान् प्रविश्येत्यर्थः। तैत्तिरीयभाष्ये तु—

सृष्ट्वा जगादिदं सर्वं नियामकतयाऽस्य तु।
बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत्॥

इति बहु स्यामिति सङ्कल्प एव नियम्यानेकसर्जनपूर्वकस्वरूपबहुभावसर्जनविषयक इत्यर्थान्तरमुक्तम्। तस्मिन् पक्षे नियम्यसर्जनस्य प्रथमसङ्कल्पितत्वात् नियम्यसर्जनं नासङ्गतमिति भावः। भाष्यटीकयोरस्फुटत्वादाह—**तदिति**। तत्त्वप्रदीपे सौत्रकर्मशब्दस्य सृष्ट्यर्थत्वमुपेत्येक्षणस्रष्टृत्वयोर्द्वयोः हरौ मुख्यत्वोक्त्या सूचितं पक्षान्तरमाह—**एकस्य गौणत्वेऽपीति**। **संदष्ट इति**। "तदैक्षत बहु

चन्द्रिका

न च सङ्कल्पस्य सृष्ट्यर्थत्वात् "गुणे त्वन्यायकल्पना" इति न्यायेनेक्षणं गौणमिति वाच्यं, "बहु स्यां प्रजायेय" इत्यस्यापि सङ्कल्पान्तर्भूतत्वात् "असृजत" इति प्रधानभूतस्रष्टृत्वानुरोधेन बहुभावादेरेव गौणत्वापत्तेः। गौणसङ्कल्पेन सृष्टेः क्वाप्यदर्शनेन सङ्कल्पस्य गौणत्वे सृष्ट्यर्थत्वस्यैवायोगाच्च। द्वितीयतृतीयौ तु पूर्वपक्षौ प्रकृत्यधिकरणे

प्रकाशः

स्यां प्रजायेयेति तत्तेजोऽसृजत" इति श्रवणादिति भावः। एतेन "पूर्वाधिकरणे चरमस्य द्रष्टृत्वादेर्मुख्यत्वाय" इत्यादिनोक्तपूर्वसिद्धान्तन्यायेन पूर्वपक्षोक्तिरपि प्रत्युक्ता। अत्रैव पूर्वत्र सन्देशाभावेन द्रष्टृत्वादेर्मुख्यत्वसम्भवेनास्य पूर्ववैषम्यात्। ननु बहुभावस्य सन्दष्टत्वेऽपि न्यायान्तरेणेक्षणं गौणं स्यादित्याशङ्क्याह—**न चेति**। "तदैक्षत" इत्यस्य सङ्कल्परूपत्वात् 'सङ्कल्पस्य' इत्युक्तम्। **गुणे त्विति**। नवमे तृतीयपादे "विप्रतिपत्तौ विकल्पस्स्यात्समत्वात् गुणे त्वन्यायकल्पनैकदेशत्वात्" इति जैमिनीयसूत्रोक्तन्यायेनेत्यर्थः। विवृतश्चायं न्यायो गुहाधिकरणे। 'बहुभावादेः' इत्यादिपदेन प्रजननं गृह्यते। कथमेतावतेक्षणस्यागौणत्वमित्यत आह—**गौणेति**। एवं टीकोक्तविवरणेनाद्यपक्षं निरस्येक्षणादिकमतात्त्विकमिति पक्षं तात्त्विकमेवेति पक्षं चान्यत्रोक्तदोषेण निराह—**द्वितीयेति**।

यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना मृषा।
दृश्यते मन्ददृष्टैश्चैव स सर्ग इति कथ्यते॥

प्रकाशः

सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा ।
ब्रह्मणश्चेत्क सार्वज्ञ्यमन्यगा चेत्स्वतोऽन्यता ॥

इत्यादिना ब्रह्मविवर्तमतस्य,

न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ।
अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः ॥

इत्यादिना विकारमतस्यानुव्याख्यानसुधयोः निरासात् दृष्टान्तस्यैवासम्मत्या निरस्तावित्यर्थः । यद्वा—तत्र हि ब्रह्मणो विवर्तत्वं प्रपञ्चस्य, तद्घटकाज्ञानस्य ब्रह्माश्रितत्वादिविकल्पानुपपत्तेस्सत्यत्वग्राहिप्रत्यक्षादिविरोधाच्च निराक्रियते । ब्रह्मविकारत्वं च निर्विकारश्रुत्यादिनाऽपाक्रियते । प्रधानस्यैवंविधत्वं वदता पूर्वपक्षिणा तु ब्रह्मस्थाने प्रधानमेवाभिषिक्तमिति तत्रोक्ताः दोषाः सर्वे प्रधानेऽपि तुल्या इति "न्यायेन निरस्तौ" इत्युक्तम् । तथा हि—ब्रह्मणस्सर्वज्ञत्वेन तदाश्रितस्य वा, जीवस्याज्ञानकल्पितत्वेनान्योन्याश्रयापत्त्या जीवाश्रितस्य वा अज्ञानस्यासम्भवेन ब्रह्मण्यज्ञानाधीनतात्त्विकजगद्रूपतावभासस्य, विशिष्टोपादानमते विशेष्यस्य ब्रह्मत्वेऽपि अविकारित्वेन, विशेषणस्य विकारित्वेऽप्यब्रह्मत्वेन ब्रह्मणस्तात्त्विकजगदाकारपरिणामलक्षणविकारस्यानुपपत्तेरित्यादिना तन्मतद्वयं निरस्यते । तथा च प्रधानस्यैव ब्रह्मसार्वज्ञ्यादिश्रुतिविषयत्वस्य वक्तव्यत्वात्तत्राप्यज्ञाननिबन्धनस्यैवारोपस्य वाच्यत्वादुक्तदोषाः योज्या इति । जाड्ये

चन्द्रिका

अनुव्याख्यानाद्युक्तेन विवर्तविशिष्टमतनिरासकन्यायेन निरस्तौ । चतुर्थोऽप्ययुक्तः, यतः,

विचित्रशक्तियोगित्वविरुद्धगुणभागिते ।
श्रूयेते ब्रह्मणो यद्वन्न तथा प्रकृतेः क्वचित् ॥

न हि मानं विना दृष्टान्तमात्रेण मेयासिद्धिः । पञ्चमोऽप्ययुक्तः,

प्रकाशः

क्षणादेः प्राधानेऽप्यविरोधोऽस्त्विति पक्षं दृष्टान्तवैषम्योक्त्या निराह—**चतुर्थोऽपीति**। 'यतः' इत्यस्य श्लोकेनान्वयः ।

विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशास्स्युः । "अणोरणीयान्महतो महीयान्" इत्यादिना श्रूयेते । न चैवं प्रकृते, "तदैक्षत" इत्यादिश्रुतिस्तूक्तदिशा ब्रह्मपरेति श्रौतत्वादिप्रागुक्तो हेतुरसिद्ध इति भावः। अयं च समाधिः,

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः ।
दोषाः श्रुताश्च नेत्याद्याः प्रमाणं श्रुतिरत्र च ॥

इत्यक्षरनयानुभाष्ये अस्थूलत्वादिविरुद्धधर्मवत्त्वे प्रमाणोक्त्या सूचितः। विपक्षे व्याघातसूचनाय 'मानं विना मेयासिद्धिः' इति मानमेयपदोक्तिः। अंशविभागेन उभयोपादानमप्ययुक्तमित्याह—**पञ्चमोऽपीति**। अत्र यद्यपि—

भागेन परिणामश्चेत् भागयोर्भेद एव हि ।
यो भागो न विकारी स्यात् स एवास्माकमीश्वरः ॥

चन्द्रिका

उक्तप्रकारेणाक्लिष्टे ब्रह्मपक्षे सम्भवति, एकस्य चेतनरूपांशस्येक्षितृत्वादि, अन्यस्य त्वचेतनरूपांशस्योपादानत्वादि, अंशिनस्तु सतो न किमपीत्यस्यातिक्लिष्टस्य कल्पनायोगात्। सूत्रे कर्मपदं तु, सिद्धान्तेऽपि 'ऐक्षत' इतीक्षणकर्तृत्वव्यपदेशो न युक्तः स्वरूपातिरिक्तेक्षणाक्रियाभावादिति शङ्कायां, विशेषबलात् क्रियाकर्तृभाव इति दर्शयितुम्। एतदेवाभिप्रेत्य टीकायां "ईक्षत्याख्यव्यापार" इत्युक्तम्। यद्वा—सौत्रः

प्रकाशः

इत्याद्युत्तरपादीयानुव्याख्यानोक्तन्यायेन तन्निरासोऽपि प्रतीयते। तथाऽपि दोषान्तरोक्तिरियमिति। एतेन भाष्यकारीयफलाक्षेपोऽपि समाहितो ध्येयः। नन्वत्र सूत्रे "ईक्षतेर्नाशब्दम्" इत्यत्रेव 'ईक्षतेः सः', इति वा, 'ईक्षतिव्यपदेशात्सः' इति वा वक्तव्यं, लाघवात्, न तु कर्मेति, व्यर्थत्वात्। न च परमत इव ईक्षतिं प्रति कर्मत्वरूपोऽर्थोऽभ्युपेयते। किञ्चाऽऽध्यायपरिसमाप्ति समन्वयसूत्रात् 'तत्तु' इत्यस्य साध्यनिर्देशस्यानुवर्तमानत्वात् 'सः' इत्यपि व्यर्थम्। न च 'सः' इत्येतद्धर्मिनिर्देशपरमेव न साध्यनिर्देशपरमिति वाच्यं, सदित्यस्यैव धर्मित्वेनेक्षतिकर्मव्यपदेशात्सदितिनिर्देशापातात्। "स एवेश्वरः सच्छब्दोक्तो न प्रधानं" इति तत्त्वप्रदीपविरोधाच्चेत्यतः कर्मपदसार्थक्यं तावदाह—**कर्मपदं त्विति**।'—"तत्तेजोऽसृजत" इति तत्पूर्वककर्मव्यपदेशात् "नामरूपे व्यकरवाणि" इत्यादिना चेक्षतिपूर्वव्याकरणादिकर्मव्यपदेशात्स एवेश्वरः सच्छब्दोक्तः' इत्यादितत्त्वप्रदीपानुरोधात्पक्षान्तरमाह—**यद्वेति**।

चन्द्रिका

कर्मशब्दः "न कर्तृत्वं न कर्माणि" इत्यादाविव सृष्ट्यादिक्रियापरः। तथा च प्रधानपक्षे न केवलमीक्षितृत्वस्यायोगः, किन्तु स्रष्टृत्वादेरपीति दर्शयितुम्। यद्यप्यत्र सूत्रान्तर इव समन्वयसूत्रस्थो ब्रह्मपरः तच्छब्दोऽनुषङ्गार्हः, तथाऽपि "एको नारायण आसीत्" "स मुनिर्भूत्वा समचिन्तयत्" इत्यादिश्रुतिषु यः कारणत्वेन निर्णीतः, स एवात्राप्युच्यत इति समाख्यानमपि प्रमाणीकर्तुं 'सः' इत्युक्तम्। अत्र सूत्रे समन्वेतव्यविशेषानुक्तिस्तु हेत्वनुसारेण समन्वेतव्यविशेष ऊह्य इति शिष्यशिक्षार्थं वा, "सदेव सोम्येदमग्र" "सोऽकामयत, बहु स्याम्" इत्यादिभिन्नसृष्टिप्रकरणस्थनानाशब्दा इह तुल्यवत् सम-

प्रकाशः

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।

इति गीतायां कर्मपदस्य "क्रियायामदृष्टोत्पादने फले च स्वातन्त्र्यं लोकस्य न सृजतीश्वरः" इत्यदृष्टोत्पादनादिपरत्वेन गीतातात्पर्ये भगवत्पादैर्व्याख्यानादिति भावः। एतेन ब्रह्मधर्मेक्षणकर्मसन्दष्टो बहुभावोऽपि ब्रह्मण्येव कथञ्चिन्नेय इति सूचितमिति ततोऽपि कर्मपदसार्थक्यं ध्येयम्। 'सः' इत्येतदाक्षिप्य समाधत्ते—**यद्यपीति**। एतेन यदुक्तं श्रुतप्रकाशे—"अत्र स इत्युक्तिः अस्मिन् पादे सर्वाधिकरणे साध्यप्रतिज्ञानुवृत्त्यर्था, यथाऽऽद्यपादे "भेदव्यपदेशाच्चान्यः" इति अन्यशब्दोक्तिः, द्वितीये "अत एव च स ब्रह्म" इति ब्रह्मशब्दोक्तिः, चतुर्थे पादे च "वदतीति चेन्न प्राज्ञो हि" इति प्राज्ञशब्दोक्तिरिति,

चन्द्रिका

न्वेतव्याः, न तु शब्दविशेष इति प्रदर्शनार्थं वा, अल्पाक्षरे सूत्रे निर्देशानर्हानेकप्रकरणात्मक "सदेव" इत्यादिस्थानस्य समन्वेतव्यत्वप्रदर्शनार्थंवेति द्रष्टव्यम्। अथवा—"आनन्दमयोऽभ्यासात्" इत्यादौ हेतुविशेषानुक्तेः समन्वेतव्यविशेषोक्तिः, अत्र त्वीक्षणरूपहेतुविशेषोक्त्या तद्युक्तशब्दस्य समन्वेतव्यत्वसिद्धेस्तदनुक्तिः। यद्वा—"स ईक्षां चक्रे" "सोऽकामयत" इत्यादौ 'सः' इत्यस्य समन्वेतव्यत्वात् 'सः' इत्यनेन ब्रह्मपरेणापि तन्त्रेणाऽऽवृत्त्या वा एकदेशकीर्तनमुखेन समन्वेतव्यस्याप्युक्तिरिति॥

अन्ये तु "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुष-

प्रकाशः

तन्निरस्तम्, समन्वयसूत्रस्थतत्पदस्यैव समन्वयपराधिकरणेष्वादितः सर्वत्रानुवृत्तिसम्भवे प्रातिपादं तदुक्तिवैयर्थ्यात्। पादेष्वादावेव साध्यनिर्देशकस्य वक्तव्यत्वेन मध्ये निर्देशायोगात्। ब्रह्मादिपदेनैव साध्यनिर्देशौचित्येन अन्यशब्देन तन्निर्देशायोगाच्च। प्रथमपादेऽन्यशब्दस्य, अत्र 'सः' इति तच्छब्दस्य च कृत्यान्तरसद्भावाच्च। "अत एव च स ब्रह्म" इति सूत्रस्यासाम्प्रदायिकत्वेन प्रक्षिप्तत्वाच्चेति।

**एकदेशेति।** समन्वेतव्यसदादिनानाशब्देष्वेकदेशभूततच्छब्दकीर्तनमुखेनेत्यर्थः। यद्वा—समन्वेतव्यसृष्टिस्थानैकदेशभूततच्छब्दकीर्तनमुखेन स्थानरूपसमन्वेतव्यस्याप्युक्तिरित्यर्थः॥

**अन्ये त्विति।** "—"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्का-

चन्द्रिका

मभिध्यायीत" इत्यस्मिन्वाक्येऽभिध्यातव्यत्वेनोक्तं वस्तु हिरण्यगर्भाख्यमपरं ब्रह्मैव, "स सामभिरुन्नीयते ब्रह्मलोकम्" इति तद्विदो देशपरिच्छिन्नफलोक्तेः। नहि परब्रह्मविदः फलं देशपरिच्छिन्नमिति प्राप्ते, इदं वस्तु परब्रह्मैव "परात्परं पुरिशयं पुरुषमीक्षते" इत्युत्तरवाक्ये अस्यैवेक्षणकर्मत्वोक्तेः। ईक्षणं हि परमार्थसत्कर्मकम्। न च ब्रह्मणोऽन्यत्परमार्थसदस्ति। न चेक्षणीयस्य परब्रह्मत्वेऽभिध्यातव्यमपरं ब्रह्मेति युक्तं, ईक्षणध्यानयोरेकविषयत्वात्। तदुक्तं भामत्यां—

प्रकाशः

रस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति" इति प्रक्रम्य* श्रूयते, "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति" इत्यादियथाश्रुतपरभाष्योक्तविषयवाक्यपूर्वपक्षाद्यनुवदति—**अभिध्यातव्यत्वेनेति**। "कार्यब्रह्म हिरण्यगर्भ एव" इति कल्पतरूक्तेः 'हिरण्यगर्भाख्य' इत्यनुवादः। **तद्विद इति**। "तस्माद्विद्वान्" इत्युक्ताभिध्यातव्यवस्तुज्ञानिन इत्यर्थः। ईक्षणध्यानयोरेकविषयत्वादिति भावः। **न हीति**। "—"ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः, सर्वगतपरब्रह्मवेदने तद्भावापत्तौ "सामभिरुन्नीयते ब्रह्मलोकं" इति न देशविशेषप्राप्तिरुपपद्यते" इति भामत्युक्तेरिति भावः। **ईक्षणं हीति**। न च स्वप्नादौ व्यभिचारिणेक्षणस्य तत्त्वविषयत्वनियमाभाव इति वाच्यं, उत्सर्गतस्तत्त्वविषयकत्वादिह चापवादकाभावात् सत्कर्मकमेवेत्यर्थः। **तदुक्तमिति**। यद्यप्ययमर्थो भाष्येऽपि व्यक्तः, तथाऽपि तदर्थसङ्ग्राहकत्वात्

* 'इति प्रकृत्य' इति मुद्रित पुस्तकपाठः.

चन्द्रिका

ईक्षणध्यानयोरेकः कार्यकारणभूतयोः ।
अर्थ औत्सर्गिकं तत्त्वविषयत्वं तथेक्षतेः ॥

प्रकाशः

संग्रहेण तद्दर्शयितुं भामत्यामित्युक्तम् । यद्वा—

कार्यं ब्रह्म जनप्राप्तिफलत्वादर्थभेदतः ।
दर्शनध्यानयोर्ध्येयमपरं ब्रह्म गम्यते ॥

इति पूर्वपक्षकारिकायां 'अर्थभेदतः' इत्यनेन ईक्षणध्यानयोर्भिन्नविषयत्वमुपेत्यापि भामत्यां पूर्वपक्षितत्वात्, सिद्धान्ते तेनैव भामतीकृता तयोरेकविषयत्वमुक्तं प्रदर्शयितुं भामत्यामित्युक्तम्। **एक इति**। 'एकोऽर्थः' इत्यन्वयः। स्वप्नादौ व्यभिचारादाह—**औत्सर्गिकमिति**। 'ईक्षतेः' ईक्षणस्य तत्त्वविषयत्वमौत्सर्गिकम्। न चेहापवादः कश्चिदिति भावः। ननु कथमत्रेक्षणध्यानयोरेकविषयत्वं, येनेक्षणवद्ध्यानस्यापि परमार्थभूतं ब्रह्मैव विषयः स्यात्। ध्यानस्य परमपुरुषविषयत्वात्, ईक्षणस्य परात्परपुरुषविषयत्वादिति चेन्न, "एतस्माज्जीवघनात्परात्परम्" इति प्रकृतापेक्षैतच्छब्दसमभिव्याहारावगतैकवाक्यतानुगृहीतेन "पुरुषमभिध्यायीत, पुरुषमीक्षते" इति पुरुषप्रत्यभिज्ञानेन तयोरेकविषयत्वावगमात्। न च 'परं' 'परात्परं' इति च रूपभेदानुपपत्तिः, प्रतीतैकवाक्यतानुसारेण 'जीवघनात्परात्' इति जीवघनशब्दस्य हिरण्यगर्भब्रह्मलोकान्यतरविषयत्वेन ध्यातव्यपुरुषविषयत्वाभावात्। नन्वथापि ध्यानस्योपाधिविशिष्टविषयत्वात् कथं शुद्धविषयेक्षणैकार्थत्वमिति चेन्न, 'उपाधेः कल्पितत्वेन विशेष्यस्य शुद्धत्वात्' इति तद्भाष्याद्युक्तम-

चन्द्रिका

इति। निरुपाधिकब्रह्मज्ञानस्यैव चापरिच्छिन्नफलकत्वात्, इह च त्रिमात्रोङ्काररूपोपाधिमत्त्वात् फलस्य परिच्छिन्नता युक्तेति सिद्धान्त इत्याहुः। तन्न, सूत्रे कर्मशब्दस्य भावप्रधानताया आश्रयणीयत्वात्। निरवकाशे प्रथमे च परात्परत्वे ब्रह्मलिङ्गे सति तत्त्यागेन सूत्रे चरमसावकाशेक्षतिकर्मत्वोक्त्ययोगाच्च। त्वन्मते ईक्षणकर्मणो मिथ्यात्वनियमेनेक्षणकर्मत्वस्य परमार्थसद्ब्रह्मत्वे हेतुत्वायोगाच्च। किञ्च ध्यानस्य परमार्थसद्विषयेक्षणैकविषयत्वाय निरुपाधिकब्रह्मविषयतायाः, परिच्छिन्नफलत्वाय चोङ्कारोपाधिकविषयतायाश्च त्वयैवोक्तत्वात् व्याघातः। अपि च ओङ्कारोपाधिकध्यानफलस्य परिच्छिन्नत्वोक्तिरयुक्ता, "ओङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च" इति वाक्यशेषे तस्यापरिच्छिन्नत्वोक्तेः। किञ्च—

ईक्षणस्यानुसारेण ध्यानं सद्विषयं यदि।

प्रकाशः

नुसन्धेयमिति भावः। नन्विह दर्शनस्य तत्त्वविषयत्वत्यागे परिच्छिन्नफलश्रवणमेव बाधकमित्यत आह—निरुपाधिकेति। नेदमुदाहरणं युक्तं, सूत्राक्षरासामञ्जस्यादिदोषप्राप्तेरिति दूषयति—तन्नेति। विरुद्धोऽयं हेतुरित्याह—त्वन्मत इति। निरुपाधिकेति। अन्यथा परमार्थसद्विषयेक्षणैकार्थत्वं न स्यादिति भावः। 'आयतनेन' आयतनसाधनेन, आयतनसाधनमोङ्कारं मात्रात्रयात्मकं सम्यक् ज्ञात्वेति यावत्।

### चन्द्रिका

तर्हि ध्यानानुसारेणास्त्वीक्षणं कल्पितार्थकम् ॥

त्वन्मते "योषितमग्निं ध्यायीत" इत्यादौ ध्यानस्यारोपितविषयताया: क्लृप्तत्वात् । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "यदा-पश्यः पश्यते रुग्मवर्णम्" इत्यादावीक्षणस्याप्यतत्त्वविषयत्वाच्च। व्याव-हारिकविषयता तु हिरण्यगर्भविषयत्वेऽपि युक्ता । अत्रापि परमते "ईक्षतिकर्म" इति सूत्रेण जीवेशयोः कर्तृकर्मभावेन भेदोक्तेः, ब्रह्मणो दृश्यत्वोक्तेश्च परमतप्रतिकूलता व्यक्तैव ।

के चित्तु—"पुरुषमीक्षते" इत्युक्तमीक्षतिकर्म सः परमात्मैव, व्यप-देशादिति सूत्रार्थः । यद्यपीक्षतिवाक्ये परात्परत्वादीनां "यथा पादो दरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः" इति पूर्व-

### प्रकाशः

"पूर्वान्तवत्स्वरः सन्धौ" इत्यादेः "ध्यानानुसारेणास्त्वक्षिणं" इत्यत्र न यतिभङ्गः शङ्कनीयः। वैपरीत्ये को हेतुरित्यत आह—**त्वन्मत इति**। ननु तत्रापि न प्रातिभासिकविषयत्वं, किन्तु व्यावहारिकविषय त्वमेवेत्यतस्तर्हीहापि तथात्वापत्त्या न सिद्धान्तोत्थितिरित्याह—**व्याव-हारिकेति** । **दृश्यत्वेति**। अनेन च अवेद्यत्वाङ्गीकारादिति भावः ॥

**के चित्त्विति** । 'सः' इत्यनूद्य परमात्मेति व्याख्यातम् । **व्यपदे-शादिति** । ईक्षतिकर्मविषयतयोदाहृतश्लोके "एतदमृतमभयमेतद्ब्रह्म" इत्यादिभ्यः परमात्मन एव व्यपदेशादित्यर्थः । पूर्वपक्षेऽपि दूष्यांश-मात्रमनुवदति—**यद्यपीत्यादिना** ।

चन्द्रिका

वाक्ये तद्विदः पापालेपादीनां, उत्तरवाक्ये च अमृतत्वाभयत्वादीनां ब्रह्मधर्माणां स्फुटत्वेन पूर्वपक्षानुदयः। तथाऽपि "सोऽन्तरिक्षं यजुर्भिः" इति प्राकृतान्तरिक्षलोकसन्निधानात्, "स सामभिरुन्नीयते ब्रह्मलोकम्" इत्युक्तस्य ब्रह्मलोकस्य चतुर्मुखलोकत्वशङ्कया

प्रकाशः

**सन्निधानादिति।** सन्निधानेन लिङ्गानामन्यथा नयनमिति भावः। एवं हि तेषामधिकरणं---प्रागुदाहृते वाक्ये ईक्षतिकर्मणः परमात्मत्वं व्यवस्थाप्य, ध्यायतेस्ततो भिन्नविषयतया पूर्वपक्षं कृत्वा, एकविषयत्वेन अद्वैतिभिः सिद्धान्तः कृतः। स न युक्तः, ध्यानेक्षणयोर्हेतुहेतुमद्भावापन्नयोरेकविषयत्वावश्यम्भावादिति परमतं निरस्यैकविषयतामुपेत्य, ध्यानेक्षणविषयः किं चतुर्मुखः परमात्मा वेति सन्दिह्य, पूर्वत्र मनुष्यलोकान्तरिक्षलोकौ क्रमेणैकमात्रद्विमात्रप्रणवोपासनाफलत्वेनोक्त्वा, अनन्तरं त्रिमात्रप्रणवोपासनाफलत्वेनोच्यमानब्रह्मलोकस्थपुरुषेक्षणकर्मभूतः पुरुषो हिरण्यगर्भ एव, मनुष्यलोकादिसान्निध्येन ब्रह्मलोकस्य हिरण्यगर्भलोकत्वनिश्चयात्, सन्निधानेन ब्रह्मलिङ्गानां बाधादिति प्राप्ते, ईक्षतिकर्मतया निर्दिष्टपुरुषविषये "तमोङ्कारेणायतनेनान्वेति विद्वान्" इति श्लोके निरुपाधिकशान्तत्वामृतत्वादिव्यपदेशात् परमात्मैवायं परमपुरुषः। एवं परमात्मत्वेऽवगते ब्रह्मलोकशब्दोऽपि तत्स्थानस्यैव वाचको भवति। तद्विषये "यत्कवयो वेदयन्ते" इति श्लोके सूरिभिर्दृश्य-

चन्द्रिका

तदुदय इत्याहुः । तन्न, "तद्धर्मोपदेशात्" "भेदव्यपदेशात्" इत्यादाविव सिद्धान्तसाधकार्थविशेषघटितस्यैव व्यपदेशस्य हेतूकर्तव्यत्वात् । त्वद्रीत्या एतच्छास्त्रस्य पूर्वभागे पूर्वतन्त्रएव "आनन्तर्यमचोदना" इत्यत्र लिङ्गादिभ्यः सन्निधानदौर्बल्यस्योक्ततया पुनरिह तत्प्राबल्यशङ्कानुदयाच्च ।

प्रकाशः

त्ववचनं च तदेव दृढयतीति सिद्धान्त इति । उक्तं च—

> नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्ष-
> प्रत्यासत्त्या निवासः सरसिजवसतेः ब्रह्मलोकोऽस्तु मैवम् ।
> पापोन्मुक्तेन लभ्यो ह्ययमिह कथितः सूर्यसम्पत्तिपूर्वः
> सोढव्यो मर्त्यलोकैर्व्यवधिरिति समस्तत्समाधानमार्गः ॥

इति सूत्रार्थं तावन्निराह—तद्धर्मेति ! ईक्षतिरूपकर्मणो व्यपदेशादित्यस्मत्सिद्धान्त इव समस्तमेवेक्षतिकर्मपदं व्याख्येयं, न तु विभज्येति भावः । नन्वेवं सूत्रे धर्मिनिर्देशाभावात् न्यूनतादोषः, "अत्र सूत्रे समन्वेतव्यविशेषानुक्तिस्तु" इत्यादिना चन्द्रिकायामेव प्रागस्य दोषस्य समाधानादिति भावः । पूर्वपक्षानुदयेन अधिकरणशरीरं च निरस्यति—त्वद्रीत्येति । 'विंशतिलक्षणमेकं शास्त्रं' इति त्वद्रीत्येत्यर्थः । तृतीयेऽध्याये "आनन्तर्यमचोदना" इत्याद्यपादीयचतुर्दशेऽधिकरणे ज्योतिष्टोमगतं "मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयति" इति वाक्यमुदाहृत्य मुष्टीकरणवाग्यमने मनःप्रणिधानद्वारा करिष्यमाण

चन्द्रिका

टीकाक्षरार्थस्तु—"**सोमो वै राजा गन्धर्वेष्वासीत्**" **इत्यादिवदिति** । यथा "सोमो वै राजा गन्धर्वेष्वासीत्तं देवाश्च ऋषयश्चाभ्यध्यायन्" इत्यादौ सोमलताभिमानिचेतनविवक्षया 'गन्धर्वेष्वासीत्' इति व्यपदेशः, तथाऽत्रापि प्रधानाभिमानिचेतनविवक्षयेक्षितृत्वव्यपदेश इति ॥

प्रकाशः

सर्वकर्माङ्गं, उतानन्तरस्य दीक्षितावेदनस्येति संशये, आनन्तर्यादेकवाक्यत्वादवान्तरप्रकरणाद्वा दीक्षितावेदनमात्राङ्गमिति प्राप्ते, लिङ्गप्रकरणाभ्यां सर्वार्थत्वावगमात्सन्निधानात्प्रबलेन सामर्थ्यरूपलिङ्गेन करिष्यमाणसर्वकर्माङ्गमिति सिद्धान्तितमिति सन्निधेर्दौर्बल्यं सिद्धमित्यर्थः। एतेन, इदं वाक्यं ब्रह्मपरतया यत्र क्व च निर्णेयत्वादधिकरणान्तरस्य च एतन्निर्णायकस्य अदर्शनात् अत्रैव निर्णेयमिति निरस्तम्, ब्रह्मलिङ्गादिबाहुल्येन सन्निधिबाधसम्भवेन संशयस्यैवानुदयादिति । एतेन, रामानुजरीतिमनुसृत्य पूर्वोत्तरपक्षौ सूत्रार्थं च वर्णयतः कस्य चिच्छैवस्य मतमपि प्रत्युक्तं बोध्यम् । विषयवाक्यस्थब्रह्मात्मपुरुषादिशब्दानां तत्र तत्र भाष्यादौ पूर्वत्रास्माभिश्च विष्ण्वेकनिष्ठतायाः दर्शितत्वेन शिव इति सिद्धान्तस्य अतितुच्छत्वादिति ॥

इति सदधिकरणम्.

# — अथ दहराधिकरणम् —

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् । तच्च "अथ यदिद-मस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म । दहरोऽस्मिन्नन्तर आकाशः । किं तदत्र विद्यते ।

उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते ।

उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ।

विद्युन्नक्षत्राणि" इत्यादिनाऽऽकाशस्य प्रतीयते ।

तत्त्वप्रकाशः

अत्र "यो वेद निहितं गुहायाम्" "तस्यान्ते सुषिरं सूक्ष्मम्" "हृदि ह्येष आत्मा" इत्यादिश्रुतिभिः ब्रह्माकाशजीवेषु साधार-णस्य हृत्पद्मस्थत्वलिङ्गस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रा-दिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं सूचयति—चन्द्रेति । "एतस्य वा अक्षरस्य" इत्यादिना विष्णोश्चन्द्रादित्याद्याधारत्वमुक्तम् । तच्छ-न्दोगश्रुतौ हृत्पद्मस्थस्योच्यते, "एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म । दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्, त-द्वाव विजिज्ञासितव्यमिति । तं चेद्ब्रूयुः किं तदत्र विद्यते यदन्वे-ष्टव्यम्, यद्वाव विजिज्ञासितव्यमिति । स ब्रूयाद्यावान्वा अयमाकाश-स्तावानेषोऽन्तर्हृदय आकाशः । उभे अस्मिन् द्यावापृथिवी" इत्या-

**स चाऽऽकाशो न विष्णुः,**

**तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ।**

तत्त्वप्रकाशः

दिना । तस्य च विष्णोरन्यत्वेऽक्षरस्य विष्णुत्वसाधकसर्वाधारत्वं चान्यस्य प्रसज्येत इत्यवश्यं निर्णेयता । तद्धृदयपद्मस्थत्वं विषयः । किं विष्णोरथाकाशस्योत जीवस्येति संशयः । उक्तसाधारण्यं सन्देहबीजम् । सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्येति तावत्पूर्वः पक्षः, "दहरोऽस्मिन्नन्तर आकाशः" इति हृत्पद्मे दहराकाशस्थितिश्रवणात्, तस्यैव "उभे अस्मिन्" इति सर्वधारत्वोक्तेरित्यर्थः । नन्वस्त्वाकाशस्य सर्वाधारतया हृदयपद्मस्थत्वम् । तस्य च "आकाशस्तल्लिङ्गात्" इति न्यायेन विष्णुत्वे, तस्यैव हृत्पद्मत्वसिद्धिरित्यत आह—**स चेति** । नात्रोक्ताकाशो विष्णुः, "तस्यान्ते सुषिरं" इति प्रसिद्धाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वोक्तेः, तत्समाख्यानादित्यर्थः । न च वाच्यमस्त्वाकाशशब्देन सुषिरमेव, "तस्मिन्यदन्तः" इति हृत्पद्मस्थाकाशगतो विष्णुः सर्वाधारतयोच्यत इति, तथा सति वाक्यान्वयानुपपत्तेः । तथा हि—"तस्मिन्" इत्यत्र विष्णुत्वाभिप्राये "किं तदत्र विद्यते" इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना "यावान्वै" इत्यादेरभिप्रायासङ्गतिः । आकाशपक्षे त्वस्त्यन्वयः, हृदयाकाशस्थमुपास्यमित्युक्ते, किं तत्र स्थितमिति प्रश्ने, "यावान्वा अयमाकाशः" इति प्रागुक्ताकाशमेव विशि-

इति श्रुतेरिति। अत आह—

## ओम् दहर उत्तरेभ्यः ओम् ॥ १४ ॥

"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव। "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति

तत्त्वप्रकाशः

ष्य "उभे अस्मिन्" इत्यादिपरिहारसंश्लेषात्। न च "यावान्" इत्यादिनाऽऽकाशाख्यो विष्णुस्सर्वाधारतया परिहारे कथ्यत इत्यन्वयोपपत्तिः, "तस्मिन् सर्वं प्रतिष्ठितम्" इति साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तिविरोधात्। तस्मादाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वम्। जीवस्य वैतद्भवेत्, उत्तरत्र "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच" इति जीवस्य "य आत्माऽपहतपाप्मा" इत्युक्तहृत्पद्मस्थात्मतया परामर्शात्। दहरस्थत्वलिङ्गाच्च। तद्ध्यणोर्जीवस्यैव युक्तम्, न सर्वगतस्य हरेः। न चान्वयाभावदोषः, विष्णुपक्षेऽपि साम्यात्। अतो भगवदितरदेव चन्द्रादित्याद्याधाराक्षरमिति। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति। दहरपद्मस्थो विष्णुरेव भवेत्, "य आत्माऽपहतपाप्मा" इत्यादिनोत्तरवाक्ये हृत्पद्मस्थस्यापहतपाप्मत्वादिगुणश्रवणादिति भावः। अपहतपाप्मत्वादिकं कथं विष्णुत्वनिश्चायकमित्यत आह—य इति।

स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिना विष्णोरेव हि ते गुणाः ।

> नित्यतीर्णाशनायादिरेक एव हरिस्स्वतः ।
> अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि ॥

इति च पाद्मे । सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् ।

> सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् ।
> सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता ।

इति स्कान्दे ॥ १४ ॥

तत्त्वप्रकाशः

'अत्येति' अतिक्रम्य वर्तते । न चाकाशस्यापि पापाद्यभावेनैते गुणा युक्ता इति वाच्यम्, तस्याचेतनस्य तत्प्राप्त्यभावेन निषेधायोगात् । विष्णोश्चेतनत्वादस्ति प्राप्तिः । सत्यकामत्वाद्ययोगाच्च । तथाऽपि नैते गुणा विष्णोरेव, रमादिष्वपि सम्भवादित्यत आह— **नित्येति** । ननु यथाकथञ्चिदपि तेऽन्यत्र गुणास्सन्त्येव । अतः कथं तैर्विष्णुत्वनिश्चय इत्यत आह—**सापेक्षेति** । अपहतपाप्मत्वादीनां कथञ्चिदन्यत्र वृत्तावपि न कथञ्चिदन्यत्र सत्यकामत्वादीत्याशयेनाह—**सत्यकामइति** । अनेनाकाशाभिमानिविषयतयाऽपहतपाप्मत्वाद्युपपत्तिरिति परास्तम् ॥ १४ ॥

युक्त्यन्तरेण हृत्पद्मस्थत्वं विष्णोः प्रतिपादयत्सूत्रमुपन्यस्य

**ओम् गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ओम् ॥ १५ ॥**

"अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते। "सता सोम्य तदा सम्पन्नो भवति" इति श्रुतेः तं हि सुप्तो गच्छति। "अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके" इति लिङ्गं च तथा दृष्टम्।

अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ।

तत्त्वप्रकाशः

व्याचष्टे—**गतीति**। अत्र हृत्पद्मस्थस्य "अहरहर्गच्छन्त्य एतं" इति सुप्तप्रजाप्राप्यत्वव्यपदेशात्, हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या तदन्तर्गते ब्रह्मशब्दश्रवणाच्च विष्णुरेवायमित्यर्थः। ब्रह्मैव सर्वाश्रयत्वादिना लोकपदोक्तं वा। सुप्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह—**सतेति**। 'सम्पन्नः' सङ्गतः। ब्रह्मशब्दस्तु विष्ण्वेकपर इति प्रागेवोक्तम्। किञ्च हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्त्वलिङ्गश्रवणाच्च तदन्तर्गतो विष्णुरिति सूत्रशेषं व्याचष्टे—**अरश्चेति**। हृत्पद्मस्थस्यारण्याश्रयलोकवत्त्वलिङ्गश्रवणेऽपि कुतोऽयं विष्णुरिति चेत्, तस्य च विष्णुलोकैकलिङ्गत्वादिति हिशब्दाभिप्रायमाह—**अरश्चेति**। अनेनारण्याश्रयत्वं सत्यलोकलिङ्गमित्यप्यपास्तम्, "क्षीराब्धिमध्ये" इति तत्प्रसङ्गात्। अरण्याश्रयलोकवत्त्वं हृत्पद्मस्थस्य नोच्यत इति शङ्कापनोदाय—**तथेत्युक्तम्**।

इत्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥ १५ ॥

**ओम् धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ओम् ॥१६॥**

"एष सेतुर्विधृतिः" इति धृतेः ।

तत्त्वप्रकाशः

यथा "अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इत्येतत् हृत्पद्मस्थविषयं तथैतदपि लिङ्गं तन्निष्ठम्, ब्रह्मलोकशब्दश्रवणादेवेति भावः । अथ वा—'ब्रह्मलोकं' इति हृत्पद्मस्य विष्णुलोकत्वोक्तेस्तदन्तर्गतो विष्णुरित्युक्तम् । ब्रह्मलोकपदं कुतो विष्णुलोकवाचीत्यत आह—**अरश्चेति** । ब्रह्मलोकपदस्य विष्णुलोके "अरश्च" इति प्रयोगात् अत्रापि तत्परत्वमेव । तत्रापि तत्कुतः, अरण्याश्रयत्वलिङ्गादित्यर्थः । तस्य भगवल्लोकलिङ्गत्वं कुत इत्यत आह—**अरश्चेति** ॥ १५ ॥

**हेत्वन्तरेण** विष्णोर्हृत्पद्मस्थत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे—**धृतेश्चेति** । "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" इति हृत्पद्मस्थस्य सर्वाधारत्वश्रवणाच्च विष्णुरेवासावित्यर्थः । अत्र "स सेतुः" इति वक्तव्ये "एष सेतुः" इत्युक्तिः शाखान्तराणामप्यत्रोपसङ्ग्रहार्थम् । एवमन्यत्रापीति सम्प्रदायविदः । विधृतिस्सेतुरिति धारणसमर्थ आश्रयः । न च वाच्यमयं न हृत्पद्मस्थ इति, "य आत्मा" इति प्रागुक्तात्मपरामर्शात् ! "सर्वे पाप्मानोऽतो निवर्तन्ते" इति तल्लक्षणत्वोक्तेश्च । समाख्ययाऽप्येत-

"एष भूताधिपतिरेष भूतपालः" इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः। "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च एतस्य वा अक्षरस्य प्रशासने गार्गि" "स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः" "पतिं विश्वस्यात्मेश्वरं" इत्यादिश्रुतिभ्यस्तस्य ह्येष महिमा।

सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिः।

इति च स्कान्दे ॥ १६ ॥

तत्त्वप्रकाशः

मर्थं साधयति—**एष इति**। वाजसनेयके "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी" इत्याद्युक्त्वा "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इत्यादिना हृदये विष्णोरुक्तत्वेन तत्समाख्यानादत्राप्युक्तो विष्णुरेव। न च वाच्यं समाख्याश्रुत्युक्तोऽपि कुतो विष्णुरिति, अस्मिन् सर्वेश्वरत्वादिविष्णुमहिम्नः श्रवणादेवेति भावः। यदुक्तं हृत्पद्मस्थस्य सर्वाधारत्वश्रवणाद्विष्णुरसाविति, तत्र सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह—**एतस्मिन्निति**। "एतस्य" इति प्रतीकग्रहणेन बहुवाक्यानि सूचयति। ननु समाख्याश्रुत्युक्तः सर्वेश्वरत्वादिमहिमा कुतो विष्णोरित्यत आह—**स हीति**। 'विश्वं' अचेतनम्। विष्णोरिवान्यस्याप्ययं महिमा किं न स्यादित्यत आह—**सर्वेश इति** ॥ १६ ॥

## ओम् प्रसिद्धेश्च ओम् ॥ १७ ॥

"तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्" इति प्रसिद्धेश्च। तदन्तस्स्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥ १७ ॥

तत्त्वप्रकाशः

युक्त्यन्तरेण विष्णोर्हृत्पद्मस्थत्वसाधकं सूत्रं पठित्वा व्याचष्टे— प्रसिद्धेश्चेति।

दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्।
तत्रापि दहरं................................ ॥

इति विष्णोर्हृत्पद्मस्थत्वप्रसिद्धेश्च स एव हृत्पद्मस्थ इत्यर्थः। "दहरोऽस्मिन्नन्तर आकाशः" इति हृत्पद्मस्थाकाशो विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इत्येतदनेनैव निरस्तं भवति। पुण्डरीके दहरं गगनं, तस्मिन्विशोकं ब्रह्मेत्यभ्युपगमात्।

दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः।

"य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषः" इत्यादेश्च। अन्वयाभावस्तर्हि भवेदिति च न वाच्यम्, तथा हि—"तस्मिन्यदन्तः" इत्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युच्यते, ब्रह्मपुरपदेनैव ब्रह्मस्थितिसिद्धेः। तथा च कीदृशं तदिति भावेन "किं तदत्र विद्यते" इति प्रश्ने, तत्स्वरूपनिरूपणपरतया "यावान्वा अयमाकाशः" इत्यादिवाक्यान्वयः। यद्ब्रह्मान्वेष्टव्यतयोक्तं, तस्यान्तर्हृदये यावा-

तत्त्वप्रकाशः

नैष आकाशस्तावान् सर्वोऽपि विद्यते । तदाधारतया पृथिव्यादिकं च समाहितम् । नष्टेऽपि देहे न नश्यति, अपहतपाप्मत्वादिगुणं चेति । अथ वा—हृत्पद्मगताकाशस्थमन्वेष्टव्यमिति सामान्येनोक्ते, "किं तदत्र विद्यते" इति प्रश्ने, यावान् बहिः परमात्माऽऽकाशाख्यस्तिष्ठति, तावान् हृदयपद्माकाशे विद्यते । स च पृथिव्याद्याश्रयत्वात् शरीरनाशेनाप्यनाश्यत्वादपहतपाप्मत्वादेश्चान्वेष्टव्य इत्यन्वयोपपत्तेः । न च ब्रह्मपुरपदप्रयोगादात्मा न विष्णुः, ब्रह्मैव पूर्णत्वात्पुरमित्युपपत्तेः । एतच्छब्देन शरीरस्य प्रकृतत्वान्नेति चेन्न, शरीरनाशेनास्याविनाशोक्तेः । न चाकाशपक्षेऽन्वयोऽस्ति, दहराकाशस्थमुपास्यमित्युक्ते, "किं तदत्र विद्यते" इति प्रश्ने, "यावान्वै" इत्यस्यान्वयादर्शनात् । न हि दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इत्युपपद्यते, तदभावादयोगाच्च । नापि दहराकाशमेव विशिष्य "उभे अस्मिन्" इत्यादिपरिहार इति युक्तम्, दहरस्य व्याप्तत्वायोगान्मुख्यतः पृथिव्यादीनामनुपास्यत्वाच्च । नन्वेवं हृत्पद्मगताकाशस्थो विष्णुरित्यभ्युपेत्य तस्य सर्वाधारत्वाङ्गीकारेऽपि सुषिरश्रुतिविरोधः स्यात्, तत्र साक्षात्सुषिरस्य सर्वाधारत्वोक्तेरित्यत आह—**तदिति** । नचैवमङ्गीकारेऽपि सुषिरश्रुतिविरोधः, 'मन्दिरे मणिमाला' इत्यत्र मन्दिरपदेन तदन्तस्स्थमञ्जूषाविवक्षावत्सुषिरश्रुतेरपि तदन्तस्स्थभगवदपेक्षया प्रवृत्तत्वादित्यर्थः ॥ १७ ॥

**ओम् इतरपरामर्शात्स इति चेन्नासम्भवात् ओम्**

"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच" इति जीवपरामर्शात्स इति चेन्न, तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥

**ओम् उत्तराच्चेदाविर्भूतस्वरूपस्तु ओम् ॥ १९ ॥**

"स तत्र पर्येति जक्षन् क्रीडन् रममाणः" इत्याद्युत्तरवचनाज्जीव एवेति चेत्,

तत्त्वप्रकाशः

भगवतो हृत्पद्मस्थत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे—इतरेति । "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युक्तस्य जीवस्य "एष आत्मेति होवाच" इति हृत्पद्मस्थात्मतया परामर्शाज्जीव एव हृत्पद्मस्थ इत्यर्थः । परिहारांशं व्याचष्टे—नेति । न जीवो हृत्पद्मस्थः, हृत्पद्मस्थेऽपहतपाप्मत्वादिगुणश्रवणात्, तेषां जीवेऽसम्भवात् । न च वाच्यं, मुक्तजीवे तत्सम्भवाज्जीव एव भाविभावेनोच्यत इति, मुक्तस्याप्यस्वातन्त्र्येण तदसम्भवात् । अतः स्वातन्त्र्येणापहतपाप्मत्वादिगुणो हरिरेव हृत्पद्मगत इति भावः ॥ १८ ॥

जीवस्यापहतपाप्मत्वाद्यसम्भवमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे—उत्तरादिति । "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय" इत्युक्तजीवस्य "स तत्र पर्येति" इत्यादिना सत्यकामत्वप्रतीतेस्तत एव विशोकत्वादिसिद्धेरुक्तगुणासम्भवाभावात्स एव हृत्प-

न, तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते। यत्प्रसादात्स मुक्तो भवति स भगवान् पूर्वोक्तः ॥ १९ ॥

तत्त्वप्रकाशः

द्मस्थ इत्यर्थः। नञध्याहारेण परिहारांशं व्याचष्टे—**नेति**। नैतद्वाक्यबलेन जीवस्य गुणान् सम्भाव्य हृत्पद्मस्थत्वं वाच्यम्, तद्वाक्ये मुक्तजीवस्योच्यमानत्वात्, "स्वेन रूपेणाभिनिष्पद्यते" इत्युक्तेः। हृत्पद्मस्थस्य च देहान्तर्वर्तितया मुक्तत्वायोगात्। न च वक्तव्यं, मुक्तविषयत्वेऽप्येतद्वाक्यस्य मुक्तस्यापि जीवत्वेनास्त्येव जीवेऽपहतपाप्मत्वादिसम्भवोऽतो जीव एवापहतपाप्मत्वादिगुणो हृत्पद्मगततया भाविभावेनोच्यत इति, मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसम्भवादिति भावः। नन्वत्र मुक्तस्य तद्गुणत्वमेवोच्यते, न तु परमेश्वराधीनत्वम्। अतस्तत्स्वत एवेत्यत आह—**यदिति**। नात्र मुक्तगुणप्राप्तेः परमेश्वराधीनत्वोक्त्यभावः, परमेश्वरस्य गुणप्रदातृतया "परं ज्योतिरुपसम्पद्य" इति पूर्ववाक्योक्तत्वादिति भवः। ननु परमेश्वरप्रसादादपि जीवस्यास्त्येव तद्गुणजातम्। अतः स एवापहतपाप्मत्वादिगुणो हृत्पद्मस्थोऽस्त्वित्यतो वाऽऽह—**यदिति**। न परमेश्वरप्रसादलब्धगुणो जीवः पूर्ववाक्येऽपहतपाप्मत्वादिनोक्तः, किन्तु यत्प्रसादात्स मुक्तो भूत्वाऽपहतपाप्मत्वादिगुणो भवति, स भगवानेव, दातृप्रतिगृहीत्रोर्दातुरेव मुख्यत्वात्, मुख्यस्यैव ग्राह्यत्वादिति भावः॥ १९॥

## ओम् अन्यार्थश्च परामर्शः ओम् ॥ २० ॥

यं प्राप्य स्वेन रूपेण जीवोऽभिनिष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥ २० ॥

## ओम् अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

'दहरे' इत्यल्पश्रुतेर्नेति चेत्,

तत्त्वप्रकाशः

अमुख्यापहतपाप्मत्वादिगुणोऽपि जीवः परामर्शबलेन हृत्पद्मस्थात्मा किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अन्येति। भवेदेतद्यदि 'एषः' इति जीवं परामृश्य तस्य हृत्पद्मस्थत्वं विधीयेत, नैतदस्ति, यं परं ज्योतिराख्यं भगवन्तमभिसम्पद्य जीवः स्वेन रूपेणाभिनिष्पद्यते, स एष आत्मेति परमात्मानमेव 'एषः' इति परामृश्य, तस्यात्मत्वोक्तेः। अतो जीवेऽपहतपाप्मत्वाद्यसम्भवात्परामर्शस्य चेश्वरार्थत्वात्स एवापहतपाप्मत्वादिगुणो हृत्पद्मस्थ इति भावः। न च मन्तव्यमुभयथाऽपि सम्भवे कुतः परमात्मार्थता परामर्शस्येति, निरवकाशोक्तानेकहेतुबलादेव ॥ २० ॥

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे—अल्पेति। यदुक्तम् जीवेऽसम्भावितगुणश्रवणाद्विष्णुरेव हृत्पद्मस्थो न जीव इति, तदयुक्तम्, "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तः" इति परमात्मन्यसम्भाव्यमानजीवलिङ्गस्याल्पस्थानस्थितत्वस्य श्रुतत्वादित्यर्थः।

न, "निचाय्यत्वादेवं व्योमवच्च" इत्युक्तत्वात् । "एष म आत्माऽन्तर्हृदये ज्यायान्" इति श्रुत्युक्तत्वाच्च ॥ २१ ॥

तत्त्वप्रकाशः

नञध्याहारेण परिहारांशं व्याचष्टे—नेति । नाल्पस्थानस्थितिश्रुतिर्विष्णावनुपपन्ना, "निचाय्यत्वादेवं व्योमवच्च" इत्यत्र सर्वगतस्यापि विष्णोर्व्योमवदल्पस्थानस्थितेरुक्तत्वादित्यर्थः । न व्योमवदीश्वरस्याल्पस्थानस्थितिर्युक्ता, सर्वगतस्यापि व्योम्नोंऽशतोऽल्पस्थानस्थित्युपपत्तेः । न च तथा विष्णोरुपपत्तिः, तस्यांशतोऽपि सर्वगतत्वात्, "यावान्वै" इत्युक्तेश्चेत्यतस्सूत्रशेषं प्रकारान्तरेण व्याचष्टे—एष इति । सर्वगततयैव विष्णोरल्पस्थानस्थितिरुपपन्ना, "एष म आत्मा" इति श्रुतौ सर्वज्यायस्त्वेनैव हृदयस्थत्वोक्तेरित्यर्थः । न चैतद्युक्तिविरुद्धं, "यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति" इत्यादेः । अतो विष्णुरेव हृत्पद्मस्थः सर्वाधारश्चेति सिद्धम् ॥ २१ ॥

चान्द्रिका

## ॥ ओम् दहर उत्तरेभ्यः ओम् ॥

अत्र पादसङ्गतिः "—"यो वेद निहितं गुहायां" "तस्यान्ते सुषिरं सूक्ष्मं" "हृदि ह्येष आत्मा" इत्यादिश्रुतिभिर्ब्रह्माकाशजीवेषु साधारणस्य हृत्पद्मस्थत्वलिङ्गस्य" इति टीकायामेवो-

प्रकाशः

ओम् दहर उत्तरेभ्यः ओम् ॥ अत्र न्यायविवरणे लिङ्गं हृत्पद्मस्थितत्वं साधारणमित्युक्तम् । तट्टीकायां तु तत्कुत्र कथमित्याशङ्कायां अन्यत्रास्माभिरुक्तमित्युक्तम् । तत्कुत्रेत्याकाङ्क्षायामाह—**अत्रेति** । **यो वेदेति** । आनन्दमयनयोक्तरीत्या ब्रह्मणि प्रसिद्धिः । **तस्यान्ते इति** । नारायणोपनिषदि,

पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ।

इत्युपक्रम्य हृत्पद्मस्यान्ते सुषिरशब्दितस्य आकाशस्याम्नानात् तत्र प्रसिद्धिः । नच सुषिरशब्दस्य आकाशाधिकरणन्यायेन विष्णुवाचितेति वाच्यं, "तस्याश्शिखाया मध्ये परमात्मा" इति सुषिरमध्यगतशिखामध्यस्थत्वेन विष्णोरुक्त्या सुषिरस्याकाशत्वे विवादाभावादिति भावः । **हृदि ह्येष आत्मेति** । षट्प्रश्नोपनिषदि आत्मशब्दितस्य जीवस्य हृत्पद्मस्थत्वेन निर्देशात्तत्र प्रसिद्धिरित्यर्थः । वक्ष्यति च "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि" इति सूत्रकारः । यद्यपि "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इत्यग्नेरप्यन्तस्स्थितत्वमुच्यते । तथाऽपि हृत्पद्मस्थत्वाश्रवणाद्वा, तस्य वैश्वा-

चन्द्रिका

का। अनन्तरसङ्गतिस्तु, पूर्वाधिकरणविषयवाक्ये "येनाश्रुतं श्रुतं भवत्यमतं मतं" इत्यादिनोक्तस्यान्वेष्टव्यत्वस्य वा, "सदायतनाः सत्प्रतिष्ठाः" इत्यादिनोक्तस्य सर्वाधारत्वस्य वा, "सदेव सोम्येदं" इत्यादिनोक्तस्य सृष्टिहेतुत्वस्य वाऽऽक्षेपेण पूर्वपक्षोत्थानात्। अन्वेष्टव्यत्वसर्वाधारत्वयोराक्षेपः पूर्वपक्षे दर्शयिष्यते। सृष्टिहेतुत्वाक्षेपस्तु वक्ष्यमाणेन स्थितिहेतुत्वरूपाधारत्वाक्षेपेण सेत्स्यति, स्थितिहेतोरेव सृष्टिहेतुत्वात्।

प्रकाशः

नरनये ब्रह्मपरत्वोक्तेर्वा न तत्साधारण्यशङ्केति भावः। **सङ्गतिस्त्विति**। आक्षेपिकीत्यर्थः। **येनेति**। येन श्रुतेन मतेन विज्ञातेनान्यत्सर्वं श्रुतमतविज्ञातफलं भवतीत्यर्थवादेन भगवति श्रवणमननादिविषयत्वरूपजिज्ञास्यत्वस्याभिप्रेतत्वादिह च "सोऽन्वेष्टव्यः" इति वाक्येऽन्यस्यैव तत्प्रतीतेस्तदाक्षेप इत्यर्थः। **सर्वाधारत्वस्य वेति**। "उभे अस्मिन् द्यावापृथिवी" इत्यादिना श्रुतसर्वाधारत्वस्य अन्यगतत्वप्रतीतेरिति भावः। अत्र सृष्टिहेतुत्वस्याप्रतीतेः कथं तस्याऽऽक्षेप इत्यत आह—**वक्ष्यमाणेनेति**। **स्थितिहेतोरिति**। यद्यपि नायं नियमः, अन्यथाऽपि लोके दर्शनात्। तथाऽपि प्रकृताभिप्रायेणैतदिति ध्येयम्। "चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम्" इति अक्षराधिकरणाक्षेपभाष्यं तूक्ताभिप्रायमिति भावः। एतेन यदुक्तं कल्पतरौ—प्रागुदाहृतपरमपुरुषशब्दितस्य दहरवाक्यशेषगतोत्तमपुरुषत्व-

चन्द्रिका

अत्र "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तं चेद् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः ।

उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते ।

उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ॥"

इत्यादिच्छान्दोग्यवाक्यस्थं हृत्पद्मस्थत्वं किमाकाशादेः किं वा ब्रह्मण

प्रकाशः

वत् अब्रह्मत्वशङ्कायां तस्यापि ब्रह्मविषयत्वोपपादनात्सङ्गतिरिति, तन्निरस्तं, "पुरुषमीक्षते" इति अस्य प्रागनुदाहरणत्वेनोक्तत्वात्, सान्निहितप्रधानान्वेष्टव्यत्वादिमुखाक्षेपस्य सम्भवे अन्यस्यानादरणीयत्वात् । एतेनैव, पुरिशयस्य प्राक् परमात्मत्वं साधितम्, अत्र पुरिशयस्य आकाशशब्दवाच्यस्यापरमात्मत्वं निरस्यत इति सङ्गतिरित्यादिश्रुतप्रकाशोक्तमपि निरस्तं बोध्यम् । आकाशस्य सिद्धान्तेऽपि अब्रह्मत्वस्य साधयिष्यमाणत्वाच्चेति ॥

विषयसंशयटीकां व्यनक्ति—अत्रेति । "तद्धृदयपद्मस्थत्वं विषयः" इत्यत्र तच्छब्दपरामर्शमाह—अथ यदिदमित्यादिना । छान्दोग्येति । छान्दोग्ये अष्टमाध्यायगतवाक्यस्थमित्यर्थः । वाक्य-

चन्द्रिका

इति चिन्ता। तदर्थं हृत्पद्मस्थे श्रुतमपहतपाप्मत्वादिकं किममुख्यं उत मुख्यमिति। तदर्थं तस्य मुख्यत्वे "यावान्वा अयमाकाशः" इत्यादि प्रतिवचनं विरुध्यते नवेति। तदर्थं प्रतिवचनं किं "दहरोऽस्मिन् अन्तर आकाशः" इति पूर्वं हृत्पद्मस्थतयोक्तं भूताकाशमनूद्य तत्स्थस्य द्यावापृथिव्यादेरन्वेष्टव्यत्वप्रतिपादकं किं वा "तस्मिन्यदन्तस्तदन्वेष्टव्यं" इति पूर्वोक्तान्वेष्टव्यस्य ब्रह्मत्वं विधाय

प्रकाशः

स्यार्थोऽग्रे व्यक्तः। 'आकाशादेः' आकाशजीवयोरित्यर्थः। "दहरे ब्रह्मैव" इति प्रतिज्ञांशव्यावर्त्यपूर्वपक्षोपयुक्तचिन्तामुक्त्वा, 'उत्तरेभ्यः' 'गतिशब्दाभ्यां' इत्यादिहेत्वंशव्यावर्त्यपूर्वपक्षोपयुक्तचिन्तामाह—**अपहतेति**। "एष आत्माऽपहतपाप्मा विजरो विमृत्युः विशोकोऽविजिघत्सोऽपिपासस्सत्यकामः सत्यसङ्कल्पः" इत्यादिना श्रुतमित्यर्थः। **ब्रह्मत्वमिति**। आकाशपदेनेत्यर्थः। यद्यप्येवं न भाष्ये प्रतीयते। न्यायविवरणे च "योऽन्वेष्टव्यस्स भगवान् तस्यान्तर्हृदये" इत्यादिनाऽन्वेष्टव्यतयोक्तस्य ब्रह्मत्वं सिद्धं कृत्वा प्रकारप्रश्ने तत्कथनपरतया "यावान्" इत्यादि वाक्यं योजितं, विवृतं चैवमेव टीकायाम्। अतः "तस्मिन् यदन्तस्तदन्वेष्टव्यं" इति पूर्वोक्तान्वेष्टव्यस्य ब्रह्मणोऽन्वेष्टव्यत्वाय आकाशादिसर्वाश्रयत्वादिप्रकारप्रतिपादकमिति चिन्ता प्रदर्शनीया। तथाऽप्यस्मिन् पक्षे वक्ष्यमाणदिशा प्रश्नप्रतिवचनयोस्तुल्यविभक्तिकत्वाभावात् ब्रह्मत्वविधानपक्षे तत्सत्त्वस्य वक्ष्यमाणत्वात्

चन्द्रिका

तस्यान्वेष्टव्यत्वाय द्यावापृथिव्याद्याश्रयत्वप्रतिपादकमिति । तथा ब्रह्मणो द्यावापृथिव्याद्याश्रयत्वे सुषिरश्रुतिर्विरुध्यते न वेति । यद्याद्यस्तदा प्रतिवचनविरोधेन सुषिरश्रुतिविरोधेन चापहतपाप्मत्वा-देर्भूताकाश एवामुख्यस्य सम्भवात्तस्यैवान्वेष्टव्यद्यावापृथिव्याद्याश्रयत्व-

प्रकाशः

छान्दोग्यभाष्योक्तब्रह्मत्वकोटिकचिन्ता प्रदर्शितेति ध्येयम् । अत्र द्वौ पूर्ववादिसाधकावुत्तरवादिबाधकौ वाक्यानन्वयसमाख्याविरोधरूपौ न्यायविवरणभाष्याभ्यामुक्तौ । तत्राऽऽद्यघटितचिन्तामुक्त्वा द्वितीय-घटितामाह—**तथेति** । अस्पष्टत्वात् फलफलिभावं व्यनक्ति—**यद्या द्य इति** । यदि "यावान्" इत्यादिप्रतिवचनं ब्रह्मपरत्वे सुषिरश्रु-तिविरोधेन भूताकाशानुवादेन ततूस्थस्य द्यावाभूम्यादेरन्वेष्टव्यत्वप्र-तिपादकं, तर्हि भूतस्यैव हृत्पद्मस्थत्वप्राप्तेः प्रतिवचनविरोधेन अप-हतपाप्मत्वादेः गौणतया प्राक्तनमपि हृत्पद्मस्थत्वं भूतस्यैव सिध्य-तीत्यर्थः । ननु "यावान्" इति प्रतिवचनस्य वाक्यतया कथं तद्विरोधेन अपहतपाप्मत्वादेर्लिङ्गस्य बाधेन गौणत्वोक्तिः, वैप-रीत्यस्यैवोचितत्वात् । वक्ष्यति च "शब्दादेव" इत्यत्र "किं तदत्र विद्यते" इत्यादिवाक्यस्यापहतपाप्मत्वादिलिङ्गाद्दुर्बलत्वमिति । न च प्रतिवचनरूपवाक्यस्य प्रथमस्थत्वेनासञ्जातविरोधित्वेन प्राबल्यं मन्यते पूर्वपक्षी, अग्रेतनं लिङ्गवाक्ययोः प्राबल्यदौर्बल्यकथनं तु लिङ्गत्ववा-क्यत्वप्रयुक्तमेवेति न विरुध्यत इति वाच्यं, चरमस्य मुख्यत्वाय

चन्द्रिका

विशिष्टं हृत्पद्मस्थत्वम् । यदि तु द्वितीयः, तदा विरोधद्वयाभावा-न्मुख्येनापहतपाप्मत्वादिना अन्वेष्टव्यत्वद्यावापृथिव्याद्याश्रयत्वविशिष्टं

प्रकाशः

प्रथमस्येक्षणस्यैव गौणताया न्याय्यत्वादिति पूर्वाधिकरणोक्तदिशा पूर्वबाधस्यैव युक्तत्वात् । न चाकाशश्रुतियुक्तत्वेन वाक्यस्य लिङ्गा-द्बलवत्त्वं, "एष आत्माऽपहतपाप्मा" इति श्रवणेन लिङ्गस्यापि "स्वशब्दात्" इत्युक्तन्यायेन ब्रह्मवाचकात्मश्रुतियुक्तत्वात् । न च वाक्ये श्रुतेरभ्यासोऽस्तीति तस्य बलवत्त्वं, "तद्य इहात्मानमननु-विद्य व्रजन्ति, अथ य अत्मानमनुविद्य व्रजन्ति" इति च आत्म-श्रुतेरप्यभ्यासात्, लिङ्गानां बहुत्वाच्चेति चेन्मैवं, वक्ष्यमाणदिशा वाक्यस्य निरवकाशत्वं लिङ्गानां सावकाशत्वमिति पूर्वपक्षिणोऽभि-मानात् । एकेनापि जात्या दुर्बलेन निरवकाशेन बहूनां सावकाशानां बाधात्, "आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इति न्याया-दिति भावः । **यदि त्विति** । यदि "यावान्" इति प्रतिवचनं "किं तदत्र विद्यते" इति प्रश्ने आकाशशब्दितं ब्रह्म विद्यत इति अन्वेष्टव्यं ब्रह्मेत्युक्तिपरं, तदा विष्णोरेव सर्वाधारतया हृत्पद्मस्थत्वप्राप्तेः प्रतिवचनविरोधाभावात् प्राक्तनमपि हृत्पद्मस्थत्वं तस्यैव । एवञ्चापहतपाप्मत्वादिकं मुख्यमेव । तथा सुषिरश्रुतेरपि सर्वाधारब्रह्माधारत्वाभिप्रायेण परम्परया सुषिरस्य सर्वाधारत्वबोधन-परतया उपपत्तेस्तद्विरोधाभावात् हृत्पद्मस्थत्वं विष्णोरेव सिध्यतीत्यर्थः ।

चन्द्रिका

हृत्पद्मस्थत्वं ब्रह्मण एव । अत्र यद्यपि "दहरोऽस्मिन्नन्तर आकाशः" इति वाक्योक्ते हृत्पद्मस्थदहराकाशत्वे न चिन्ता, तस्य सिद्धान्तेऽप्यब्रह्मनिष्ठत्वात् । नापि, "तस्मिन्यदन्तस्तदन्वेष्टव्यं" इति वाक्योक्ते हृत्पद्मस्थदहराकाशस्थत्वे, तत्र भाष्योक्ताकाशशब्दाख्यपूर्वपक्षबीजाभावात् । पूर्वपक्षे दहराकाशस्थस्य सर्वाधारत्वाभावेन भाष्यटीकोक्ताम्बरान्तधृत्याक्षेपायोगाच्च । नापि हृत्पद्मस्थो दहर आकाश इति प्राप्ते, हृत्पद्मस्थदहरस्थं ब्रह्मेति सिद्धान्तो युक्तः । नापि सर्वाधारत्वे चिन्ता, "चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् । तच्चाकाशस्य प्रतीयते" इतिभाष्यानुसारात्, "स चन्द्रादित्याद्याधारः किं दहराकाशः आहोस्वित् तत्स्थः कश्चित्" इत्यादितत्त्वप्रदीपानुसाराच्चेति वाच्यं, "लिङ्गं हृत्पद्मस्थत्वं" इति न्यायविवरणे, "सोऽक्षरः सन् हृदब्जगः" इति सङ्क्षेपे च हृत्पद्मस्थत्वस्यैव विषयत्वोक्तेः । अत्रापि "दहरे विष्णुरेव" इति सिद्धान्त-

प्रकाशः

पूर्वपक्षटीकां विवरीतुकामो भाष्याद्युक्तपूर्वपक्षहेतूनामासिद्धिपरिहाराय समन्वीयमानलिङ्गस्वरूपं निर्णेतुमाक्षिपति—**अत्र यद्यपीति** । 'न चिन्ता' इति विच्छेदः । **पूर्वपक्ष इति** । भूतस्यैव सर्वाधारत्वेन पूर्वपक्षकरणादिति भावः । **नापि हृत्पद्मस्थ इति** । व्यधिकरणत्वादिति भावः । उक्तदोषपरिजिहीर्षया पक्षान्तरं सोपष्टम्भमाशङ्कते—**नापीति** । बह्वनुरोधेनैकं भाष्यवाक्यं टीकोक्तरीत्या अन्यथा व्याख्येयमित्याह—**लिङ्गमिति** ।

चन्द्रिका

भाष्ये, सप्तम्यन्तेन दहरपदेन दहराकाशस्थत्वस्यैव समन्वेतव्यत्वप्रतीतेश्च। "प्रसिद्धेश्च" इत्यादिसूत्रे विष्णोर्दहराकाशस्थत्वस्यैवोपपादनाच्च। "चन्द्राद्याधारत्वं" इति भाष्यं तु अक्षराधिकरणाक्षेपेणात्र पूर्वपक्ष इति प्रदर्शयितुमिति टीकायामेव व्याख्यातम्। तत्त्वप्रदीपोऽपि तथैव व्याख्येयः। तथाऽपि "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदये" इति वाक्योक्ते हृत्पद्मस्थत्वे चिन्ता। एवञ्च न कोऽपि दोषः, तस्य सिद्धान्ते ब्रह्ममात्रनिष्ठत्वात्। तत्र पूर्वपक्षबीजादेः सत्त्वाच्च। यद्वा— "अन्वेष्टव्यः" इति वाक्योक्ते-

प्रकाशः

**तथैवेति**। पूर्वाधिकरणाक्षेपेणात्र पूर्वपक्ष इति दर्शयितुमित्येवंरूपेणेत्यर्थः। अत एव उत्तरत्र तत्त्वप्रदीपे 'तत्स्थः कश्चिदित्यपरः पक्षः। सोऽपि जीव इति प्राप्तम्' इति हृत्पद्मगतसुषिरस्थ एव विषयो दर्शित इति भावः। त्रेधा समाधित्सुः छान्दोग्यभाष्यरीत्या तावत्समाधिमाह—**तथाऽपि यावानिति**। **तत्रेति**। यावानयं बाह्याकाशः तावान् हृदये विद्यत इति आकाशस्य हृत्पद्मस्थताश्रवणेन आकाशश्रुतिरूपपूर्वपक्षबीजस्य, सिद्धान्ते तदाकाशत्वस्य ब्रह्मनिष्ठतायाश्च सत्त्वादित्यर्थः। नन्वस्य च्छान्दोग्यभाष्यरीत्या सम्भवेऽपि न्यायविवरणरीत्या हृदयशब्दस्य विष्णुहृदयपरत्वात् तत्स्थत्वं सिद्धान्तेऽपि प्रसिद्धाकाशस्यैव, न तु विष्णोरित्यत उभयानुगुणं पक्षान्तरमाह—**यद्वेति**। "यदिदमस्मिन्

चन्द्रिका

हृत्पद्मस्थत्वे चिन्ता, पूर्वपक्षे तच्छब्दस्य व्यवाहितपुण्डरीकपरत्वेन पुण्डरीकस्थाकाशस्यैव अन्वेष्टव्यत्वेन पूर्वपक्षबीजसम्भवात्। तस्यैव सर्वाधारत्वेनाम्बरान्तधृत्याक्षेपसम्भवाच्च। यद्वा—एतत्प्रकरणस्थे हृत्पद्मस्थत्वसामान्ये चिन्ता। तच्चाकाशस्येति न पूर्वः पक्षः। नापि तदाकाशस्य नेति सिद्धान्तः, येन बाधः। किन्तु द्यावापृथिव्याद्याश्रयतया यत्साक्षात् हृत्पद्मस्थत्वं, तदाकाशस्यैव, भाष्योक्तसुषिरश्रुतेः। यत्तु व्यवहितमन्वेष्टव्यतया हृत्पद्मस्थत्वं, तत् द्यावापृथिव्यादेरेव, न्यायविवरणोक्तानन्वयात्। तथा च ब्रह्मणि विशेषाभावात् सामान्यमपि नेति प्राप्ते, सत्यं, साक्षात् हृत्पद्मस्थत्वमाकाशस्यैव, व्यवहितं तु ब्रह्मणः। तस्यैव द्यावापृथिव्याद्या-

प्रकाशः

ब्रह्मपुरे दहरं पुडरीकं वेश्म दहरोऽस्मिन् अन्तर आकाशः" इत्युक्त्वा "तस्मिन् यदन्तस्तदन्वेष्टव्यं" इति वाक्योक्त इत्यर्थः। 'तच्छब्दस्य' तस्मिन्नित्यस्य। नन्वेवमाकाशस्यैव अन्वेष्टव्यत्वप्राप्त्या पूर्वपक्षे द्यावापृथिव्यादेरन्वेष्टव्यत्वोक्तिर्न युज्यत इत्यतः, साक्षात्परम्परासाधारण्येन वाक्यशेषस्थत्वं विनैतत्प्रकरणगतं हृत्पद्मस्थत्वसामान्यमेव लिङ्गमित्याह—**यद्वेति**। **बाध इति**। 'सिद्धान्ते' इत्यपि योज्यम्, आकाशे हृत्पद्मस्थत्वस्य सिद्धान्तेऽप्यनुमतत्वात्। **किन्तु द्यावापृथिव्यादीति**। अत एव टीकायां "सर्वाधारतया हृत्पद्मस्थत्वं आकाशस्य" इत्युक्तमिति भावः। **तस्यैवेति**। "यावान्" इति

चन्द्रिका

श्रयत्वमन्वेष्टव्यत्वं च। तथा च विशेषसद्भावात् सामान्यमपि अस्तीति सिद्धान्तयिष्यमाणत्वात् न कोऽपि दोषः ॥

पूर्वपक्षस्तु—हृत्पद्मस्थत्वमाकाशस्यैव, न तु ब्रह्मणः। तद्धि ब्रह्मणो हृत्पद्मस्थदहराकाशतया वा, दहराकाशाश्रितान्वेष्टव्यतया वा। तत्राद्यः "आकाशस्य प्रतीयते" इत्यादिभाष्येण, तद्विवरणरूपया "दहरोऽस्मिन्नन्तर आकाशः" इत्यादिटीकया च दूषितः। तत्रायं भावः—पूर्वस्मिन् "दहरोऽस्मिन्नन्तर आकाशः" इति हृत्पद्मस्थवाक्ये, परस्मिंश्च "तावानेषोऽन्तर्हृदय आकाशः। उभे अस्मिन् द्यावापृथिवी" इत्यादौ सर्वाधारवाक्ये च गगने प्रसिद्धा-

प्रकाशः

वाक्ये प्रागुक्ताकाशानुवादेन सर्वाधारत्वोक्तेरिति भावः। **विशेषेति।** साक्षात्परम्परालक्षणविशेषाभावादित्यर्थः ॥

आकाशप्रापकपूर्वपक्षटीकां "सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्य" इत्यादिरूपां तावत्प्रपञ्चयति—**हृत्पद्मस्थत्वमिति।** न्यायविवरणे वाक्यानन्वयोऽत्र पूर्वपक्षहेतुरुक्तः। भाष्ये समाख्याविरोधो हेतुरुक्तः। तद्धेतुद्वयं पक्षभेदेन योज्यं, अन्यथानुपपत्तेरिति भावेन विकल्पपूर्वमाद्यपक्षे भाष्योक्तं हेतुं योजयति—**तद्धीत्यादिना।** टीकायां प्रतिज्ञाविशेषादेरस्पष्टत्वात्, समाख्याया निरवकाशत्वानुक्त्या समाख्यया लिङ्गबाधायोगाच्च निष्कृष्य तदभिप्रायमाह—**तत्रायं भाव इति।** टीकोक्तमुपलक्षणं मत्वाऽऽह—**परस्मिंश्चेति।**

चन्द्रिका

काशशब्दश्रवणात् न ब्रह्म दहराकाशः। न च "तल्लिङ्गात्" इत्युक्तन्यायेन स ब्रह्मपरः, "पद्मकोशप्रतीकाशं हृदयं" इति प्रकृतहृत्पद्मपरामर्शेन

तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्।

इति श्रुत्यन्तरे सुषिरस्य हृत्पद्मस्थत्वसर्वाधारत्वयोरुक्तेः।

प्रकाशः

"नन्वस्तु" इत्यादिटीकां व्यनक्ति—**नच तल्लिङ्गादिति।** "आकाश इति होवाच" इति वाक्ये परोवरीयस्त्वादिलिङ्गश्रवणात् आकाशो ब्रह्मेत्युक्तं "आकाशस्तल्लिङ्गात्" इत्यत्र, तथेहापि सर्वाधारत्वरूपब्रह्मलिङ्गात् आकाशो ब्रह्म स्यादित्यर्थः। "तस्यान्ते" इति तच्छब्दार्थविवरणायोक्तं—**पद्मकोशेति।**

पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्।
अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति॥
ज्वालमालाकुलं भाति विश्वस्यायतनं महत्।
सन्ततं शिलाभिस्तु लम्बत्याकोशसन्निभम्॥
तस्यान्ते सुषिरं........................।

इति नारायणोपनिषदि समाम्नानादिति भावः। **उक्तेरिति।** ननु तावता कथं लिङ्गस्य समाख्यामात्रेण बाधः। न चाऽऽकाशश्रुतिसमाख्याभ्यां लिङ्गस्य बाध इति युक्तं, एकेनापि निरवकाशेनानेकबाधदर्शनादित्यतः, समाख्यायाः निरवकाशत्वं शङ्कापूर्व-

चन्द्रिका

न च तत्र सुषिरशब्दो ब्रह्मपरः,

तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः ।

तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः ॥

इति परमात्मनः सुषिरस्थशिखामध्यस्थत्वोक्तेः । किञ्च दहराकाशस्य ब्रह्मत्वे "तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इति दहरस्थस्यान्वेष्टव्यत्वोक्तिरयुक्ता स्यात् । द्वितीयस्तु, "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इत्यनेन "यावान्वा अयमाकाशः

प्रकाशः

माह—न च तत्रेति । उक्तन्यायेनैवेत्यर्थः । "व्यवस्थितः" इत्यनन्तरं

नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा ।

नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ॥

इति मन्त्रः अनुपयोगादत्र नोदाहृतः । युक्त्यन्तरं च स्वयमाह—**किञ्चेति** । न च तच्छब्दस्य पुण्डरीकपरत्वात् ब्रह्मण एव अन्वेष्टव्यत्वमिति वाच्यं, अव्यवहिताकाशपरत्वसम्भवे व्यवहितपुण्डरीकपरत्वायोगात् । दहरस्थहृत्पुण्डरीकस्थतायाः "दहरोऽस्मिन्" इत्यत्रैवोक्तत्वेन पुनस्तदुक्तिवैयर्थ्याच्चेति भावः । एतेनोत्तरवाक्यगतबहुतरहेतुविरोधात् भूते प्रसिद्धाकाशश्रुत्या पूर्वपक्षस्तुच्छ इति भामत्युक्तं निरस्तं, निरवकाशसमाख्यया, अन्यस्यान्वेष्टव्यत्वोक्त्ययोगरूपयुक्त्या च सहिताकाशश्रुत्याऽऽकाशपूर्वपक्षस्य युक्तत्वादिति । **द्वितीयस्त्विति** । दहराश्रितान्वेष्टव्यतया वेति पक्ष इत्यर्थः ।

चन्द्रिका

तावानेषोऽन्तर्हृदय आकाशः" इत्यस्यान्वयाभाव इति न्यायविवरणे, तद्विवरणरूपायां "वाक्यान्वयानुपपत्तेः" इत्यादिटीकायां च परिहृतः। तत्रायं भावः—"यावान्वा अयमाकाशः" इति वाक्यस्थ आकाशः किं प्रसिद्धाकाशः किं वा ब्रह्म। नाद्यः, "तस्मिन्यदन्तः" इत्यत्र अन्वेष्टव्यतयोक्तस्य हृत्पद्मस्थदहराकाशस्थस्य ब्रह्मत्वे "किं तदत्र विद्यते" इति प्रश्नस्य 'ब्रह्म विद्यते' इति परिहारं विना "यावान्वै" इत्यादिना प्रसिद्धाकाशस्यान्वेष्टव्यत्वोक्तेरनन्वयात्। न चान्वेष्टव्यं प्रत्याधारतया तदुक्तिः, आधारतायाः "तस्मिन् यदन्तः" इति प्रागेवोक्तत्वेन, "किं तदत्र विद्यते" इत्याधेयस्यैव पृष्टत्वेन चाऽऽकाङ्क्षाभावेन, द्यावापृथिव्यादेरन्वेष्टव्यत्वप्रसङ्गेन चाधारत्वोक्तेरनन्वयात्। आकाशपक्षे त्वस्त्यन्वयः, आकाशस्य दहरवाक्ये हृत्पद्मस्थतामुक्त्वा अन्वेष्टव्यवाक्ये दहराकाशान्तस्स्थस्यान्वेष्टव्यत्वे उक्ते "किं तदत्र विद्यते" इत्यत्रान्वेष्टव्ये आधेये पृष्टे "यावान्वै" इत्यादिना पूर्वोक्तमाधारमाकाशमनूद्य, तच्च द्यावापृथिव्याद्याश्रयत्व-

प्रकाशः

टीकोक्तं प्रतीतचोद्यानिरासेन विकल्पमुखेन विशदयन् आद्यपक्ष इव द्वितीयपक्षेऽपि उत्तरवाक्यस्य ब्रह्मपरत्वे टीकोक्तसुषिरश्रुतिविरोधवदनन्वयोऽपि योज्य इति भावेन टीकाभिप्रायमाह—**तत्रेति**। अन्वेष्टव्यं "उभे अस्मिन्" इत्यादिना वक्तुं तदुपयुक्तत्वेनैतदुक्त्यन्वयोऽस्त्वित्याशङ्क्य टीकोक्तमनन्वयं साधयति—**न चेति**।

चन्द्रिका

योग्यत्वाय बाह्याकाशतुल्यतया विशेष्य, "उभे अस्मिन्" इत्यादिना द्यावापृथिव्यादेरन्वेष्टव्यत्वोक्तेः श्लिष्टत्वात्। एवं च पूर्वपक्षे जिज्ञासासूत्रस्याप्याक्षेपः। अत एव "मुख्यतः पृथिव्यादीनामनुपास्यत्वात्" इति सिद्धान्तटीकायां पृथिव्यादेर्जिज्ञास्यत्वप्रतिषेधः। ननु तर्हि ब्रह्मेति द्वितीयोऽस्तु। न चैवमाधेयप्रश्नस्य "यावान्" इत्यनेनैवोत्तरितत्वेन "उभे अस्मिन्" इत्यादिकं व्यर्थमिति वाच्यं, ब्रह्मणो जिज्ञास्यत्वाय सर्वाधारत्वोक्तेरिति चेन्न, "तस्मिन् सर्वं प्रतिष्ठितम्" इति समाख्याश्रुतौ साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तेः। "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्" इति पूर्वोक्तप्रसिद्धाकाशस्यैवेहापि "यावान्वा अयमाकाशः" इत्याकाशश्रुत्या "उभे अस्मिन्"

प्रकाशः

**द्यावापृथिव्यादेरिति**। यद्यप्येतत्पूर्वपक्षिणः समीहितमेव, तथाऽपि

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ।

इत्यादिना सिद्धान्तिभिरन्वेष्टव्यत्वस्य त्याजितत्वादेतदनिष्टमिति भावः। तेन नोत्तरग्रन्थविरोध इति ध्येयम्। अस्मिन् पक्षे भाष्यमुपलक्षणं, अन्यदप्याक्षेप्यमित्याह—**एवञ्चेति**। तेन जिज्ञास्यत्वरूपब्रह्मधर्मादाकाशो ब्रह्मेति निरस्तम्। "यावान्वै" इति वाक्यगताकाशो ब्रह्मेति द्वितीयपक्षः टीकायां "न च यावान्" इत्यादिना "आकाशाख्यो विष्णुः" इत्यादिग्रन्थेन शङ्कापूर्वं निरस्तः। तं विशदयति—**नन्विति**। टीकोक्तं सुषिरश्रुतिविरोधमुक्त्वा अनन्व-

चन्द्रिका

इति सप्तम्या च प्रत्यभिज्ञानाच्च । न ह्यस्मिन्निति सप्तमीनिर्दिष्ट आकाशः पृष्टमाधेयं प्रत्याधारो न, प्रथमानिर्दिष्टं च द्यावापृथिव्यादिकं पृष्टमाधेयं न, किन्त्वन्यदेवेत्यन्वितं भवतीति । टीकायामस्मिन् पक्षे न्यायविवरणोक्तानन्वयमनुक्त्वा भाष्योक्तसुषिरश्रुतिविरोधोक्तिस्तु अनन्वयो न लगतीति नाभिप्रेत्य, किन्तु सुषिरश्रुतिविरोधोऽपि लगतीत्यभिप्रेत्य । तस्मादाकाशमेव हृत्पद्मस्थम् । अपहतपाप्मत्वादिकं त्वाकाशेऽपि युक्तम्, तस्याचेतनत्वेन पाप्माद्यत्यन्ताभावस्य सत्त्वात्, तत्प्रध्वंसस्य च ब्रह्मण्यप्यसत्त्वात् । सत्यकामत्वादिकं तु प्रतिहतकामादिराहित्यात् । यद्वा—अभिमान्यभिप्रायेण आकाशेऽपहतपाप्मत्वादिकं सत्यकामत्वादिकं चास्तु । तस्मात् हृत्पद्मस्थमाकाशमेव । जीवो वाऽस्तु, "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मा"

प्रकाशः

यमपि योजयति—**न हीति** । हृत्पद्मस्थाकाशस्थं किमिति पृष्टे, हृदये ब्रह्म, तत्र च सर्वमस्तीत्यस्यानन्वयादिति भावः । **अस्मिन् पक्ष इति** । प्रतिवचनगताकाशो ब्रह्मेति पक्ष इत्यर्थः । ननु विष्णुलिङ्गविरोध इत्यत आह—**अपहतेति** । 'तस्मात्' लिङ्गविरोधाभावादित्यर्थः । एवमाकाशपूर्वपक्षटीकां प्रपञ्च्य "इतरपरामर्शात्स इति चेत्" इति सूत्रपूर्वपक्षोक्तिपरां "जीवस्य वैतद्भवेत्" इत्यादिटीकां व्यनक्ति—**जीवो वाऽस्त्विति** । 'हृत्पद्मस्थः' इत्यनुषङ्गः । तस्यात्म-

चन्द्रिका

इत्युत्तरत्रैतच्छब्देन प्रकृतं जीवमनूद्य तस्यात्मशब्देन "य आत्मा अपहतपाप्मा विजरो विमृत्युः" इत्यादिनोक्तहृत्पद्मस्थात्मत्वविधानात्। तत्रैतच्छब्दस्य परज्योतिःपरत्वे नपुंसकलिङ्गता स्यात्। अपहतपाप्मत्वादिकं तु मुक्तौ जीवेऽपि सम्भवात्, 'अस्य सूत्रस्य शाटकं

प्रकाशः

त्वविधानेऽपि हृत्पद्मस्थत्वं कुत इत आह—**य आत्मेति**। तस्य प्रकृतहृत्पद्मस्थविषयत्वादिति भावः। **विधानादिति**। एतेन टीकादौ 'परामर्शात्' इत्यस्य परामृश्यात्मत्वविधानादित्यर्थ उक्तो भवति। ननु तत्र 'एषः' इत्यस्य ज्योतिश्शब्दनिर्दिष्टविष्णुपरत्वमस्त्वित्यत आह—**तत्र चेति**। **नपुंसकेति**। उपलक्षणमेतत्। 'सम्पद्यते' इत्यत्र कर्तृत्वेन सन्निहितजीवपरित्यागायोगादित्यपि ध्येयम्। लिङ्ग विरोधमाशङ्क्य "उत्तराच्चेत्" इति सौत्राक्षेपाभिप्रायमाह—**अपहतेति**। **अस्य सूत्रस्येति**। सूत्रतादशायां शाटकभावाभावादिति भावः। 'सूत्रस्य शाटकं वय' इत्येतत् यथा उते सूत्रे शाटकं भवति तथा कुर्विति भाविभावेन प्रयुज्यते, यथा च तक्षणे कृते यूपो भवति तथा कुर्विति भावेन प्रयुज्यते, तद्वदितिभावः। विवृतश्चायं दृष्टान्तो महाभाष्ये "इग्यणस्सम्प्रसारणम्" इत्यत्र, "यदि शाटको न वातव्यः। अथ वातव्यो न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खलु अस्य संज्ञाऽभिप्रेता। स मन्ये वातव्यः, यस्मिन् उते शाटक इत्येतद्भवति। एवमिहापि, स यणः स्थाने भवति,

चन्द्रिका

वय' 'यूपं तक्षति' इत्यादिवद्भाविभावाभिप्रायम्। अत एवास्मिन्नेव प्रकरणे उत्तरत्र "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते" "अत्र ह्येते सत्याः कामाः" इत्यादिना मुक्तानां सत्यकामत्वाद्युक्तिः। "यावान्वा अयमाकाशः" इत्यादिवाक्यानन्वयस्तु ब्रह्मपक्षेऽपि सम इति॥

सिद्धान्तस्तु—हृत्पद्मस्थत्वं विष्णोरेव, अपहतपाप्मत्वादिलिङ्गात्।

प्रकाशः

यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा संज्ञा भविष्यति" इति। तथा पूर्वतन्त्रेऽपि नवमाद्यपादे "अग्नये जुष्टं निर्वपामि" इत्यत्र जुष्टमित्येतद्भाविभावाभिप्रायेणेत्युक्तं "गुणशब्दस्तथेति चेत्" इत्यत्र द्वादशेऽधिकरणे। तदेतदाह—**इत्यादिवदिति**। मुक्तावपि सत्यकामत्वादिकं प्रसिद्धं, तदा निश्शेषकामनिवृत्तेरित्यत आह—**अत एवेति**। अपहतपाप्मत्वादेर्मुक्तविषयत्वादेवेत्यर्थः। "स यदि पितृलोककामः" इत्यादेर्मुक्तविषयत्वं च "सङ्कल्पादेव तु तच्छ्रुतेः" इत्यधिकरणसिद्धमिति तत्प्रकरणादस्य "अपहतपाप्मा" इत्यादेरुक्तविषयत्वमवश्यं वाच्यं, अन्यथा "स यदि" इत्यादेरप्रकृतविषयत्वं स्यादिति भावः। नन्वेवमप्यनन्वयदोषस्तदवस्थ इत्यतः "यश्चोभयोस्समो दोषः" इति न्यायेन नाहं पर्यनुयोज्य इति भावेनाह—**यावान्वै इति**।

"दहरपद्मस्थो विष्णुरेव भवेत्" इत्यादिटीकार्थमनूद्य व्यनक्ति—**हृत्पद्मस्थत्वमिति**। लिङ्गानां बहुत्वेन सूत्रादौ बहुवचननिर्देशेऽपि

चन्द्रिका

तच्च न हृत्पद्मस्थदहराकाशतया, येनोक्तदोषः। किन्तु हृत्पद्मस्थ-दहराकाशस्थतया। न च गगनेऽपहतपाप्मत्वाद्युक्तिर्युक्ता, तत्र पाप्माद्यप्रसक्तेः। न चेश्वरेऽपि तदप्रसक्तिः,

सजातीये दर्शनं हि प्रतिषेधे प्रयोजकम्।
चेतने चैव पाप्मादिमत्ता दृष्टा जडे तु न॥

जीवस्य तु न संसारदशायामपहतपाप्मत्वादिकं, मुक्तिदशायां तु देहा भावान्न हृत्पद्मस्थत्वम्। किञ्चापहतपाप्मत्वादिकं भाष्योक्तश्रुत्यादिभिः

प्रकाशः

प्रत्येकं हेतुत्वं सूचयितुं 'लिङ्गात्' इत्येकवचननिर्देशः। एतच्च "गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च" "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" "प्रसिद्धेश्च" इति सौत्रसाधकानां उपलक्ष णम्। 'उक्तदोषाः' सुषिरश्रुतिविरोधादयः। लिङ्गनिरवकाशत्वोक्तिपरां "न चाऽऽकाशस्यापि पापाद्यभावेन" इत्यादिटीकां व्यनक्ति—**न च गगन इति। दर्शनं हीति। हिः हेतौ, प्रसिद्धौ वा।** नन्वस्त्विहापि सजातीये जडान्तरे पापदर्शनात् गगने तन्निषेध इत्यत आह—**जडे तु नेति।** यदपि जीवे सावकाशमित्युक्तं, तदपि नेति भावेन "असम्भवात्" "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रभाष्यटीकोक्तं व्यनक्ति--**जीवस्य त्विति।** ननूक्तं भाविभावाभिप्रायेण संसारिण्यपि युक्तमिति, तथाऽऽकाशेऽप्यभिमानिद्वारा यु ज्यत इति च, इत्यतो भाष्यटीकोक्तरीत्याऽनवकाशत्वमाह—**किञ्चेति।**

चन्द्रिका

ईशस्य निरपेक्षं, जीवस्य त्वीशदत्तत्वात् सापेक्षम् । न च निरपेक्षसम्भवे सापेक्षं ग्राह्यम् । एतेन सत्यकामत्वादेरपि ब्रह्मलिङ्गता सिद्धा । एतेनैवाकाशेऽप्यभिमान्यभिप्रायमपहतपाप्मत्वादीत्यपि निरस्तम् । अन्वयानुपपत्तिश्च, योऽन्वेष्टव्यो भगवांस्तस्यान्तर्हृदये यावान्वा

प्रकाशः

'श्रुत्यादिभिः' "स एष सर्वेभ्यः पाप्मभ्य उदितः" इति, "सर्वे पाप्मानोऽतो निवर्तन्ते" इति, "न हवै देवान्पापं गच्छति" इत्यादिश्रुतिभिः,

नित्यतीर्णाशनायादिरेक एव हरिस्स्वतः ।
अशनायादिकानन्ये तत्प्रसादात्तरन्ति च ।
सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् ।
सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता ॥

इत्यादिस्मृतिभिरित्यर्थः । **जीवस्य त्विति** । एतेन "आविर्भूतस्वरूपस्तु" इति सौत्रखण्डस्य तात्पर्यमुक्तं भवति । **न च निरपेक्षेति** । "यस्य पर्णमयी जुहूर्भवति" इति श्रुतजुहूवदिति भावः । अत एव "यद्योन्यां तदुत्तरयोर्गायति" इत्यत्र उत्तराशब्दस्य उत्तरग्रन्थे निरपेक्षवृत्तित्वेन तद्गतयोरेव उत्तरयोर्ग्रहणं, न पुनस्सापेक्षयोर्योन्युत्तरयोरित्युक्तं नवमे । एवं "उत्तरेभ्यः" इति सौत्रालिङ्गानां निरवकाशतोक्त्या हृत्पद्मस्थदहराकाशस्थो विष्णुरित्युक्तम् । इदानीं परोक्तबाधकं निरसिष्यन् अन्वयानुपपत्तिं तावत्परिहर्तुमाह—**अन्वयेति** ।

चन्द्रिका

अयमाकाशः तावानाकाशः, तस्मिन् द्यावापृथिवी अन्तरेव समाहिते, स च भगवानपहतपाप्मेत्यन्वय इति न्यायविवरणे परिहृता। तद्विवृतं "तथा हि" इत्यादिटीकायाम्। तत्रायं भावः— शरीरहृत्पुण्डरीकयोः ब्रह्म प्रति पुरत्ववेश्मत्वोक्त्यैवान्वेष्टव्यस्य ब्रह्मत्वे सिद्धे, "तस्मिन्यदन्तः" इत्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युक्ते, "किं तत्" इत्यत्र तद्ब्रह्म किंप्रकारकमिति पृष्टे, "यावान्" इति परिहारवाक्ये यद्ब्रह्मान्वेष्टव्यतयोक्तं तस्यान्तर्हृदये यावानेष आकाशः तावान् सर्वोऽपि विद्यते, द्यावापृथिव्या-

प्रकाशः

**टीकायामिति।** "प्रसिद्धेश्च" इति सूत्रटीकायामित्यर्थः। एतेन भाष्येऽनुक्तावपि टीकायामन्वयोक्तिः न्यायविवरणमूलेति दर्शितम्। नन्वत्र टीकाद्यनुक्तान्वयघटना न युक्तेव, प्रश्नवाक्ये "किं तदत्र" इति ब्रह्माकाशयोः प्रथमासप्तमीभ्यां निर्दिष्टयोः परिहारे सप्तमीप्रथमाभ्यां निर्देशायोगेन परिहारानन्वयस्योक्तत्वादित्यतः, तदुक्तव्यक्तिपूर्वकमुक्तशङ्कां परिहरति—**तत्रायं भाव इति।** यद्यपि "पुडरीकं वेश्म" इत्येव श्रुतं, न तु ब्रह्मवेश्मेति, तथाऽपि 'वेश्म' इत्युक्तौ कस्येत्याकाङ्क्षायां 'ब्रह्मपुरे' इत्युक्तपुरस्वामिनो ब्रह्मण एव पदिन्यायेनान्वय इति भावेन—**ब्रह्म प्रति वेश्मत्वोक्त्येत्युक्तम्।** 'हृदये' इत्यत्र कस्येत्याकाङ्क्षायां तत्रापि प्रकृतं ब्रह्मैवान्वेतीत्याह—**यद्ब्रह्मेति।** अस्मिन् ब्रह्मणीत्यर्थः। अत्र

चन्द्रिका

दिकं चास्मिन् समाहितमिति ब्रह्मण आकाशादिसर्वाश्रयत्वापहत-पाप्मत्वादिप्रकार उक्तः। एवञ्च प्रश्नवाक्ये ब्रह्मणः 'किं तत्' इति प्रथमया, आकाशस्य तु 'अत्र' इति सप्तम्या निर्देशोऽपि, परिहारवाक्ये ब्रह्मणः 'अस्मिन्' इति सप्तम्या, आकाशादेस्तु प्रथमया निर्देशो नायुक्तः, प्रकारे पृष्टे आकाशादिसर्वाश्रयत्वादिप्रकारोक्तेः।

न प्रश्नोत्तरभावे हि हेतुस्तुल्यविभक्तिता।
समानविषयत्वं तु हेतुस्तच्चात्र विद्यते ॥

इति। छान्दोग्यभाष्ये तु—अस्मिन् भूताकाशे ब्रह्माख्य आकाशो वर्तते। स च यावान् बहिः परमात्मा व्याप्तोऽस्ति, तावानेव विद्यते इति पक्षान्तरमुक्तम्। तद्विवृतं "अथवा" इत्यादिटीकायाम्। तत्रायं भावः—ब्रह्म प्रति शरीरादेः पुरत्वाद्युक्तावपि, दहराकाशस्थस्य न स्पष्टं ब्रह्मत्वं सिद्धं, अन्यपुरेऽप्यन्यस्य वेश्मसम्भवात्। अन्यवेश्मन्यप्यन्यावस्थानसम्भवाच्च।

प्रकाशः

परिहारान्तरमप्यनुसन्धेयमिति भावेन टीकोक्तपक्षान्तरं मूलोक्तिपूर्वं प्रागुक्तरीत्या ब्रह्मान्वेष्टव्यमित्यस्य लाभेन पुनः "किं तदत्र विद्यते" इत्यन्वेष्टव्यस्वरूपप्रश्नायोगेन परिहारस्य ब्रह्मस्वरूपाविषयत्वादिति प्रतीतानुपपत्तिनिरासेन व्यनक्ति—**छान्दोग्येति**। 'शरीरादेः' इत्यादिपदेन वेश्म गृह्यते।

चन्द्रिका

तथा च दहराकाशस्थं अन्वेष्टव्यमिति सामान्योक्तौ 'किं तत्' इत्यत्राऽऽधेयस्वरूपप्रश्नः। तस्य च सन्निहितं "यावान्वै" इत्याद्युत्तरम्। तत्र सप्तम्यन्तेन हृदयननिमित्तकेन हृदयशब्देनान्तस्स्थत्वलिङ्गेन च "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्" इति अन्तस्स्थत्वयुक्तपूर्ववाक्ये, "किं तदत्र" इति प्रश्नवाक्ये च सप्तम्याऽऽधारत्वेनोक्तस्याऽऽकाशस्य प्रत्यभिज्ञायमानतया हृदयशब्देन भूताकाशमनूद्याऽऽकाशशब्देन प्रथमान्तेन "तल्लिङ्गात्" इति न्यायेन ब्रह्मणि मुख्येन प्रश्नवाक्ये "किं तत्" इति प्रथमानिर्दिष्टाधेयस्य ब्रह्मत्वं विधाय, "यावान्वा अयमाकाशस्तावान्" इत्यनेन च तस्य व्याप्तत्वोक्तेः। अस्मिंश्च पक्षे प्रश्नोत्तरयोः तुल्यविभक्तिताऽप्यस्ति। व्यवहितं "उभे अस्मिन्" इत्यादिकं

प्रकाशः

**हृदयनेति**। हृद्युपपदे "अय गतौ" इत्यस्मात् धातोः पचादित्वादच्प्रत्यये हृद्गतवाचिना हृदयशब्देनेत्यर्थः। हृदयनमप्यन्यस्य स्यादित्यत उक्तं—**अन्तस्स्थत्वलिङ्गेनेत्यादि**। अन्तश्शब्दसमानाधिकृतत्वलिङ्गेनेत्यर्थः। **इति न्यायेनेति**। अत्रापि सर्वाधारत्वरूपब्रह्मलिङ्गश्रवणादिति भावः। पूर्वस्मादप्यस्य पक्षस्य विशेषोऽस्तीत्याह—**अस्मिन्निति**। नन्वेवमाधेयप्रश्नस्य "यावान्" इत्यनेनैवोत्तरितत्वेन "उभे अस्मिन्" इत्यादिकं व्यर्थमित्यत आह—**व्यवहितमिति**। सन्निहितव्यवहितपदे हेतुगर्भे इति भावेन तत्फल-

चन्द्रिका

तु जिज्ञास्यत्वोपपादकम् । न तु तत्र सप्तम्या "किं तदत्र विद्यते" इति प्रश्नवाक्यस्थाधारोक्तिः, न वा "उभे" इत्यादिना प्रथमान्तेन प्रश्नवाक्यस्थाधारप्रतियोगिकाधेयोक्तिः । यथा हि—लोके 'को वाऽन्तर्वर्तते योऽसौ संसेव्यः' इति चोदिते, 'राजाऽन्तर्वर्तते तस्मिन् राष्ट्रं सर्वं समाहितं' इत्युक्ते आधेयप्रश्नस्य सन्निहितं राजेत्यादिकमेवोत्तरम्, व्यवहितं तु राष्ट्रमित्यादिकं संसेव्यत्वोपपादकं, तद्वत् । उक्तं चास्यामेव श्रुतावुपरि "तस्यैतदेव निरुक्तं हृदयमिति । तस्माद्धृदयम्" इति हृदयशब्दस्य हृदयननिमित्तकत्वम् । अस्मिंश्च पक्षे "दहरोऽस्मिन्नन्तर आकाशः" इति वाक्यस्थ आकाशो भूताकाशः, दहरत्वादन्वेष्टव्यं प्रत्याधारत्वाच्च । "यावान्" इति वाक्यस्थस्तु ब्रह्माकाशः, पूर्णत्वात्, अन्वेष्टव्य-

प्रकाशः

माह—**न त्विति** । तद्दृष्टान्तेन व्यनक्ति—**यथा हीति** । 'चोदिते' शङ्किते सति इत्यर्थः । एतेन "स च पृथिव्याद्याश्रयत्वात्" इति टीका विवृता । हृदयशब्दस्य रूढ्या मनःपरत्वाद्योगेन दुर्बलेन कथमेतदर्थग्रहणमित्यतो वाक्यशेषबलात् आज्यादिशब्दवददोष इत्याह—**उक्तं चेति** । ननूक्तमत्र पूर्वोक्तप्रसिद्धाकाशस्यैव इहापि "यावान्वा अयमाकाशः" इत्याकाशश्रुत्या प्रत्यभिज्ञानात् आकाशो न विष्णुरिति, तत्राह—**अस्मिंश्चेति** । बाधकात् प्रत्यभिज्ञा बाध्यत इति भावः । **ब्रह्माकाश इति** । "आ समन्तात्काशनात्, आ समन्तात्कमश्नातीति वा, "अस्मिन् कामाः

चन्द्रिका

त्वात्, द्यावापृथिव्याद्याधारत्वाच्चेति । पक्षद्वयेऽपि "अथ यदिदं" इति वाक्ये ब्रह्मपुरशब्दः शरीरेऽपि वर्तते, "ब्रह्मपुरे सर्वं समाहितं एतत्सत्यं ब्रह्मपुरं" इत्यादौ तु पूर्णत्वात् पुरमिति व्यु-

प्रकाशः

स्समाहिताः" इति वाक्यशेषात् आ समन्तात्कामानश्नातीतिवा" इति च्छान्दोग्यभाष्योक्तव्युत्पत्त्येति ध्येयम् । अत्र प्रकरणे ब्रह्मपुरशब्दस्य बहुधा श्रुतत्वात्, तस्य ब्रह्मरूपैकार्थत्वे "दहरं पुण्डरीकं वेश्म" इत्याद्ययोगात्, शरीरमात्रार्थत्वे च "ब्रह्मपुरे सर्वं समाहितं, नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते तदेतत्सत्यं ब्रह्मपुरं" इत्यादेरयोगात्, पूर्वस्य ब्रह्मपुरशब्दस्य शारीरपरत्वे पश्चात्तनस्य ब्रह्मपरत्वे प्रकृतहानाप्रकृतस्वीकारापातात् विवेकमाह—**पक्षद्वयेऽपीति** । न्यायविवरणपक्षे छान्दोग्यपक्षेऽपीत्यर्थः । तथा च "नष्टेऽपि देहे न नश्यति । अपहतपाप्मत्वादिगुणं च" इत्यादिटीका युक्तेति भावः । तथा च ब्रह्मपुरे हरौ तदाधारतया स्थितं यद्ब्रह्मपुरं शरीरं तदत्र पुण्डरीकं इत्यादियोजना ब्रह्मपुरपदस्य तन्त्रावृत्त्यन्यतराश्रयणेन ध्येयेति भावः । उक्तं च—

बृहत्त्वात् पूर्णकामत्वात् विष्णुर्ब्रह्मपुराभिधः ।
तस्मिन्नस्य पुरं देहः तस्मिन् हृदयमास्थितम् ॥

इत्यादि । नन्वेवं ब्रह्मपुरशब्देनोभयोः प्रकृतत्वे कथमुत्तरत्र एक

चन्द्रिका

त्पत्त्या ब्रह्मण्येवेति द्रष्टव्यम् । अत्र न्यायविवरणे "आकाशपक्ष एवान्वयाभावः" इत्युक्तम् । तद्विवृतं "न चाकाशपक्षेऽन्वयोऽस्ति" इत्यादिटीकायाम् । तत्रायं भावः—हृत्पद्मस्थाकाशस्थं किमिति पृष्टे, आकाशं हृत्पद्मस्थमिति परिहारोऽनन्वितः, वैयधिकरण्यात् । "दहरोऽस्मिन्नन्तर आकाशः" इत्यत्रैवाकाशं हृत्पद्मस्थ-

प्रकाशः

स्यैव ग्रहणमिति चेन्न, द्वयोस्सह निर्देशेऽपि बुद्ध्या विभागेनेकस्यैव ग्रहणोपपत्तेः ।

अथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।

तरन्त्यज्ञः स्थूलधियः........................... ॥

इत्यत्र भागवते जडप्रकृतेरिव ।उक्तं च तात्पर्ये—

बहूनां सह निर्देशे एकयाऽभिधयैव तु ।

तयैवाभिधया तेषां परामृश्यैकमुच्यते ।

इति । अत एव गीतायां "प्रकृतिं पुरुषं च" इत्यत्र पुरुषशब्देन जीवपरमात्मनोः ग्रहणेऽपि "पुरुषः प्रकृतिस्थः" इत्यत्र पुरुषपदेन जीवस्यैव ग्रहणं, तथैव तद्भाष्योक्तेरिति । एवमन्वयानुपपत्तिबाधकं परिहृत्य सुषिरश्रुतिविरोधरूपबाधकमग्रे निरसिष्यन्, परपक्षे "न च" इत्यादिटीकातात्पर्यवर्णनमिषेण बाधकं वक्तुं, तट्टीकां दुर्गमत्वान्मूलोक्तिपूर्वं व्यनक्ति—**अत्रेत्यादिना** । अन्वयादर्शनादित्येतद्द्वेधा व्याचष्टे—**हृत्पद्मेति**। "न हि दहराकाशस्थः"

## चन्द्रिका

मित्युक्तत्वेनाऽऽकाङ्क्षाभावाच्चानन्वयः। अथ "यावान्" इत्यादिवाक्ये द्वितीयस्याकाशशब्दस्य सप्तम्यन्ततामाश्रित्य, दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इत्युच्येत, तदेश्वरवदचिन्त्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशस्थत्वाभावात् "तमेवैकं जानथ" इत्यादिश्रुतौ ब्रह्मण एवान्वेष्टव्यत्वसर्वाधारत्वयोरुक्तत्वेन आकाशे तयोरयोगाच्चानन्वय एव। यदि च पूर्वोक्तहृत्पद्मस्थाकाशानुवादेन तस्यापरिच्छिन्नत्वं विधाय, द्यावापृथिव्यादेरन्वेष्टव्यतोच्येत, तदाऽपि परिच्छिन्ने अपरिच्छिन्नत्वस्यायोग्यत्वादनन्वय एव। किञ्च उक्तरीत्या "यावान्वै" इत्यादेः सन्निहितस्यैवाऽऽधेयप्रश्नोत्तरत्वेनान्वये "उभे अस्मिन् द्यावापृथिवी" इत्यादेरसन्निधानात् अनन्वयः। अपि च "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इत्यन्वेष्टव्ये पृष्टे, "द्यावापृथिवी" इत्याद्यनन्वेष्टव्योक्तेरनन्वय एव।

## प्रकाशः

इति टीकावाक्यं शङ्कापूर्वं विवृणोति—**अथेति**। "तदभावादयोगाच्च" इति हेतुद्वयं टीकोक्तं स्फुटयति—**तदेति**। आदिपदेन "यस्मिन् द्यौः" इत्यादिश्रुताविति गृह्यते। "नापि" इत्यादिटीकाग्रन्थं योजयति—**यदीति**। "दहरस्य व्याप्तत्वायोगात्" इत्युपलक्षणमिति भावेनाह—**किञ्चेति**। **उक्तेति**। 'यथा हि लोके' इति प्रागुक्तरीत्येत्यर्थः। मुख्यत इति हेतुं व्यनक्ति—**अपि चेति**।

चन्द्रिका

तमेवैकं जानथेति वाक्ये द्युभ्वादिकं प्रति ।

आधारस्य ज्ञेयतोक्ता न तु द्युभ्वादिकस्य हि ॥

किञ्च "तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं" इत्यत्रैकत्वस्य विधेयविशेषणत्वेन पश्वेकत्ववत् विवक्षितत्वात्, वावेत्यवधारणाच्च, एकस्य जिज्ञास्यत्वं भाति। तच्च द्यावापृथिव्यादीनामनेकेषां अन्वेष्टव्यत्वेऽनन्वितं स्यात्। किञ्च हृत्पद्मस्थाकाशस्थस्य जडत्वे शरीरपुण्डरीकयोः पुरत्ववेश्मत्वोक्तिरनान्विता,

पुरत्वं वेश्मता चैव चेतनं प्रति हि स्वतः ।

पुरं वा वेश्म वा दृष्टं न हि लोके जडं प्रति ॥

प्रकाशः

अनन्वेष्टव्यत्वं असिद्धमित्यत आह—**तमेवेति**। हिर्हेतौ, प्रसिद्धौ वा। एतदप्युपलक्षणं मत्वाऽऽह—**किञ्चेति**। **पश्वेकत्ववदिति**। उक्तमधिकरणशरीरं प्राक् छन्दोधिकरणे। "पशुना यजेत" इत्यत्रैकत्वं यथा विधेयकरणकारकविशेषणत्वाद्विवक्षितं, तथेहापि 'तत्' इत्येकवचनप्राप्तमेकत्वमपीत्यर्थः। कुत इत्यत आह—**पुरत्वमिति**। 'हि' यस्मादेवं तस्मात्तदुक्तिरनन्वितेति। 'चेतनं प्रत्येव' इत्यन्वयः। एवमाकाशजीवपूर्वपक्षौ निरवकाशभगवल्लिङ्गादिना निरस्य, अनन्वयबाधकं च अन्वयोपपादनेन निराकृत्य, परपक्षे अनन्वयबाधकं चोक्त्वा, अधुना यज्ञविपूर्वपक्षवादिनोक्तं स्वसाधकं परबाधकं, तत् "अन्यार्थश्च परामर्शः" इति सूत्रभाष्यटीका-

चन्द्रिका

यच्चोक्तं "एष आत्मा" इति वाक्ये एतच्छब्दः परज्योतिःपरश्चेन्नपुंसकलिङ्गः स्यादिति, तन्न, यतः,

विधेयात्मापेक्षयैतच्छब्दे पुल्लिङ्गता मता।
शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादिकेष्विव ॥

यद्यपि "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिः" इति पूर्ववाक्ये प्रथमान्तेन पुल्लिङ्गेनैतच्छब्देन जीवः प्रस्तुतः, परमात्मा तु द्वितीयान्तेन नपुंसकलिङ्गेन परज्योतिश्शब्देन। तथाऽपि "एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" इत्यत्र 'एषः' इति शब्देन ब्रह्मैव ग्राह्यं, निरवकाशात्मश्रुतेरमृतत्वादिलिङ्गाच्च। न ह्येतच्छब्देन परामर्शे समानविभक्तिकेन तच्छब्देन प्रस्तावः प्रयोजकः, 'चैत्र आगतस्तं भोजय' इत्यादौ तददर्शनात्। किन्तु प्रस्तावमात्रम्। पुल्लिङ्गं तु विधेयात्मापेक्षं "सा प्रकृतिर्जलस्य" इत्यत्र तच्छब्दे स्त्रीलिङ्गतावत्, "णेरणौ यत्कर्म णौ चेत्स कर्ता" इत्यत्र तच्छब्दस्य पुल्लिङ्गतावच्च, एतस्मिन्नेव प्रकरणे "एतत्सत्यं ब्रह्मपुरं एष आत्मा" इत्यत्र 'एषः' इत्यस्य पुल्लिङ्गतावत्, अस्मिन्नेव वाक्ये "एतदमृतमभयमेतद्ब्रह्म" इत्यत्रैतच्छब्दस्य नपुं-

प्रकाशः

कृतविवरणेन परिहरति—यच्चेति। 'यतः' इत्यस्य श्लोकेनान्वयः। विशेषशङ्कानुवादपूर्वं श्लोकं व्याचष्टे—यद्यपीति। 'प्रस्तावः' प्रकृतत्वम्। हृत्पद्मगताकाशस्थो विष्णुरित्युपेत्य, तस्य सर्वाधारत्वाङ्गीकारे

---

* 'विधेयापेक्षया चैतच्छब्दे' इत्यपि पाठः.

चन्द्रिका

सकतावच्च । न च सुषिरस्य सर्वाश्रयत्वश्रुतिविरोधः,

सुषिरस्थब्रह्मसंस्थं सुषिरस्थमितीर्यते ।
मञ्जूषास्थोऽपि हि मणिर्गेहस्थ इति गीयते ॥

"सप्तदशारत्निर्वाजपेयस्य यूपः" इत्यत्र वाजपेयसम्बन्धिपशुसम्बन्धिनोऽपि यूपस्य वाजपेयसम्बन्धव्यपदेशवच्च सुषिराश्रिताश्रितस्य सुषिराश्रितत्वव्यपदेशो युक्त एवेति ॥

अत्राद्ये सूत्रे स्वपक्षसाधनाय विषयवाक्ये सन्निहितात्मश्रुतेरपहतपाप्मत्वादिलिङ्गानां चोक्तिः ।

प्रकाशः

प्रागुक्तं बाधकान्तरमप्यनूद्य अपाकरोति—न चेति । 'हि' यस्मात्तस्मान्न च, इति पूर्वेणान्वयः । मञ्जूषेति । गेहगतमञ्जूषास्थ इत्यर्थः । श्लोकोक्तो लौकिकदृष्टान्तः स्फुट इत्युपेक्ष्य, तदुपलक्षणमिति भावेन वैदिकदृष्टान्तोक्तिपूर्वं पूर्वार्धं व्यनक्ति—सप्तदशेति । प्राक् विवृतमधिकरणशरीरं जिज्ञासाधिकरणे । यथा साक्षात्परम्परासाधारण्येन सम्बन्धमात्रे षष्ठ्यनुशासनात् 'देवदत्तस्य नप्ता' इत्यादाविव परम्परया वाजपेयसम्बन्धिनो यूपस्य वाजपेयसम्बन्धव्यपदेशः, तथाऽत्रापीत्यर्थः । न चायं न्यायोऽङ्गाङ्गिभावविषयः, तथैव रेवत्यधिकरणे द्वितीयेऽभिधानादिति वाच्यं, अत्रापि सुषिराधेयतया श्रुतं सर्वं तदाधेये हरौ युक्तमित्यङ्गाङ्गिभावतुल्यत्वादितिभावः ॥

**अत्राऽऽद्य इति** । "दहर उत्तरेभ्यः" इत्यत्र । यद्यपि "—" य आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यादिभ्यः उत्तरेभ्यो

चन्द्रिका

तत्र च दहरशब्दः सप्तम्यन्तः, न तु परमत इव प्रथमान्तः ।

प्रकाशः

गुणेभ्यः" इति भाष्ये, "गुणश्रवणात्" इति टीकायां च लिङ्गान्येवोक्तानीति भाति। तथाऽपि "य आत्मा" इत्यंशस्याप्युदाहृतत्वात्, प्रथमश्रुतात्मत्यागे हेत्वभावात्, स्पष्टत्वेन भाष्यादौ अनुल्लेखसम्भवात्—**आत्मश्रुतेरित्युक्तम्**। गतिसूत्रे श्रुतिलिङ्गयोर्द्वयोरप्युक्त्या तस्य प्राथम्यनिरासाय—**विषयवाक्ये सन्निहितेत्युक्तम्**। ननु सूत्रे दहरो ब्रह्मेति भाति। कथं दहरस्थो ब्रह्मेत्युक्तमित्यत आह—**तत्रेति**। निर्देशस्येत्थमपि सम्भवात्, "य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते"

दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः ।

"य एषोऽन्तर्हृदय आकाशस्तस्मिन् अयं पुरुषः" "यो वेद निहितं गुहायां परमे व्योमन्" इत्यादिश्रुत्यन्तरबलात्, प्रथमान्तपक्षे बाधकभावाच्चेति भावः। नन्वेवं 'आकाश उत्तरेभ्यः' इत्येव कस्मान्न सूत्रितं, शब्दलाघवादपि प्रतिपत्तिलाघवस्य ज्यायस्त्वात्, मैवं, वाक्यविशेषद्योतनार्थत्वात्, दहरपदस्य प्राथम्यात् "अल्पश्रुतेरिति चेत्" इति शङ्कोत्थानार्थत्वात्, "तत्रापि दहं गगनं" इति समाख्यारूपवाक्यविशेषस्य "प्रसिद्धेश्च" इत्यत्रोपादानमिति सूचनार्थत्वाच्च दहरपदस्यैवोक्तिरिति। नन्वेवं तर्हि सूत्रे यथाश्रुतश्रौतपदानुकरणं न प्राप्तं स्यात्, श्रुतौ दहर इति प्रथमान्तत्वादिति चेत्,

चन्द्रिका

द्वितीये व्यवहितब्रह्मश्रुतेः सुप्तगम्यत्वादिलिङ्गस्य चोक्तिः।

प्रकाशः

न, "तस्मिन् यदन्तः" इति निर्देशेन तस्य श्रुतावपि सप्तम्या निर्देशात्। 'तस्मिन्' इत्येतत्पुडरीकपरामर्शि, न तु दहराकाशपरामर्शि, येन श्रुतौ दहरपदं सप्तमीनिर्दिष्टं स्यादिति तु, परमतप्रक्रियाखण्डने निरसिष्यते। द्वितीय इति। "गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च" इत्यत्र। व्यवहितेति। 'विषयवाक्ये' इत्यनुषङ्गः। श्रुतौ "अहरहर्गच्छन्त्य एतं ब्रह्मलोकं" इत्युक्त्या तत्क्रमानुरोधेन, "द्वन्द्वे घि" इति स्मृत्यनुरोधेन च सूत्रे गतेः पूर्वनिर्देशेऽपि, प्राधान्यादुक्तिसौकर्याय च "ब्रह्मश्रुतेः सुप्तगम्यत्वादिलिङ्गस्य च" इति व्युत्क्रमेणानुवादः। टीकायां "तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति। अनृतेन हि प्रत्यूढाः। स वा एष आत्मा हृदि। तस्यैतदेव निरुक्तꣳ हृदयम्" इति सुप्तप्रजाप्राप्यत्वव्यपदेशात्, हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या तदन्तर्गते ब्रह्मशब्दश्रवणाच्च विष्णुरेव दहरस्थ इति गतिशब्दौ व्याख्याय, "तथा हि दृष्टं लिङ्गं च" इत्यंशस्य "अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरम्मदीयं सरः तदश्वत्थं सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयं" इत्यरण्याख्यसुधासमुद्राश्रयलोकवत्त्वरूपलिङ्गं च दृष्टमित्येकमर्थमुक्त्वा,

चन्द्रिका

अत्र यदा, सौत्रेण लिङ्गशब्देन ब्रह्मलोकशब्दस्य विष्णुलोकपरत्वे अरण्याख्यसुधासमुद्राश्रयलोकवत्त्वरूपलिङ्गोक्तिः, तदा तस्य हेतुसाधकहेतुत्वात् गतिशब्दयोरिव हृत्पद्मस्थस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतुत्वाभावात् तस्य लिङ्गशब्देन पृथगुक्तिर्युक्ता। यदा तु, लिङ्गशब्देन प्रधानसाध्य एव अरण्याश्रयलोकवत्त्वरूपलिङ्गोक्तिस्तदाऽपि "अहरहर्गच्छन्त्य एतं ब्रह्मलोकं" इत्यस्यानन्तरं "स एष आत्मा हृदि" इति श्रवणात् गतिशब्दयोर्हृत्पद्मस्थनिष्ठता सिद्धेति तौ

प्रकाशः

"अथवा" इत्यादिना ब्रह्मलोकशब्दस्य सत्यलोके प्रसिद्ध्या प्रागुक्तगतिब्रह्मशब्दरूपहेत्वोरसिद्ध्यापत्तेः, हृत्पद्मे प्रागुक्तब्रह्मलोकपदोक्तस्य विष्णुलोकत्वसाधकत्वेन हृत्पद्मस्थस्य विष्णुत्वसाधकगतिब्रह्मशब्दाख्यहेतुसाधकपरतया अर्थान्तरमुक्तम्। तत्पक्षद्वयाभिप्रायव्यक्तिपूर्वं, सूत्रे हेतुत्रयस्य 'गतिशब्दलिङ्गेभ्यः' इति निर्देष्टव्यत्वे अन्यथा निर्देशो न युक्त इति चोद्यनिरासाय सूत्रविन्यासं समर्थयते—अत्रेति। अरण्याख्येति। "अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके" इत्युत्तरवाक्ये अरण्याख्यसुधासमुद्राश्रयत्वलिङ्गेन ब्रह्मलोकशब्दस्य विष्णुलोकार्थकत्वेन अवधृतस्य इह "ब्रह्मलोकं न विन्दन्ति" इति सुप्तगतिपरवाक्ये प्रयोगात् अत्रत्यब्रह्मलोकशब्दस्य विष्णुलोकपरत्वे अरण्याश्रयलोकवत्त्वरूपलिङ्गोक्तिरित्यर्थः। **हेतुसाधकेति**। गतिब्रह्मशब्दरूपहेतुसाधकेत्यर्थः। 'किन्तु साध्या'

चन्द्रिका

द्वन्द्वेनोपात्तौ । अरण्याश्रयलोकवत्त्वालिङ्गस्य तु न सा सिद्धा, "अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके" इत्यस्य सन्निधौ हृत्पद्मस्थस्यानुक्तेः, किन्तु साध्येति लिङ्गशब्देन तस्य पृथगुक्तिर्युक्ता । 'तथा दृष्टं' इत्यनेन तु यथा गतिर्हृत्पद्मस्थनिष्ठा दृष्टा, तथा लिङ्गमपि तन्निष्ठं दृष्टं, हृत्पद्मस्थस्यावासत्वेन तल्लोके हृत्पद्मे "एतं ब्रह्मलोकं" इति प्रयुक्तस्य ब्रह्मलोकशब्दस्यारण्याश्रयलोकेऽपि प्रयोगादिति हृत्पद्मस्थनिष्ठता साधिता । एवमरण्याश्रयलोकवत्त्वस्य हृत्पद्मस्थनिष्ठत्वेन पक्षधर्मतायां सिद्धायां, साध्येन विष्णुत्वेन व्याप्त्युपपादनाय भाष्योक्तस्मृतिषु या विष्णुलिङ्गत्वप्रसिद्धिस्तद्द्योतकः सूत्रे हिशब्दः । तृतीये तु "स सेतुर्विधृतिः" इति स्वप्रकरणस्थधृतिरूप-

प्रकाशः

इत्युक्तसाधनप्रकारं सूत्रखण्डविवरणेनाह—तथेति । टीकायां 'हृत्पद्मस्थस्य अरण्याश्रयलोकवत्त्वरूपालिङ्गश्रवणेऽपि कुतोऽयं विष्णुरिति चेत्तस्य च विष्णुलोकलिङ्गत्वादिति हिशब्दाभिप्रायमाह—"अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ" इति भाष्येण' इत्युक्तम् । तद्विवृण्वन् सौत्रहिशब्दार्थमाह—एवमिति । "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" इति सूत्रटीकार्थं निष्कृष्य व्यनक्ति—तृतीये त्विति । "य एषः" इति वाक्योक्तिस्तस्य हृत्पद्मस्थविषयत्वसूचनाय । एतेन, 'गतिधृतिशब्देभ्यः' इति निर्देशेन 'लिङ्गं च' इत्यनेन वाऽस्योपादानसम्भवे योगविभागो विफल इति

चन्द्रिका

लिङ्गस्य, "एष सेतुर्विधरणः" इति धृतियुक्तायाः "य एषोऽन्तर्हृदय आकाशस्तस्मिन्" इति वाजसनेयश्रुतिसमाख्यायाश्चोक्तिः। समाख्यायाः विष्णुविषयत्वोपपादनाय तु महिमरूपविष्णुलिङ्गोक्तिः। अत्र चास्य भूताधिपतित्वादिविष्णुमहिम्नः अस्मिन् दहराकाशस्थे वस्तुनि वाजसनेयशाखायां उपलब्धेश्चेति चशब्दो भिन्नक्रमः। चतुर्थे तैत्तिरीयश्रुतिसमाख्यामात्रोक्तिः। पञ्चमे स्वपक्षे बाधके परपक्षसाधके च शङ्किते, परपक्षे तावदपहतपाप्मत्वाद्यसम्भवरूप-

प्रकाशः

प्रत्युक्तम्। समाख्यापरत्वस्यापि सत्त्वात्। एतेनैव च, अरण्याश्रयलोकवत्त्वलिङ्गापेक्षया धृतिरूपलिङ्गस्य पूर्ववाक्यगतत्वात् 'लिङ्गं च' इत्यतः प्रागेव अस्य निर्देशः कार्य इत्यपि निरस्तम्। 'लिङ्गं च' इत्यस्य पूर्वहेतुसाधकतारूपत्वस्यापि सत्त्वाच्चेति। एवं तर्हि समुच्चयलिङ्गान्तरस्यानुक्तेः "धृतेश्च" इति चशब्दोऽस्मिन् पक्षे न युक्त इत्यतः 'अस्मिन्' इत्यस्य अर्थद्वयं वदन् चशब्दाभिप्रायमाह—अत्र चेति। 'चतुर्थे' "प्रसिद्धेश्च" इत्यत्र।

दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्।

तत्रापि दह्रं गगनं विशोकः तस्मिन् यदन्तः तदुपासितव्यम्॥

इति विष्णोः हृत्पद्मस्थत्वप्रसिद्धेश्चेत्युक्तत्वादिति भावः। मात्रपदेन लिङ्गं व्यावर्त्यते, तेन पूर्वानन्तर्यमिति भावः। 'पञ्चमे' "इतरपरामर्शात्स इति चेन्नासम्भवात्" इत्यत्र। "एष आत्मा" इति

चन्द्रिका

बाधकोक्तिः। षष्ठे जीवेऽपि मुक्तिदशायां अपहतपाप्मत्वादिसम्भवं शङ्कित्वा, स्वतोऽपहतपाप्मत्वाद्यसम्भवात् बाधकतादवस्थ्यमित्युक्तिः। सप्तमे, पञ्चमे शङ्कितस्य जीवपरामर्शकैतच्छब्दरूपस्य स्वपक्षबाधकस्य परपक्षसाधकस्य च परिहारोक्तिः। अष्टमे तु दहरस्थत्वलिङ्ग-

प्रकाशः

जीवपरामर्शात् स एव दहरस्थ इति शङ्किते, अपहतपाप्मत्वादीनां जीवेऽसम्भवादित्यर्थोक्तेरिति भावः। 'षष्ठे' "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यत्र। 'उत्तराच्चेत्' इत्यंशेन "स तत्र पर्येति जक्षन्" इत्युत्तरवचनात् जीवेऽपहतपाप्मत्वादीनां भाविभावाभिप्रायेण सम्भवं शङ्कित्वा, 'आविर्भूत' इत्यंशेन परमेश्वरं गुणप्रदातृतया "परं ज्योतिः" इति पूर्ववाक्येऽभिधाय "स तत्र पर्येति" इत्यादिना परमेश्वरप्रसादेन आविर्भूतगुणस्वरूपस्यैवोत्तरवाक्ये कथनादिति व्याख्यानादिति भावः। "पूर्वादिभ्यो नवभ्यो वा" इति स्मात्स्मिनोः विकल्पितत्वात् 'उत्तरात्' इति सौत्रनिर्देशः साधुः। 'सप्तमे' "अन्यार्थश्च परामर्शः" इत्यत्र। "इतरपरामर्शात्स इति चेत्" इति शङ्कितस्य, यं ज्योतिराख्यं भगवन्तं अभिसम्पद्य जीवः स्वेन रूपेणाभिनिष्पद्यते, स एष आत्मेति परमात्मानमेव 'एषः' इति परामृश्य, तस्यात्मत्वोक्त्याऽन्यार्थत्वेन परामर्शस्योपपत्तेरुक्तत्वात्, पुंलिङ्गतायाश्च समर्थनादिति भावः। 'अष्टमे' "अल्पश्रुतेरिति चेत्तदुक्तम्" इत्यत्र। दहराकाशस्थत्वेन अल्पस्थानस्थि-

चन्द्रिका

रूपे स्वपक्षबाधके परपक्षसाधके च शङ्किते, पूर्वोक्तपरिहारस्मारणम्। न च स्मारणं व्यर्थं, युक्तं व्योम्नोंऽशतोऽल्पौकस्त्वं, अंशस्यापूर्णत्वात्, ब्रह्मणि त्वंशोऽपि पूर्ण इत्यधिकाशङ्कायां, ब्रह्मणोऽचिन्त्यशक्तित्वात् "एष म आत्माऽन्तर्हृदये ज्यायान्" इत्यादिश्रुतौ हृदयस्थस्यांशस्यैव सर्वज्यायस्त्वोक्तेः "गुणाश्श्रुतास्सुविरुद्धाश्च" इत्यादिश्रुतेश्चेत्यधिकपरिहारार्थत्वादिति सूत्रक्रमः॥

अत्रान्यैः कैश्चिच्चोक्तं--

प्रकाशः

तत्वमयुक्तमित्याशङ्क्य, "अर्भकौकस्त्वात्" इति सूत्रे "व्योमवत्" इत्युक्तस्य सर्वगतस्याप्यल्पस्थानस्थत्वरूपपरिहारस्य स्मारणमित्यर्थः। प्रागुक्तस्मारणेऽभ्यधिकाशङ्कातत्परिहारयोरुक्तिपरां "न व्योमवदीश्वरस्य" इत्यादिटीकां विवृणोति--**न चेति। अंशोऽपि पूर्ण इति।** "विश्वतश्चक्षुः" इत्यादेरिति भावः। विवृतं च अवयवस्य पूर्णत्वमानन्दमयनये॥

**अत्रान्यैः कैश्चिच्चेति।** अन्येषामयं भावः--"अथ यदिदमस्मिन् ब्रह्मपुरे" इति वाक्ये श्रुतो दहराकाशः किं भूताकाश उत जीवोऽथ ब्रह्मेति संशये, आकाशशब्दस्य भूते रूढत्वात्, "यावान्" इति वाक्ये हृत्पुण्डरीकावच्छिन्नस्याऽऽकाशस्य बाह्याकाशेन उपमितत्वात्, द्यावापृथिव्यादिसर्वाधारत्वस्य उपचारेण उपपत्तेः भूताकाश एव दहराकाश इति एकः पक्षः। अयं च, आकाश-

प्रकाशः

ब्दस्य "तल्लिङ्गात्" इत्यादौ रूढित्यागस्य आश्रितत्वात्, वाक्यशेषगतबहुतरश्रुतिलिङ्गादिविरोधात्, गत्यन्तरसम्भवे अगतिकस्य स्वेनैव स्वस्योपमेयत्वस्यायोगाच्च भूतपक्षस्तुच्छ इति जीव एव दहर इति पक्षान्तरमुक्तम्। तथा हि—जीवं प्रति देहस्य ब्रह्मपुरशब्दोक्तपुरत्वं युज्यते, जीवस्य परिच्छिन्नत्वेन 'ब्रह्मपुरे' इति सप्तमीनिर्दिष्टाधारं प्रति आधेयत्वसम्भवात्। देहस्य जीवकर्मार्जितत्वेन तत्सम्बन्धविशेषसद्भावात् जीवस्य ब्रह्मणः पुरमिति षष्ठ्युक्तसम्बन्धोपपत्तेः। ब्रह्मणस्तु स्वमहिम्नि प्रतिष्ठितस्य तदाधेयत्वाभावात्तदार्जककर्मशून्यत्वाच्च देहस्य तदीयताव्यपदेशायोगात्। 'ब्रह्मपुरे' इति ब्रह्मशब्दस्य देहबृंहणादिना जीवेऽप्युपपत्तेः। नीरूपत्वादिना सादृश्यनिमित्तेन गौणस्याऽऽकाशशब्दस्य जीवेऽप्युपपत्तेश्च। नच राजपुरे स्वगृहे चैत्र इव जीवस्वामिके देहाख्यपुरे स्ववेश्मनि हृत्पुण्डरीके आकाशाख्यं ब्रह्म वर्ततामिति वाच्यं, "पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशः" इत्यत्र 'अस्मिन्' इति निर्दिष्टाधारत्वस्य आधेयाकाङ्क्षायां ब्रह्मपुरशब्दसन्निधापितपुरस्वामिनो जीवस्यैवाऽऽधेयत्वेन अन्वयादिति। तदुक्तं भामत्यां—

आधेयत्वाद्विशेषाच्च पुरं जीवस्य युज्यते।
देहो न ब्रह्मणो युक्तः हेतुद्वयवियोगतः॥

इति। एवं प्राप्ते ब्रह्मप्रातिपदिकार्थस्य विशेष्यस्य प्रधानतया तद-

प्रकाशः

नुसारेण अप्रधानषष्ठ्यर्थस्य सम्बन्धस्य नेयत्वात्, ब्रह्मणो देह एवोपलब्ध्या तस्य देहेन सहोपलब्धिद्वारकसंबन्धसंभवादाधारपर-सप्तम्या अपि प्रथमश्रुतब्रह्मशब्दानुसारेण ब्रह्मोपलब्ध्याधारपरत्वात्, ब्रह्मपुरस्य जीवपरत्वेऽपि वा राजपुरे चैत्रसद्मवत् जीवपुरे ब्रह्म-सद्महृत्पुण्डरीकसम्भवात्, प्रागुक्तसन्निधानस्य चोत्तरवाक्यगतब्रह्मलिङ्गैर्बाधसम्भवात् दहरो ब्रह्मेति सिद्धान्त इति। उक्तं च भामत्यां—

उपलब्धेरधिष्ठानं ब्रह्मणो देह इष्यते।
तेनासाधारणत्वेन देहो ब्रह्मपुरं भवेत्॥

इति॥ केषांचिद्दहराकाश एव पूर्ववत्संशये आकाशशब्दस्य भूते प्रसिद्धेः, "तस्मिन्यदन्तः तदन्वेष्टव्यं" इत्यत्यस्यैव अन्वेष्टव्य-त्वोक्तेः, दहरस्य ब्रह्मत्वायोगाच्च भूताकाश इति एकः पूर्वः पक्षः। सम्प्रसादवाक्ये जीवप्रतीतेः, तस्यैव चोत्तरत्रेन्द्राविरोचन-योर्हिरण्यगर्भसंवादाख्यायिकायां "य आत्माऽपहतपाप्मा" इत्या-दिनाऽपहतपाप्मत्वादिप्रतीतेश्च जीव इति द्वितीयः। एवं प्राप्ते, "किं तदत्र विद्यते" इति प्रश्ने "यावान्वै" इत्यादिना "एतत्सत्यं ब्रह्मपुरं" इत्यन्तेन दहरस्यातिमहत्त्वसर्वाधारत्वाद्युक्त्वा "तस्मिन् कामाः समाहिताः" इत्याकाशान्तर्वर्तिनः कामा अन्वेष्टव्या इति प्रतिपाद्य, कोऽयं दहर इति निर्दिष्टः, के तदाश्रया अन्वेष्टव्या इत्य-पेक्षायां "एष आत्माऽपहतपाप्मा" इत्यारभ्य "सत्यसङ्कल्पः" इत्य-

चन्द्रिका

दहराकाशस्य भूताकाशत्वे जीवत्वे वा प्राप्ते, ब्रह्मत्वेन सिद्धान्तः। सूत्रे दहरपदं च प्रथमान्तं, न तु सप्तम्यन्तमिति। तन्न,

प्रकाशः

न्तेन आकाशशब्दनिर्दिष्टः परमात्मा, तदाश्रिता अन्वेष्टव्याः कामाः अपहतपाप्मत्वादय इत्युक्त्वा "तद्यदात्मानमनुविद्य" इत्यादिना "कामचारो भवति" इत्यन्तेन अन्वेष्टव्याधारतया प्रतिज्ञाताकाशः परमात्मा, तद्विशेषणीभूता अन्वेष्टव्याः कामाः अपहतपाप्मत्वादयः इत्युपसंहाराच्च न भूताकाशो दहरः। नापि जीवः, प्रजापतिवाक्ये कर्मपरवशतया जाग्रदाद्यवस्थाभिः तिरोहितापहतपाप्मत्वादिगुणकस्य परमात्मोपसत्तिमतः तत्प्रसादाविर्भूतगुणकस्य प्रत्यगात्मनः प्रतिपादितत्वेऽपि, पूर्ववाक्ये अतिरोहितनिरुपाधिकापहतपाप्मत्वादिगुणकत्वेन, जीवेऽसम्भाव्यमानजगद्विधारणसर्वचिदाचिद्वस्तुनियमनाद्यनन्तगुणकत्वेन च दहराकाशस्य प्रतिपन्नतया दहरो ब्रह्मेति सिद्धान्त इति। अत्रावान्तरवैलक्षण्यमल्पं विहाय दूष्यांशमात्रं साधारण्येनानुवदति—दहरेति। यदवादि भामत्यां, भूतपक्षस्तुच्छ इति, तदयुक्तं, "तल्लिङ्गात्" इत्यत्र निरवकाशब्रह्मलिङ्गेन रूढित्यागेऽपि, इह प्रागुक्तनिरवकाशसुषिरश्रुतिरूपसमाख्याविरोधेन वाक्यशेषस्थापहतपाप्मत्वादिधर्माणां पूर्वं चन्द्रिकोक्तदिशा भूताकाशे सावकाशत्वेन वैषम्यात्। बाह्याभ्यन्तरत्वोपाधिना आकाशभेदेन उपमानसम्भवाच्च। अकाशशब्दस्य जीवे अस्वारस्याच्च।

चन्द्रिका

दहराकाशस्य ब्रह्मत्वे "तस्मिन्यदन्तः" इति दहराकाशस्थस्यान्वेष्टव्यत्वाद्युक्तचयोगात् । अत्रोक्तं परैः—"तस्मिन्यदन्तः" इति तच्छब्देन हृत्पुण्डरीकमेव परामृश्य तदन्तर्गतदहरस्यैवान्वेष्टव्यत्वाद्युच्यत इति । तन्न, 'तस्मिन्' इत्यस्य सन्निहितदहरपरित्यागेन व्यवहितपुण्डरीकपरत्वायोगात् । अत एव सप्तमे चातुर्मास्यस्य तृतीयपर्वणि साकमेधीये "एतद्ब्राह्मण एककपालः" इति श्रुतस्यैतच्छब्दस्य व्यवहितवैश्वदेविकैककपालत्यागेन सन्निहितवारुणप्रघा-

प्रकाशः

यदपि, मतद्वयेऽप्याकाशस्य जीवत्वेन पूर्वपक्षान्तरकणं, तदप्यसाधु, भूतेषु रूढस्याऽऽकाशशब्दस्य जीवे अस्वारस्यात्, सम्प्रसादवाक्यादावुत्तरत्र अपहतपाप्मत्वादिना जीवप्रतीत्यादिना पूर्ववाक्ये तस्य ग्राह्यत्वेऽप्याकाशान्तर्वर्तित्वेनापि जीवग्रहणसम्भवे दहराकाशत्वेनैव तस्य ग्रहणे प्रमाणाभावात् । "य एष आत्मा" इत्याद्युत्तरवाक्ये दहराकाशस्थस्यैव परामर्शसम्भवेन दहरस्य परामर्शे प्रमाणाभावाच्चेत्यादिपूर्वपक्षदोषस्य स्फुटत्वात् तमुपेक्ष्य सिद्धान्तांशमात्रं मतद्वयेऽपि दूषयति—दहराकाशस्येति । "तस्मिन्यदन्तः" इत्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलङ्घ्य हृत्पुडरीकं परामृशतीति भामत्युक्तं अनुवदति—अत्रोक्तं परैरिति । अत एवेति । सन्निहितत्यागेन व्यवहितपरत्वायोगादेवेत्यर्थः । सप्तमस्याऽऽद्यपादे "एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापर्यावृत्तिदर्शनादवभृथे

प्रकाशः

च सकृदुद्धृचवदानस्य वचनात्" इत्यन्तिमेऽधिकरणे, चातुर्मास्याख्ये कर्मणि चत्वारः पर्वशब्दिताः कर्मसमुदाया वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामकाः। तत्र वैश्वदेवे द्यावापृथिव्य एककपालः श्रुतः। वरुणप्रघासेष्वपि काय एककपालः। तयोः पृथक् ब्राह्मणं समाम्नातम्। साकमेधेषु वैश्वदेवकर्मण एककपालः। तत्र साकमेधेषु श्रूयते "एतद्ब्राह्मण एककपालः" इति। तत्र साकमेधीयैककपाले किं वैश्वदेविकैकपालब्राह्मणस्यातिदेशः उत वारुणप्रघासिकस्येति संशये, वैश्वदेवे बहवो धर्माः आविः प्रष्ठः कार्य इत्यादयः प्रकृतित्वात्, वारुणप्रघासेषु विकृतित्वादल्पा एव धर्मविशेषाः, "शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति" इत्यादयः उपदिष्टाः, अतो बह्वनुग्रहाय वैश्वदेविकस्येति प्राप्ते, वारुणप्रघासिकस्य सन्निहितत्वाद्वारुणप्रघासिकैकपालब्राह्मणातिदेश इति सिद्धान्तितम्। तत्र यथैतच्छब्दस्य व्यवहितपरत्वपरित्यागेन सन्निहितपरत्वं, तथाऽत्रापि न्याय्यमिति भावः। यद्यपि "यच्चातुर्मास्यैः यजते" इत्युत्पत्तिवाक्यगतबहुत्वस्य विवक्षितत्वात् 'चातुर्मास्यानां' इति वाच्यं, तथाऽपि सामान्याभिप्रायेणैकवचनम्। एतेन, वाक्यशेषस्थबहुतरश्रुतिलिङ्गानुरोधेन दहराकाशस्यैवान्वेष्टव्यत्वावश्यम्भावात् बह्वनुग्रहाय सन्निधित्यागो युक्तः, 'लिङ्गैस्सन्निधिर्बाध्यते' इति कल्पतरूक्तेरिति प्रत्युक्तम्। तथात्वे साकमेधीयैककपालेऽपि

चन्द्रिका

सिकैककपालपरत्वमुक्तम्। दहरस्य हृत्पुण्डरीकस्थतायाः "दहरोऽस्मिन्"

प्रकाशः

बह्वनुग्रहाय वैश्वदेविकैककपालब्राह्मणातिदेश एव स्यात्, नतु वारुणप्रघासिकैककपालब्राह्मणातिदेशः। स च नेत्युक्तम्। तथा च तन्न्यायविरोध इति। किञ्च "एष आत्माऽपहतपाप्मा" इत्यादिवाक्यशेषे न दहराकाशपरामर्शः, येन बह्वनुग्रहाय सन्निधित्यागः, किंतु "किं तदत्र विद्यते" इति दहराकाशस्थाधेये पृष्टे "यावान्वै" इति सन्निहितवाक्ये हृदयशब्देन हृद्ययननिमित्तकेन दहराकाशमनूद्य, आकाशशब्देन प्रथमान्तेन आधेयस्य ब्रह्मत्वं विधाय, "यावान्" इत्यनेन च तस्य व्याप्तत्वं चोक्त्वा, "उभे अस्मिन्" इत्यादिना सर्वाधारत्वं च तस्योक्त्वा, "एष आत्माऽपहतपाप्मा" इत्यादिवाक्यशेषे व्याप्ताकाशशब्दितस्य दहराकाशस्थस्य सर्वाधारत्वेनोक्तस्य ब्रह्मण एव परामर्शेन आत्मत्वापहतपाप्मत्वाद्युक्तिरिति प्रागेव व्यक्तमेतत्। ननु तत्र न सन्निहितत्वमात्रेण वारुणप्रघासिकस्य परामर्शः, किन्तु वैश्वदेविकधर्माणां "स्वरसाभैककपालामिक्षं च लिङ्गदर्शनात्" इति सप्तमस्थतृतीयपादीयदशमाधिकरणेऽन्यत्र श्रुतैककपालस्य वैश्वदेविकैकपालविकारत्वमित्युक्त्या तन्न्यायेनैव सिद्धेः "एतद्ब्राह्मणः" इति वचनानर्थक्यप्रसङ्गादपीति चेत्, तर्हीहाप्युक्तसुषिरश्रुतिविरोधवाक्यानन्वयादेरुक्तत्वाद्वक्ष्यमाणबाधकाच्च तथाऽस्तु। किञ्चेहापि "तस्मिन् यदन्तः" इति वाक्यावैयार्थ्यायैव सन्निहितदहराकाशपरत्वमुपेयमिति भावेनाह—**दहरस्येति**।

चन्द्रिका

इत्यत्रैवोक्तत्वेन पुनस्तदुक्तिवैयर्थ्याच्च । "यदन्तः" इत्यत्र यच्छब्दस्य, "तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं" इत्यत्र तच्छब्दस्य च दहर-परत्वे पुल्लिङ्गतापत्तेश्च ॥ केचित्तु—"यदन्तः" इत्यत्राध्याहृतेन 'यः' इत्यनेन पुल्लिङ्गेन दहरः परामृश्यते, श्रुतेन 'यत्' इत्यनेन तु दहरा-न्तर्वर्तिगुणजातमुच्यते । यद्वा—यो यदिति पुन्नपुंसकलिङ्गयोर्यच्छ-ब्दयोः "त्यदादीनि सर्वैर्नित्यम्" इत्यनेनैकशेषे, "नपुंसकमनपुंसकेनैक-वच्चास्यान्यतरस्याम्" इति नपुंसके एकवचने च कृते, यदिति रूपम् ।

प्रकाशः

'अस्मिन्' इत्यस्याधिकरणसप्तम्यन्तस्य सन्निहितपुण्डरीकपरत्वादिति भावः । उपलक्षणमेतत्, "तस्मिन् यदन्तः" इति वाक्यं दह-राकाशस्य पुण्डरीकवेश्माधारत्वप्रतिपादनपरं चेत्, तदनन्तरवा-क्यस्य तदाक्षेपपरतया व्याख्यानं चायुक्तम्, परमात्मनोऽन्तर्वर्ति तत्कारणसूक्ष्मं किमपि न सम्भवतीति "किं तदत्र विद्यते" इति वाक्येनाक्षिप्य, द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधान-मिति परैर्व्याख्यातत्वादित्यपि ध्येयम् ॥ प्रागुक्तदोषपरिजिहीर्षया श्रुतप्रकाशोक्तं समाधानद्वयमनूद्य अपाकरोति—**केचित्त्विति । गुणजातमिति ।** सत्यकामत्वादीत्यर्थः । **त्यदादीनीति ।** त्यद्, तद्, यदित्यादीनि शब्दरूपाणि सर्वैः त्यदादिभिरन्यैश्च सह वचने नित्यं शिष्यन्ते इत्येकस्य शेषे । पुल्लिङ्गशेषः कुतो नेत्यत आह—**नपुंसकमिति ।** नपुंसकानपुंसकमात्रकृतविशेषे अनपुंसकेन

प्रकाशः

सहोक्तौ नपुंसकं शिष्यते, एकवच्चास्य कार्यं विकल्पेन भवतीति, नपुंसकस्य शेषः, एकवचनं चेत्यर्थः। ननु किमिह सूत्रद्वयोदाहरणेन कृत्यं, यावता "नपुंसकमनपुंसकेन" इति सूत्रेणैव 'यः, यत्' इति पुंन्नपुंसकयोः विग्रहे नपुंसकैकशेषः सिध्यति। न च नित्यमेकशेषसिद्ध्यर्थं "त्यदादीनि" इत्यस्योक्तिरिति वाच्यं, एकवद्भावसूत्रे एकवद्भावस्यैव वैकल्पिकत्वेनैकशेषस्य तत्रापि नित्यत्वात्। यथोक्तं मञ्जर्यां—"अन्यतरस्यांग्रहणमानन्तर्यादेकवच्चेत्यनेन सम्बध्यते, न त्वेकशेषणेत्याह" इतीति, सत्यं, तथाऽपि 'यः, यत्' इत्यनयोः "नपुंसकं" इति सूत्रविषयत्वेऽपि, त्यदादिषु पाठात् विशिष्य त्यदादिविषयसूत्रेणैवैकशेषनिर्वाहः श्रुतप्रकाशे दर्शित इत्यभिप्रेत्य, यथाश्रुततद्ग्रन्थानुवादोऽत्र कृत इत्यदोषः। ननु च यच्छब्दस्य त्यदादिषु पाठेऽपि, "नपुंसकमनपुंसकेन" इत्यनेनैवैकशेषो वाच्यः, अन्यथा एकवद्भावाप्राप्तेः। सूत्रे 'अस्य' इत्यनेन "नंपुसकमनपुंसकेन" इत्यनेन प्राप्तैकशेषस्यैव परामर्शेन एकवद्भावोक्तेः। यथोक्तं मञ्जर्यां—"अस्यग्रहणं 'एकवच्च' इत्यस्योत्तरत्रानुवृत्तिर्मा भूदिति" इति, मैवं, "त्यदादीनि" इत्यनेन सामान्यत एकशेषप्राप्तौ नपुंसकैकशेषस्य "नपुंसकं" इति सूत्रेणैव प्राप्तत्वेनैकवद्भावसिद्धेरिति। "यदन्तः" इत्यत्र यच्चाऽऽकाशश्चेति यदित्यभिप्रायेण त्यदादिसूत्रोक्तिः, यच्च यश्चेति यदित्याशयेन "नपुंसकं" इति सूत्रोक्तिरिति केचित्। यच्छब्दद्वयानिर्दिष्टमुभयं तच्छब्देन प्रतिनिर्दिश्यते इति भावेनाह—

चन्द्रिका

एवं च यो दहरः, यच्च तदन्तर्वर्तिगुणजातं, तदुभयमन्वेष्टव्यमिति श्रुत्यर्थ इत्याहुः। तन्न, अन्यथोपपत्तौ अध्याहारस्यैकशेषादिकल्पनस्य चायोगात्। लोके प्रातिपदिकार्थैकदेशस्य पदार्थान्तरेणान्वयस्याव्युत्पन्नतया यच्छब्दोक्तयोर्द्वयोरप्यन्तर्वर्तित्वान्वयापाताच्च। न हि 'यावन्तर्वर्तेते तावानय' इत्युक्ते एकस्यैवान्तर्वर्तित्वधीः, किं तु द्वयोः।

प्रकाशः

**एवञ्चेति।** यथोक्तं तद्भाष्ये—"तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदन्तर्वर्ति गुणजातं, तदुभयमन्वेष्टव्यम्" इति। **अन्यथेति।** सिद्धान्ते प्रागुपपादितदिशेति भावः। एतेन दहराकाशस्य तद्गुणजातस्य चोत्तरवाक्ये श्रवणात्तदनुरोधेन उक्तकल्पनं न्याय्यमिति प्रत्युक्तम्, उक्तरीत्याऽन्यथोपपत्तेः, दहरस्य ब्रह्मत्वे बाधकानां भावाच्चेति भावः। यदुक्तं, तस्मिन् हृदयवेश्मनि यदन्तः वर्तते दहराख्यं तदन्तर्गुणजातं च यच्छब्दप्रातिपादिकार्थः। तत्र गुणजाते दहरान्तर्वर्तित्वमन्वेति, दहरे च पुण्डरीकस्थत्वमिति, तदयुक्तमित्याह—**लोक इति।** तदेव व्यनक्ति—**न हीति।** एतेन 'तस्मिन्' इत्यनेन वेश्मनिर्देशे व्यवहितपरामर्शदोषः। दहरवद्गुणजातस्यापि वेश्मस्थतापत्त्या दहराकाशान्तर्वर्तित्वासिद्धिः। दहराकाशनिर्देशे तु दहरस्य स्वान्तर्वर्तित्वाभावेन अन्तर्वर्तिन एवान्वेष्टव्यत्वोक्त्या दहरस्यान्वेष्टव्यत्वासिद्धिः। उभयनिर्देशस्तु सति गत्यन्तरे क्लिष्टः। यच्छब्दप्रातिपादिकार्थयोः दहराकाशगुणजातयोः

चन्द्रिका

किञ्च "य एषोन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्व-स्येशानः"

दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः ।

"य एषोन्तर्हृदय आकाशः तस्मिन्नयं पुरुषः"

प्रकाशः

द्वयोरपि साक्षाद्वेश्मस्थत्वस्य वा दहराकाशान्तर्वर्त्तित्वस्य वाऽऽपातेन दहरस्य वेश्मस्थत्वं, गुणजातस्य दहरान्तर्वर्तित्वमित्यस्यासिद्धिरेव, तथा व्युत्पत्त्यभावादिति सूचितम् । एवं श्रुत्यर्थास्वारस्यं दहरस्य ब्रह्मत्वे व्युत्पाद्य, अनेकमानविरुद्धंच दहरस्य ब्रह्मत्वमिति भावेन मतद्वयेऽपि सूत्रार्थं निराह—किञ्चेति । एतेन दहरस्य अब्रह्मत्वे "यावान्वै" इत्यादिना दहराकाशमाहात्म्यवर्णनं न स्यादिति निरस्तम् । अनेकमानविरोधेन उक्तरीत्या तस्य दहराकाशस्थाकाशाख्यभगवन्माहात्म्यपरत्वोपपत्तेरिति । "य एषः" इति वाजसनेयश्रुतौ सर्ववशित्वादिलिङ्गात् ब्रह्मपरत्वं, "दिव्यः" इत्याथर्वणे

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।
तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥

इति वाक्यशेषात् हृद्गताकाशस्थस्य ब्रह्मत्वं सिद्धम् । "य एषः" इत्यादित्रीण्यपि वाक्यानि तैत्तिरीयोपनिषदि क्रमेण शिक्षाब्रह्मवल्लीनारायणेषु श्रुतानि ।

चन्द्रिका

यो वेद निहितं गुहायां परमे व्योमन् ।

दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ॥

तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।

इत्यादिश्रुतिषु ब्रह्मणो हृदयाकाशस्थतैवोक्ता, न तु हृदयस्थाकाशता। यच्चोक्तं द्वितीयसूत्रे "तथा हि दृष्टं" इत्यस्य "सता सोम्य तदा सम्पन्नो भवति" इत्यादिश्रुत्यन्तरे सुप्तौ जीवानां ब्रह्मविषयकं गमनं दृष्टमित्यर्थ इति, तन्न, सूत्रे गमनस्य समासैकदेशेन स्त्री-लिङ्गेन च गतिशब्देन निर्दिष्टस्य नपुंसकलिङ्गेन दृष्टपदेनानन्व-

प्रकाशः

'व्योमन्' व्योम्नि। "सुपां सुलुक्" इत्यादिना सप्तम्या लुकि, "न ङिसम्बुद्ध्योः" इति नलोपाभावः। मतद्वयेऽपि द्वितीयसूत्रै-कदेशार्थं दूषयितुं परमतं तावदनूद्य प्रत्याह—यच्चेति। 'परैः' इति वर्तते। "अहरहर्गच्छन्त्य एतं ब्रह्मलोकं" इत्युक्तं यत्सु-प्तप्रजानां ब्रह्मलोकगमनं, यश्च ब्रह्मैव लोक्यत इति लोक इति ब्रह्मलोकशब्दस्ताभ्यां गतिशब्दाभ्यां दहरो ब्रह्म। तद्धि सुप्त-जीवानां ब्रह्मविषयगमनरूपलिङ्गं च "सता सोम्य तदा सम्पन्नः" इत्यादौ दृष्टम्। तथा ब्रह्मलोकशब्दः सत्यलोकपरः किं न स्यादि-त्याशङ्क्य, तथा हि—इदमेव ब्रह्मलोकगमनरूपलिङ्गं ब्रह्मलोक-शब्दस्य समानाधिकरणसमासे दृष्टम्। न हि सुप्तानां अहरह-स्सत्यलोकगमनमस्तीत्यर्थः परेषाम्। केषां चित्तु—उभाभ्यामेव

चन्द्रिका

यात् । एतेन, दृष्टशब्दो गतिशब्दरूपोभयविशेषणमिति केषाञ्चित्पक्षोऽपि निरस्तः । तथात्वे दृष्टशब्दस्य पुल्लिङ्गत्वाद्विवचनान्तत्वयोरापातात् । यच्चोक्तमुभाभ्यां—'लिङ्गं' इत्यस्य तदेव गमनं, ब्रह्मलोकशब्दे ब्रह्मैव लोक इति समानाधिकरणसमासो न तु षष्ठीसमास इत्यत्र लिङ्गम् । न हि जीवानां अहरहः सत्यलोकगमनमस्तीत्यर्थ इति, तन्न, उत्तरत्र "अरश्च हवै ण्यश्चार्णवौ

प्रकाशः

गतिशब्दाभ्यां दहरो ब्रह्म । तथा हि—सुप्तौ जीवानां गमनरूपं लिङ्गं च ब्रह्मविषयं दृष्टं "सति सम्पद्य न विदुः" इत्यादौ । तथा ब्रह्मलोकशब्दश्च "एष ब्रह्मलोकस्सम्राडिति होवाच" इत्यादौ ब्रह्मविषयो दृष्टः । तथा सुप्तगमनं लिङ्गं ब्रह्मलोकशब्दस्य समानाधिकरणसमासेऽपि दृष्टं, सुप्तानां अहरहः सत्यलोकगमनाभावादित्यर्थः । तत्र 'गतिशब्दाभ्यां' इत्यंशार्थस्याविरोधादनिरासेन अंशान्तरार्थस्यैव निरासः । **एतेनेति** । परमते सूत्रखण्डार्थनिरासेनेत्यर्थः । **तथात्व इति** । उभयविशेषणत्वे 'तथाहि लिङ्गशब्दौ दृष्टौ' इति विन्यासः स्यादित्यर्थः । सूत्रखण्डस्य द्वाभ्यामप्युक्तमर्थान्तरमनूद्य निराह—**यच्चेति** । **न तु षष्ठीति** । तथात्वे कमलासनलोकपरस्स्यादिति भावः । तस्य लिङ्गत्वं व्यनक्ति—**न हीति** । अत्र प्रयुक्तस्यैव ब्रह्मलोकशब्दस्य अग्रे षष्ठ्यन्तविग्रहाश्रयणदर्शनादिहापि तथैव युक्त इत्याह—**उत्तरत्रेति** । तत्रापि कथं

चन्द्रिका

ब्रह्मलोके, तृतीयस्यामितो दिवि, तदैरं मदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः" इति श्रुतौ,

परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे ।

अरो ण्यश्चार्णवौ दिव्यौ...................... ॥

इत्यादिस्मृतौ च षष्ठीश्रवणात्, अरण्याख्यसुधासमुद्रसरोश्वत्थाद्याश्रयत्वालिङ्गाच्च षष्ठीसमासस्य युक्तत्वात् । "एतया निषादस्थपतिं" इत्यत्र तु वाक्यशेषे षष्ठ्या अश्रवणात् समानाधिकरणसमासो

प्रकाशः

षष्ठ्यन्तसमास इत्यतः, तस्य लोकपरत्वेन ब्रह्मपरत्वाभावात् तथा समास इति भावेन वाक्यशेषमुदाहरति—**तृतीयस्यामिति** । 'ऐरं' मद्ययुक्तं, 'मदीयं' मदकरं, 'सरः' सरोवरं, 'सोमसवनः' अमृतस्रावी, 'पूः' पुरी, "दिव्यौ चिदानन्दरसात्मकौ" इति च्छान्दोग्यभाष्योक्तस्मृतावित्यर्थः । अत्र यद्यपि पूर्वतन्त्र एव निषादस्थपतिनये कर्मधारयबलवत्त्वस्य सिद्धत्वान्न तल्लिङ्गेनेह साध्यमिति सूत्रखण्डो व्यर्थ एवेत्यपि सुवचं, "तथाऽपाहि षष्ठीसमासनिराकरणेन कर्मधारयस्य स्थापनाय लिङ्गमप्यधिकमस्तीति तदप्युक्तं सूत्रकारेण" इति भामत्यामुक्तत्वात् तद्दूषणमुपेक्ष्य, श्रुतिविरुद्धं चैतद्व्याख्यनमिति वक्तुं दूषणान्तरमेवोक्तम् । यदुक्तं भामतीरामानुजभाष्ययोः—'निषादस्थपतिन्यायेन च कर्मधारयः' इति, तत्र तद्वैषम्यमाह—**एतयेति** । षष्ठे "स्थपतिर्निषादः स्याच्छ-

प्रकाशः

ब्दसामर्थ्यात्" इत्याद्यपादीयान्तिमाधिकरणे "रौद्रं वास्तुमयं चरुं निर्वपेत्" इति रौद्रेष्टिं प्रकृत्य श्रुते "एतया निषादस्थपतिं याजयेत्" इत्यत्र द्विजातिरेव यो निषादानां आधिपत्यं करोति तस्यात्राधिकारः, षष्ठीसमास एवायं, अथ निषाद एव स्थपतिः, तस्याधिकारः, कर्मधारय एव समास इति संशये, पक्षद्वयेऽप्य-स्य यौगिकत्वात् षष्ठीसमासत्वे अग्निविद्यावत एव त्रैवर्णिकस्याधि-कारलाभात्, कर्मधारयपक्षे अग्निविद्याशून्यस्यापि तत्प्राप्तेः षष्ठीस मास एवेति प्राप्ते, अस्मिन् पक्षे षष्ठ्यश्रवणेन निषादशब्दस्य तत्सम्बन्धिनि स्थपतौ लक्षणापत्तेः, कर्मधारये तदभावात्, वच-नबलादग्निविद्याहीनस्याप्यधिकारोपपत्तेः कर्मधारय एवेति सिद्धा-न्तितम् । तत्र षष्ठीग्राहकवाक्यशेषोऽत्रेव नास्तीत्यर्थः । तथा च इह वाक्यशेषान्यथानुपपत्त्या प्रबलोऽपि कर्मधारयस्त्याज्यः, यथा "श्येनेनाभिचरन्यजेत" इत्यत्र "यथा वै श्येनः" इति वाक्यशेषबलेन श्येनशब्दे प्रबलरूढित्यागः तद्वदिति भावः । नन्वेवं कथं तर्हि टीकायां "ब्रह्मैव सर्वलोकाश्रयत्वादिना लोकपदोक्तं वा।" इति कर्मधारयः स्वीकृत इति चेन्न, षष्ठ्यर्थात्यागेनैव अर्थान्तर-स्योक्तेः । अत एव

..........................परं ब्रह्मैव लोकनात् ।

ब्रह्मलोक इति प्रोक्तस्तस्य लोकोऽपि कथ्यते ॥

चन्द्रिका

युक्तः। एवञ्चोत्तरवाक्यानुसारेण "अहरहर्गच्छन्त्य एतं ब्रह्मलोकम्" इत्यत्रापि ब्रह्मण आवासस्थानत्वात् दहराकाशो ब्रह्मलोकशब्दार्थः, यथा ब्रह्मपुरे दहरमित्यत्र शरीरं ब्रह्मपुरशब्दार्थः तद्वत्। न हि तदावासस्थानप्राप्तिं विना तत्प्राप्तिः। यच्चोक्तमुभाभ्यां—तृतीयसूत्रे 'धृतेर्महिम्नः' इति पदद्वयं समानाधिकरणमिति, तन्न, "अम्बरान्तधृतेः" इत्यादाविव 'धृतेः' इत्यनेनैव "सेतुर्विधृतिः"

प्रकाशः

इति च्छान्दोग्यभाष्यविरोधोऽपि प्रत्युक्तः। अस्त्वेवं तत्र, ततश्च किमित्यत आह—**एवञ्चेति। दहराकाशो ब्रह्मलोकशब्दार्थ इति।** यद्यपि टीकायां "हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या" इत्यादिना हृत्पद्मं ब्रह्मलोकशब्दार्थ इति भाति। तथाऽपि परैर्दहराकाशस्य कर्मधारयेण ब्रह्मलोकशब्दार्थत्वेन ब्रह्मत्वोक्तेः तन्निरासतात्पर्येणैवमुक्तिः। नन्वेवं दहराकाशगत्या दहरस्थस्य कथं ब्रह्मत्वं, दहरस्थगतेरेव वक्तव्यत्वात्। अतो दहरमेव ब्रह्मेत्यत आह—**न हीति। वैयर्थ्यादिति।** सिद्धान्ते तु 'महिम्नः' इत्यादेस्समाख्याप्रदर्शकत्वेन सार्थक्यमिति भावः। ननु धृतेर्धारणाद्दहराकाशो ब्रह्मेत्युक्ते, कुत इत्याकाङ्क्षायां, धृतिरूपलिङ्गस्य ब्रह्मधर्मतासाधनाय 'महिम्नः' इत्यादि सार्थकं,"—'अस्य' धारणलक्षणस्य महिम्नः 'अस्मिन्' ईश्वरे "एष सेतुर्विधारणः" इत्यादिश्रुत्यन्तरे उपलब्धेः" इति भामत्युक्तेरित्यत उक्तं—**अम्बरान्तेति।** अन्यथा तत्रापि साधनप्रसङ्ग

चन्द्रिका

इति श्रौतस्य धारकत्वस्योक्तिसम्भवेन 'महिम्नः' इत्यस्य वैयर्थ्यात्। यच्चोक्तमुभाभ्यां—"आकाश इति होवाच" इत्यादावाकाशशब्दस्य ब्रह्मणि प्रसिद्धेरिति चतुर्थसूत्रार्थ इति, तन्न, अस्मद्रीत्या समन्वीयमानाकाशस्थत्वस्य ब्रह्मणि प्रसिद्ध्युक्तिसम्भवे असमन्वीयमानदहरशब्दसमानाधिकरणाकाशशब्दस्य ब्रह्मणि प्रसिद्ध्युक्तेरयोगात्। यच्चोक्तं—पञ्चमे सूत्रे 'असम्भवात्' इत्यस्य बुद्ध्याद्युपाधिपारच्छिन्ने जीवे "यावान्वा अयमाकाशः" इत्याकाशो-

प्रकाशः

इति भावः। ब्रह्मधर्मतासाधकत्वेऽपि 'अस्यास्मिन्नुपलब्धेः' इत्येतावतैव पूर्तौ 'महिम्नः' इति व्यर्थ इति भावेनोक्तं—**महिम्न इत्यस्येति**। 'श्रुत्यन्तरेषु' इत्यध्याहारप्रसङ्गाच्चेत्यपि ध्येयम्। **यच्चेति**। "अस्य लोकस्य कागतिरिति आकाश इति होवाच" "आकाशो वै नाम नामरूपयोर्निर्वहिता" इत्यादावाकाशशब्दस्य ब्रह्मणि प्रसिद्धेः दहराकाशो ब्रह्मेत्यर्थ इति तन्मते सूत्रार्थः। **दहरशब्दसमानाधिकरणेति**। सूत्रे दहरशब्दस्यैवोक्त्या तस्यैवान्यत्र ब्रह्मणि प्रसिद्धिः तद्धटितश्रुत्युदाहरणेनैव युक्ता, न तु दहरपदराहितश्रुतिषु सूत्रानुपात्तकेवलाकाशपदस्येत्यर्थः। अस्माकं तु सूत्रे 'दहरे' इति सप्तम्या दहराकाशस्थत्वस्याभिमतत्वात् तस्य च "दहरं गगनं विशोकः तस्मिन्यदन्तस्तदुपासितव्यम्" इति श्रुत्यन्तरे श्रवणान्न दोष इति भावेनोक्तं—**अस्मद्रीत्येति**। **यच्चेति**। 'परैः' इति

चन्द्रिका

पमेयत्वाद्यसम्भवादित्यर्थ इति, तन्न, ब्रह्मणोऽपि "ज्यायानाकाशात्" इत्यादिश्रुत्याऽऽकाशादपि ज्यायस्त्वेन तदुपमेयत्वायोगात्। पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरं तदिति चेन्न, त्वन्मते सुषुप्त्यादावनुगतजीवभावे तदननुगतबुद्ध्यादेरनुपाधित्वात्तदनुगताविद्याया एव चोपाधित्वादविद्योपाधिकजीवेऽपि पुण्डरीकवेष्टनकृतदहरत्वनिवृत्तेः सम्भवात्। यच्चोक्तं षष्ठस्य, "परं ज्योतिः" इत्याद्युत्तरवाक्ये आवि

प्रकाशः

सम्बध्यते। "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय" इत्यादिना सम्प्रसादशब्देन सुप्त्यवस्थापन्नं जीवं परामृश्य, तस्यैव शरीरात् समुत्थानाभिधानात् दहरो जीव इति चेन्न, बुद्ध्याद्युपाधिपरिच्छिन्ने जीवे "यावान्वा अयमाकाशः" इत्यादिवाक्योक्ताकाशोपमितत्वाद्यसम्भवादित्यन्येषामर्थः। ननु न भूताकाशमानत्वं ब्रह्मणोऽत्र विधीयते, येन "ज्यायानयमाकाशात्" इति श्रुतिविरोधस्स्यात्। अपि तु भूताकाशोपमानेन पुण्डरीकोपाधिप्राप्तदहरत्वं निवर्तत इति भाष्यभामतीभ्यां उक्तमाशङ्कते—**पुण्डरीकेति। तदननुगतेति।** अन्तःकरणलयस्य सुप्तावभ्युपेतत्वादिति भावः। अस्त्वेवमित्यत आह—**अविद्येति।** तस्य सर्वगतत्वाभ्युपगमात्। तथा चानूदितं प्रतिकर्मव्यवस्थाभङ्गे ग्रन्थकारैः—"अविद्योपाधिकं सत्सर्वगतमन्तःकरणोपाधिकं सत्परिच्छिन्नं च" इति। तथा च जीवपूर्वपक्षनिरासकः सौत्रो हेतुर्न स्यादिति भावः। अत्रापहतपाप्मत्वाद्यसम्भवस्यैव हेत्वर्थतया रामानुजीयैरुक्तत्वात्तस्य चानुमतत्वात्तन्न दूषितम्। **यच्चेति।**

चन्द्रिका

भूतो जीव उच्यते, न त्वविद्यावृतः । आविर्भूतं च स्वरूपं ब्रह्मैवेति, तद्वाक्यं शुद्धब्रह्मपरमेव, न तूपहितजीवपरमित्यर्थ इति, तन्न, "स तत्र पर्येति जक्षन् क्रीडन् रममाणः" इत्यत्र विशिष्टस्यैवोक्त्या शुद्धब्रह्मपरत्वायोगादिति दिक् ॥

प्रकाशः

अत्रापि 'परैः' इति योज्यम् । इन्द्रविरोचनोपाख्यानरूपोत्तरवाक्य सन्दर्भे "य आत्माऽपहतपाप्मा" इत्याद्युपक्रम्य "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यक्षिस्थं जीवं निर्दिश्य "एतं त्वेव भूयोऽनुव्याख्यास्यामि" इति तमेव पुनः परामृश्य, "य एष स्वप्ने महीयमानश्चरत्येष आत्मा" इति "मर्त्यं वा इदं शरीरं" इति शरीरसम्बन्धिनिन्दापूर्वं "एष सम्प्रसादः" इत्यादिश्रवणाज्जीवपरमेवैतद्वाक्यमिति चेन्न, तत्राप्याविर्भूतस्वरूपस्य विवक्षितत्वात्, तादृशं च ब्रह्मैवेति, अपहतपाप्मत्वादिकं तत्र युक्तमित्यर्थइत्युक्तमित्यर्थः । सूत्रान्तरेऽप्यनुपपत्तिरूह्येत्याह—**दिगिति** । तथा हि—जपाकुसुमसन्निधानात् स्फटिकादेरिव शरीरेन्द्रियादिसन्निधानात् कलुषितस्य जीवस्य स्वाभाविकब्रह्मभावोपदेशार्थं "य एषोऽन्तरक्षिणि" इत्यादौ तिसृष्वप्यवस्थासु जीवपरामर्श इति सप्तमार्थ इति, तन्न, 'उपसंपद्य' इति समीपप्राप्तेरेवोक्त्या जीवस्य ब्रह्मभावस्यैवाभावात् । "स तत्र पर्येति जक्षन्" इत्याद्ययोगाच्च । यदपि, दहरहृत्पद्मस्थतया अल्पश्रुतेः दहरो न ब्रह्मेति चेत्,

चान्द्रिका

अत्रापि परमते, दहरस्य जीवत्वनिषेधेन ब्रह्मत्वोक्तेः, "गतिशब्दाभ्यां" इत्यनेन च जीवस्य ब्रह्मगत्युक्तेः, दहरवाक्यशेषे च "सत्यकामः सत्यसङ्कल्पः" इति श्रवणाच्च परपक्षप्रातिकूलता व्यक्तैव । एवमुत्तरत्राप्यूह्यम् ॥

प्रकाशः

तदुक्तं "अर्भकौकस्त्वात्" इत्यत्र, "यावान्वै" इति श्रुत्या बाह्याकाशोपमितत्वोक्त्या च प्रत्युक्तमित्यष्टमार्थ इति, तन्न, तत्रोक्तरीत्या अल्पत्वस्य ब्रह्मण्युपासनार्थत्वे जीवेऽपि ब्रह्मधर्माणां अप्युपासनार्थत्वापत्तेः । "यावान्वै" इति श्रुत्याऽत्राल्पत्वं प्रत्युक्तमित्यप्ययुक्तं, तस्य दहरत्वनिवृत्तिपरत्वेन तस्याविद्योपाधिके जीवेऽपि सम्भवादिति ॥ इदमधिकरणं निर्गुणत्वजीवाभेदप्रतिकूलत्वात् परैरेतन्नारम्भणीयमित्याह—अत्रापीति । मिथ्यार्थपरमेतदिति च प्रत्युक्तमन्तर्यामिनय इति भावः । 'एवं' परप्रातिकूल्यमित्यर्थः ॥

यत्तु कश्चिदाह—हृत्पद्मस्थदहराकाशः किं भूतमुत जीवः किं वा शिव इति संशये, आकाशश्रुतेर्भूते रूढत्वात् भूताकाशः, अल्पत्वश्रुतेर्जीवो वा, न व्यापी शिव इति प्राप्ते, अपहतपाप्मत्वादिभ्यो हेतुभ्यः दहराकाशः शिव एवेति, तन्न, दहराकाशस्य ब्रह्मत्वे तद्गतस्यान्वेष्टव्यत्वाद्युक्तचयोगस्योक्तत्वात् । 'तस्मिन्' इत्यस्य व्यहितपुण्डरीकपरत्वस्यान्याय्यत्वात् । "तस्मिन्यदन्तः" इत्यस्य व्यर्थत्वाच्च । 'यदन्तः' इति यच्छब्दस्य पुल्लिङ्गतापत्तेश्च । यदत्र शिवार्कमणिदीपिकायां उक्तं—लिङ्गव्यत्ययेन वा, नपुंसकलिङ्गं स्त्री-

प्रकाशः

लिङ्गपुल्लिङ्गानुगतं सामान्यमेव न तु विशेषान्तरमिति शाब्दिकमर्यादया लिङ्गान्तरनिर्दिष्टे नपुंसकलिङ्गं युक्तमिति वा, "सुपां सुलुक्" इति सोर्लुकि सति पुल्लिङ्गस्यैवैतद्रूपमिति वेति, तन्न, अस्मद्रीत्या गतौ सत्यां क्लेशायोगात् । उत्तराधिकणे तु प्रबलबाधकात् गत्यन्तराभावाच्च व्यत्ययादिनोपपत्तिर्वक्ष्यत इति नास्मत्प्रतिबन्दी । "य एषोऽन्तर्हृदय आकाशः" इत्यादिभिर्दहराकाशस्थस्य ब्रह्मत्वबोधकानेकश्रुतिस्मृतिविरोधस्योक्तत्वाच्च । "दहरं विपाप्मं" इति श्रुतावग्रे "तत्परः स महेश्वरः" इति श्रुतत्वेऽपि

विश्वं नारायणं देवं अक्षरं परमं पदम् ।

इत्यादिनारायणशब्दबाहुल्यात्, "यो देवानां नामधा एक एव" इत्यादौ "अजस्य नाभौ" इति पद्मनाभत्वलिङ्गेन विष्णोः सर्वनामवत्त्वस्येव अन्यस्य तदभावेन, "महादेवो महत्त्वतः" "अन्यनाम्नां गतिर्विष्णुः" इत्यादिद्युभ्वादिनयभाष्योक्तस्मृतिभिः महेश्वरशब्दस्यापि वैष्णवत्वात् ।

नित्यतीर्णाशनायादिरेक एव हरिस्स्वतः ।

इत्यादिभाष्योक्तपाद्मस्मृत्या,

सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् ।

इति स्कान्दस्मृत्या चापहतपाप्मत्वादीनां विष्ण्वेकनिष्ठत्वेन शिवे हेतोरसिद्धेश्च । "परस्य ब्रह्मणो लोकः" इत्यादिस्मृतिसिद्धसुधासमुद्रा-

प्रकाशः

अथश्वेतद्वीपाख्यब्रह्मलोकवत्त्वरूपलिङ्गविरोधाच्च । असकृद्विष्णुवाचितया प्रतिपादितब्रह्मशब्दविरोधाच्च । सूत्रार्थानां प्रायो रामानुजरीत्यविशिष्टत्वात् तथैव दूषणं ध्येयम् । यदत्रोक्तं शिवार्कमणिदीपिकायां—'गतिसूत्रे दृष्टशब्दः "चेतोर्पणानिगदात्तथा हि दर्शनम्" इत्यादाविव भावप्रत्ययान्तो न कर्मणि निष्ठान्तः । तथा च दृष्टशब्दस्य गतिशब्दौ प्रति विशेषणत्वाभावात् पुल्लिङ्गेन द्विवचनेन च भाव्यमिति शङ्कानवकाशः' इति, तन्न, दृष्टशब्दस्य 'लिङ्गं च' इत्यनेनानन्वयापत्तेः । यदि 'तथा हि दर्शनं' इत्यस्य गतिशब्दयोः "सति सम्पद्य" इत्यादावन्यत्र ब्रह्मविषयतया दर्शनमुच्यते, 'लिङ्गं च' इत्यनेन च मास्त्वन्यत्रानयोः दर्शनमत्रैव प्रकरणे सुप्तगतिब्रह्मलोकशब्दावीश्वरस्य दहराकाशत्वे लिङ्गं पर्याप्तं गमकमित्यर्थ इत्युक्तिः, तदाऽपि 'लिङ्गं च' इत्यस्याभ्युपेत्य प्रवृत्तत्वेन व्यर्थत्वात् । पर्याप्तत्वानुपपादनाच्च । लिङ्गशब्दस्य रूढार्थत्यागापाताच्च । 'गतिशब्दौ' इत्यध्याहारापाताच्च । 'लिङ्गं' इत्यस्याक्लेशेनैव अस्मद्रीत्याऽन्वयसम्भवे क्लेशायोगाच्च । यदप्युक्तं—'अस्तु वा तद्विशेषणं, तथाऽपि न दोषः, विशेष्यस्य पुल्लिङ्गद्विवचनान्तनिर्दिष्टत्वेऽपि "द्विगुरेकवचनं" इत्यत्र लिङ्गसामान्यविवक्षया पुल्लिङ्गविशेषणे नपुंसकलिङ्गवत्, "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इत्यत्र द्विवचनान्तस्य विशेषणे विशेष्यद्वयगतप्रातिस्विकैकत्वविवक्षया एक-

चन्द्रिका

टीकाक्षरार्थस्तु—पूर्वं हृत्पद्मस्थस्य ब्रह्मत्वे हेत्वन्तरोक्त्यर्थं सौत्रं लिङ्गपदमित्येवंपरतया "अरश्च" इत्यादिभाष्यं व्याख्यातम्। अधुना ब्रह्मलोकशब्दस्य प्रसिद्ध्या सत्यलोकपरत्वाशङ्कानिरासार्थं तदित्येवं-परतया "अरश्च" इत्यादिभाष्यं व्याचष्टे—**अथवा—ब्रह्मलोक-मिति। तल्लक्षणोक्तेश्चेत्यादि**। "एष आत्माऽपहतपाप्मा" इत्यत्र हृत्पद्मस्थलक्षणत्वेनोक्तस्यापहतपाप्मत्वस्य "सर्वे पाप्मानोऽतो निवर्तन्ते"

प्रकाशः

वचनवच्चात्र नपुंसकस्यैकवचनस्य चोपपत्तिः' इति, तदप्यनेनैव निरस्तं, गतिसम्भवेऽस्य क्लिष्टत्वात्। यच्चोक्तं "प्रसिद्धेः" इत्यस्य "दहरं विपाप्मं परवेश्मभूतं" इत्यत्र "हृत्पुण्डरीकं विरजं" इत्यारभ्य

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा.............................................॥

इत्यादिकैवल्योपनिषदि शिवस्य हृत्पद्मस्थत्वप्रसिद्धेश्चेत्यर्थ इति, तन्न, अनेकश्रुतिस्मृतिविरोधेन, नारायणादिशब्दविरोधेन च तेषां शब्दानां विष्णुवाचकत्वात्। उक्तं च गीताभाष्ये—"तत्रापीष्ट-सिद्धिर्नामवैशेष्यात्" इतीत्याद्यूह्यम्॥

"अथवा" इत्यादिटीकायाः उद्भाष्यत्वभ्रान्तिं वारयन् पक्षयोरर्थभेदं व्यञ्जयन् भाष्यव्याख्यानमेतदित्याह—**पूर्वमिति**। धृतिसूत्रे "—"सर्वे पाप्मानोऽतो निवर्तन्ते" इति तल्लक्षणोक्तेः" इति वाक्ये तच्छ-ब्देन परामृश्यमानं न स्फुटम्। किंच तल्लक्षणमिति न स्पष्टं प्रती-यते। तथात्वे वा स हृत्पद्मस्थः कुत इत्यतो व्यनक्ति—**एष इति**।

चन्द्रिका

इत्यनेन "स सेतुः" इत्युक्तसेतुधर्मत्वोक्तेरित्यर्थः। **एतस्येति प्रतीकग्रहणेनेति।** प्रतीकग्रहणेन "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ" "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ" इत्यादीनि बहुवाक्यानि सूचयतीत्यर्थः। **विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इति।** ब्रह्मणो हृत्पद्मस्थत्वे, सुषिरस्य "तस्यान्ते सुषिरं" इति हृत्पद्मस्थत्वश्रुतिविरोध इति निरस्तं, सुषिरस्य "दहरोऽस्मिन्नन्तर आकाशः" इति वाक्योक्तहृत्पद्मस्थत्वमुपेत्यैव, ब्रह्मणः "दहरं विपापं" इत्यादिश्रुतिबलात् "तस्मिन्यदन्तः" इति वाक्योक्तहृत्पद्मस्थसुषिरस्थताया एव स्वीकारादित्यर्थः। **तदाधारतया पृथिव्यादिकमिति।** आकाशाभिमान्याश्रितं पृथिव्याद्यभिमान्यादिकमित्यर्थः। **ब्रह्मैव पूर्णत्वात्पुरमिति।** "एतत्सत्यं ब्रह्मपुरं" इति प्रकृतस्य शरीरस्यैव "एष आत्मा"

प्रकाशः

"—'एतस्य' इति प्रतीकग्रहणेन बहुवाक्यानि सूचयाति" इत्यत्रोक्तानि बहुवाक्यानि प्रदर्शयति—**प्रतीकेति।** "प्रसिद्धेश्च" इति सूत्रे "हृत्पद्मस्थाकाशो विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इत्येतदनेनैव निरस्तम्" इति वाक्ये विरोधतच्छान्त्योरस्फुटत्वादाह—**ब्रह्मण इति।** "यद्ब्रह्मान्वेष्टव्यतयोक्तं, तस्यान्तर्हृदये यावानेष आकाशस्तावान् सर्वोऽपि विद्यते। तदाधारतया पृथिव्यादिकं च समाहितं" इत्यत्र जडस्यैव जडाधारताप्रतीतेराह—**आकाशेति।** "एतच्छब्देन

चन्द्रिका

इति परामर्शादात्मा न विष्णुरिति न शङ्क्यं, छान्दोग्यभाष्योक्तरीत्या "यदिदमस्मिन् ब्रह्मपुरे" इत्याद्यस्य ब्रह्मपुरशब्दस्य षष्ठीतत्पुरुषकर्मधारययोराश्रयणेन शरीरब्रह्मोभयपरत्वेऽपि, "ब्रह्मपुरे सर्वं समाहितं" इति द्वितीयस्य, "एतत्सत्यं ब्रह्मपुरं" इति तृतीयस्य च ब्रह्ममात्रपरत्वादिति भावः। **शरीरनाशेनास्याविनाशोक्तेरिति।** यद्यपि "एतज्जराऽवाप्नोति" इति पूर्वत्रैतच्छब्देन शरीरस्य प्रकृतत्वात् "एतत्सत्यं ब्रह्मपुरं" इत्यत्रापि तस्य प्राप्तिः, तथाऽपि "नास्य जरयैतज्जीर्यते" इति सन्निहितपूर्ववाक्ये शरीरं 'अस्य' इति निर्दिश्य, एतच्छब्देन ब्रह्मनिर्देशात्, शरीरनाशेऽपि अविनाशित्वलिङ्गाच्च न शरीरमिह ब्रह्मपुरशब्दार्थ इत्यर्थः। **न चैवमङ्गीकारेऽपि सुषिरश्रुतिविरोध इति।** सुषिरस्य सर्वाधारत्वश्रुतिविरोध इत्यर्थः॥

प्रकाशः

शरीरस्य प्रकृतत्वान्नेति चेन्न, शरीरनाशेनास्याविनाशोक्तेः" इत्येतदप्रतीतेः शङ्कोत्तरयोः भावं व्यनक्ति—**यद्यपीति।** दहराकाशस्थस्य विष्णोरेव सर्वाधारत्वमिति प्रकृतेऽर्थे शङ्कितश्रुतिविरोधं सङ्गमयति—**सुषिरस्येति।** शिष्टमुपन्यासमुखेन विवृतमिति भावः॥

॥ इति दहराधिकरणम् ॥

# — अथ अनुकृत्यधिकरणम् —

अदृश्यत्वादयः परमेश्वरगुणा उक्ताः ।

तेषां सुखं शाश्वतं नेतरेषाम् ।

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।

इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इति,

तत्त्वप्रकाशिका

अत्रानुकूल्येन गृह्यमाणत्वलिङ्गस्य भगवति ज्ञानिसुखे च सुखशब्दवृत्त्या साधारणस्य विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन्, सयुक्तिकं पूर्वपक्षं च दर्शयति—अदृश्यत्वादय इति । पूर्वमदृश्यत्वादिगुणाः परमेश्वरस्योक्ताः । तेषामदृश्यत्वाज्ञेयत्वे कस्य चिदानुकूल्येन गृह्यमाणस्य काठके कथ्येते,

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति न भाति वा ॥

इति । आनुकूल्येन गृह्यमाणत्वं नाम कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वम् । तस्य चान्यनिष्ठत्वेऽनिर्देश्यत्वं न भवतीत्युक्ताज्ञेयत्वं चान्यस्यैव प्रसज्ज्येतेत्यवश्यं निर्णेतव्यत्वम् । तदानुकूल्येन गृह्यमाणत्वमत्र विषयः । विष्णोरन्यस्य वेति सन्देहः । प्रागुक्तसाधारण्यं सन्देहबीजम् । ज्ञानिसुखस्यैतल्लिङ्गमिति पूर्वः पक्षः,

अतो वक्ति—

## ओम् अनुकृतेस्तस्य च ओम् ॥ २२ ॥

"तमेव भान्तमनुभाति सर्वं" इत्यनुकृतेः, "तस्य भासा सर्वमिदं विभाति" इति वचनाच्च परमात्मैवानिर्देश्यसुख-

तत्त्वप्रकाशिका

"परमं सुखं" इति सुखोक्तेः। न च सुखश्रुतिर्विष्णावपि सावकाशेति तद्ग्रहः,

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।

तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम् ॥

इति ज्ञानिसुखस्य प्रकृतत्वात्, तस्यैव "तदेतदिति मन्यन्ते" इति परामर्शात्। न च वाच्यं भगवतोऽपि प्रकृतत्वात्तत्परामर्शोऽयमस्त्विति, तस्य नपुंसकसुखशब्देनाप्रकृतस्य 'तत्' इत्यादिपरामर्शायोगात्। सम्भवत्समीपस्थपरामर्शं विहाय दूरस्थपरामर्शग्रहणे कारणाभावाच्च। अतो ज्ञानिसुखस्यैवानुकूल्येन गृह्यमाणत्वात्तस्यैवानिर्देश्यत्वादीत्यर्थः। सिद्धान्तपरत्सूत्रमवतार्य व्याचष्टे—अत इति। कथं नु तद्विजानीयामित्यानुकूल्येन गृह्यमाणो विष्णुरेव। न च सुखश्रुतिविरोधः, "परमं सुखं" इति सुखश्रुतेरपि तत्परत्वात्। "तेषां सुखं" इति ज्ञानिसुखस्य प्रकृतत्वात्तस्यैव "तदेतत्" इति परामर्शान्नेति चेन्न, "चेतनश्चेतनानां" इत्यादौ परमात्मनोऽपि प्रकृतत्वात्। न च परमात्मनो नपुंसकसुखशब्देनाप्रकृतत्वात्

रूपः । न हि ज्ञानिसुखमनुभाति सर्वं, न च तद्भासा ।
"अहं तत्तेजो रश्मीत्" इति नारायणभासा हि सर्वं भाति ॥

तत्त्वप्रकाशिका

"तदेतत्" इति परामर्शायोग इति वाच्यम्, यदनिर्देश्यं परमं सुखं कथं नु तद्विजानीयामित्यानुकूल्येन गृह्णन्ति, तदनिर्देश्यं सुखमेतत्प्रकृतपरमात्मनो रूपमिति मन्यन्त इति वाक्ययोजनोपपत्तेः । न च वक्तव्यं समीपस्थपरामर्शं विहाय कथञ्चिदेव दूरस्थग्रहणे कारणाभाव इति, "तमेव भान्तमनुभाति सर्वं" इति वाक्यशेषे सूर्यादीनामेतदधीनप्रकाशश्रवणात् । "तस्य भासा" इति सर्वजगतस्तत्प्रभाप्रकाश्यत्वप्रतीतेश्च । अतस्समीपोक्तपरित्यागे कारणसद्भावेन दूरोक्तपरमात्मग्रहणोपपत्तेस्तस्य च सुखरूपत्वातिशयेन नपुंसकसुखश्रुत्युपपत्तेर्विष्णुरेवानुकूल्येन गृह्यमाण इति तस्यैवानिर्देश्यत्वादीति भावः । नन्वेतदधीनतया सूर्यादीनां भानोक्तावेतस्य सर्वजगत्प्रकाशकत्वोक्तौ च कुतस्समीपोक्तज्ञानिसुखपरामर्शपरित्याग इत्यत आह—न हीति । 'सर्वं' सूर्यादि । 'जगत् भाति' इति शेषः । अस्त्वेतदुभयं ज्ञानिसुखेऽनुपपन्नम्, तथाऽपि कुतोऽनेन परमात्मग्रहणमित्यत आह—अहमिति । एतदुभयस्य ज्ञानिसुखेऽसम्भवात् परमात्मनि सम्भवाद्दूरोक्तस्यापि समीपोक्तपरित्यागेन ग्रहणमिति भावः । तदुक्तम्—

व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत् ।

## ओम् अपि स्मर्यते ओम् ॥ २३ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

इति ।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥

इति च ॥ २३ ॥

तत्त्वप्रकाशिका

इति । इति 'श्रुतेः' इति शेषः । 'रश्मीत्' इति सूर्यादितेजसां नारायणाधीनत्वमुच्यते । 'तेजः' इति सर्वजगत्प्रकाशकत्वं । 'नारायणभासा' तदधीनभासा तदीयभासा च, 'सर्वं' सूर्यादि, जगच्च 'भाति' प्रकाशते प्रकाश्यते च ॥ २२ ॥

यदेतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वं श्रुत्योपपादितं, तत्स्मृत्याऽप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—अपीति । न केवलमेतच्छ्रूयतेऽपि तु स्मर्यतेऽपीत्यर्थः । 'मामकं' मदधीनं मदीयं च । किञ्च—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" इत्यानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते । तच्च विष्णोरेव स्मर्यते । अतो विष्णुरेवात्र प्रतिपाद्य इति सूत्रस्यार्थान्तरमभिप्रेत्य तां स्मृतिमुदाहरति—न तदिति । 'धाम' स्वरूपम्,

तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते ।

तत्त्वप्रकाशिका

इत्यभिधानात् । युक्तिसमुच्चयेऽपिपदम् । न च मन्तव्यं "न तत्र सूर्यो भाति" इत्यादिपुल्लिङ्गेन प्रकृतपरमात्मन एवोच्यते, न त्वानुकूल्येन गृह्यमाणस्य । अतः 'तत्' ज्ञानिसुखमिति ग्रहणेऽपि बाधकाभाव इति, "किमु भाति न भाति वा" इति प्रकृतस्यैव "न तत्र" इत्यनुसन्धानप्रतीतेः । यस्यैवं सुखं रूपं तत्रेति वाक्ययोजनोपपत्तेश्च । दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिः । अनिर्देश्यत्वाद्ययोगाच्च । तस्माद्दानुकूल्येन गृह्यमाणो हरिरेवेति तस्यैवानिर्देश्यत्वादीति सिद्धम् ॥ २३ ॥

चन्द्रिका

## ॥ ओम् अनुकृतेस्तस्य च ओम् ॥

अत्रानुव्याख्याने अनुग्रहाख्यलिङ्गस्य समन्वय इत्युक्तम् । अनुग्रहश्चानुकूल्येन गृह्यमाणत्वमित्युक्तं न्यायविवरणे । तच्च कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वमित्युक्तं टीकायाम् । तच्च 'विजानीयां' इति लिङा ज्ञानार्थं ज्ञेयस्य प्रार्थनाधीरित्यभिप्रेत्य वा, "कथं नु पुत्रं पश्येयं स आगच्छति वा नवा" इत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीः, तथा "कथं नु तद्विजानीयां" इत्यादिवाक्ये ज्ञानार्थमाविर्भावरूपभानप्रार्थनाधीरित्यभिप्रेत्य वेति द्रष्टव्यम् । "परमात्मैवानिर्देश्यसुखरूपः" इति सिद्धान्तभाष्यं तु फलितोक्तिपरम् ।

प्रकाशः

ओम्—अनुकृतेस्तस्य च—ओम् ॥ अत्र समन्वीयमानलिङ्गस्योभयसाधारण्येन टीकोक्तपादसङ्गतिं विवरीतुं तत्स्वरूपकथनपरटीकाया मूलं वदन् तन्निर्धारयति—**अत्रेति** । "स्थानं लिङ्गमनुग्रहः" इत्यनुव्याख्याने ।"—'कथं नु तद्विजानीयां' इत्यानुकूल्येन ग्रहणं कस्येति विचार्यमनुग्रहः" इति न्यायविवरणे । ननु टीकोक्तं कथं शब्दलभ्यमित्यत आह—**तच्चेति** । **लिङेति** । "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति स्मरणादिति भावः। **भानेति** । "किमु भाति न भाति वा" इति श्रवणादिति भावः । भाष्यविरोधमाशङ्क्याह—**परमात्मेति** । द्विरूपस्यापि प्रार्थनस्य भगवत्परत्वे सिद्धे अत्रोक्तादृशसुखरूपोऽपि स एवेति फलिष्यतीत्यभिप्राय

चन्द्रिका

केचित्तु एतद्भाष्यानुसारात् न्यायविवरणोक्तमानुकूल्येन गृह्यमाणत्वं सुखत्वमेवेत्याहुः। अत्र च, कथं नु ताद्विजानीयामिति प्रार्थनं ज्ञानिनः, तत्प्रार्थनस्य च तत्सुखमिवेश्वरोऽपि तं प्रति प्रियत्व द्विषयः, 'परमं सुखं' इति समभिव्याहृतसुखशब्दश्चोभयसाधारणः, ततश्चानुकूल्येन गृह्यमाणत्वमीश्वरज्ञानिसुखयोस्साधारणमिति ज्ञेयम्।

प्रकाशः

मित्यर्थः। **सुखत्वमेवेति।** तथा च तस्योभयत्र प्रसिद्धिः सुशकेति भावः। साधारण्येनोपपादनाय * लिङ्ग प्रतीतं प्रार्थनं न सर्वकर्तृकमित्याह—**अत्र चेति।** "तमात्मस्थं येऽनुपश्यन्ति धीराः" इति ज्ञानिन एव प्रकृतत्वादिति भावः। एवं लिङ्गस्वरूपं निर्धार्येदानीं "आनुकूल्येन गृह्यमाणत्वलिङ्गस्य भगवति ज्ञानिसुखे च सुखशब्दवृत्त्या साधारणस्य" इति टीकोक्तं साधारण्यं स्वत एवोभयसाधारणसुखशब्दसमभिव्याहारेण वेति द्वेधोपपादयति—**तत्प्रार्थनस्य चेति।** 'तं' ज्ञानिनं प्रति।

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।

इत्यादेरिति भावः। **उभयेति।** "एष परम आनन्दः, यो वै भूमा तत्सुखम्" इत्यादौ भगवतोऽपि परमसुखरूपत्वात् तत्र सुखशब्ददृष्टेरिति भावः। एतेन टीकायां "सुखशब्दवृत्त्या" इत्येतत् सुखशब्दवृत्त्या चेति चशब्दानुषङ्गेण पक्षान्तरतया योज्यमित्युक्तं भवति। नन्वानुकूल्येन गृह्यमाणत्वस्य समभिव्याहृतसुखनिष्ठतया तस्य च

* 'साधारण्योपपादनाय' इति कतिपयपुस्तकपाठः।

चान्द्रिका

अनन्तरसङ्गतिस्तु, पूर्वाधिकरणन्यायेन तद्वैषम्येण वा पूर्वपक्षोत्थानात् ।

प्रकाशः

द्वयसाधारण्येन लिङ्गस्योभयत्र प्रसिद्धिरयुक्ता, सुखशब्दस्याज्ञसुखेऽपि सत्त्वात्, तस्येह पूर्वपक्ष्यनभिमतत्वात्, द्वयमात्रसाधारण्येन वक्तव्यस्योक्तत्वादिति चेन्न, प्रकरणाविशेषितस्य तस्य द्वयमात्रसाधारण्यात्, प्रकरणस्य च ज्ञानीश्वरमात्रसम्बन्धित्वात् पूर्वत्र प्रकरणवदस्याप्युपपत्तेः । केचित्तु—सुखशब्देन पारम्यविशेषितसुखपरेणानेवंरूपाज्ञसुखानभिधायिना* द्वयमात्रसाधारण्यम् । अत एव "परमं सुखमिति समभिव्याहृतसुखशब्दश्च" इत्युक्तमित्याहुः । **अनन्तरेति** । पूर्वत्र "तस्मिन्यदन्तः" इति तच्छब्दस्य सन्निहितत्यागेन व्यवहितपरत्वायोगवत्, इहापि सन्निहितज्ञानिसुखत्यागेन व्यवहितेश्वरपरत्वायोग इति पूर्वन्यायेन वा, "एष आत्मा" इत्येतच्छब्दस्य प्रकृतज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुल्लिङ्गत्वेऽपि इह तदेतच्छब्दयोर्मध्ये एकस्योद्देशकत्वावश्यम्भावेन द्वयोर्नपुंसकत्वायोगादिति पूर्ववैषम्येण वेत्यग्रे स्फुटमिति भावः । तथा चापावादिकी वा, प्रत्युदाहरणरूपा वेत्यर्थः । "अदृश्यत्वादयः" इति भाष्यादि तु फलपरमिति भावः । एतेन, यदुक्तं कल्पतरौ "पूर्वं 'एतं त्वेव ते' इत्येतच्छब्दस्य प्रकृतार्थत्वाद्दहरस्य जीवता निरासि, तदसाधु, तत्रेत्यादौ प्रकृतार्थत्वानियमादिति शङ्कानिरासात् सङ्गतिः" इति, तदयुक्तमिति सूचितं, तन्मते "तस्मिन्यदन्तः" इत्यत्र पूर्ववाक्य एव 'ब्रह्मपुरे' जीवदेहे इत्यर्थोक्त्याऽप्रकृतस्यापि ब्रह्मणो यदन्तः

* अत्र 'ज्ञानिसुखभगवतोरेव बोधनात्' इत्युपस्कर्तव्यम्.

चन्द्रिका

अत्र

"कथं नु तद्विजानीयां किमु भाति न भाति वा"

इति काठकोक्तमानुकूल्येन गृह्यमाणं किं ज्ञानिसुखं किं वा

प्रकाशः

तदन्वेष्टव्यमित्यत्र तच्छब्दार्थस्य 'तस्मिन्' इत्यस्य समीपप्रकृत-दहराकाशपरत्वानियमस्य स्वीकारेणैतच्छङ्कायाः प्रागेव निरसनीयत्वेन पुनरिह तथा शङ्कोत्थानायोगादिति ॥

विषयसंशयटीकां व्यनक्ति---अत्रेति ।

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ॥

इत्युपक्रम्य,

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम् ॥
नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम् ॥

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति न भाति वा ॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

इति पञ्चमखण्डगतवाक्यस्थमानुकूल्येन गृह्यमाणं विषय इत्यर्थः । **काठकेति** । अन्यगतं वाक्यं विषय इत्येतन्निरसिष्यत इति भावः ।

चन्द्रिका

ब्रह्मेति चिन्ता। तदर्थं "तदेतदिति मन्यन्ते" इति पूर्ववाक्यस्थतच्छब्दादिकं किं सन्निहितज्ञानिसुखपरं किं वा व्यवहितेश्वरपरमिति। तदर्थं सन्निहितपरत्वे "तमेव भान्तमनुभाति" इत्यनुकृतिप्रति-

प्रकाशः

**तच्छब्दादिकमिति।** आदिपदेनैतच्छब्दः, तत्समानाधिकरणपरमसुखपदं च गृह्यते। "कथं नु तद्विजानीयां" इत्यत्र तच्छब्दस्य "तदेतत्" इति पूर्ववाक्योक्तपरामर्शकत्वं सिद्धमिति पूर्ववाक्यमेव किम्परमिति चिन्तितम्। तथा च वक्ष्यति "तद्विजानीयामिति तच्छब्देन" इत्यादि। अतः "—"तदेतदिति मन्यन्ते, कथं नु तद्विजानीयां" इति "तेषां सुखं शाश्वतं" इत्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रमः" इति न्यायविवरणविरोधशङ्कानवकाशः। **सन्निहितेति।** "तेषां सुखं" इति वाक्येनेत्यर्थः। **व्यवहितेति।** "एको वशी" इति वाक्योक्तेश्वरेत्यर्थः। यद्यप्यत्र "तेषां सुखं" इति वाक्यात् "नित्यो नित्यानां" इतीश्वरवाक्यस्य परत्वादीश्वरः सन्निहितः, ज्ञानिसुखं तु तदपेक्षया व्यवहितं, तथाऽपि "नित्यो नित्यानां" इत्यस्मादपि परस्मिन् "तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिः" इत्यत्र प्रकृतेन ज्ञानफलेन शान्तिशब्दार्थेन सुखेन "नित्यानां" इति वाक्योक्तस्य व्यवहितत्वादिति पूर्वपक्ष्यभिप्रायादेवमुक्तम्। वक्ष्यति चैतत् "यद्वा" इत्यादिना सिद्धान्ते। **अनुकृतीति।** सूर्यादितेजसां भगवत्कृत्यनुसारि-

चन्द्रिका

पादकमुत्तरवाक्यं न विरुध्यते उत विरुध्यत इति। तदर्थं तत्स्थः "तमेव" इति तच्छब्दः किं पुल्लिङ्गानुसारात् व्यवहितप्रकृतेश्वरपरः किं वा प्रातिपदिकानुसारात् सन्निहितप्रकृतानुकूलगृह्यमाणपर इति। यद्याद्यः, तदाऽनुकृतेरानुकूल्येन गृह्यमाणनिष्ठत्वाभावेन ब्रह्मपक्षे साधकाभावात् "तदेतत्" इति तच्छब्दादेस्सन्निहितज्ञानिसुखपरत्व-त्यागे कारणाभावेन ज्ञानिसुखपक्षे साधकसद्भावाच्चानुकूल्येन गृह्य-माणं ज्ञानिसुखमेत्र। यदि तु द्वितीयः, तदाऽनुकृतेरानुकूल्येन

प्रकाशः

कृतिमत्त्वप्रतिपादकं "तमेव भान्तमनुभाति" इति वाक्यमित्यर्थः। अनुभानप्रतिपादकमिति वक्तव्ये, 'अनुकृति' इति वचनं तु, श्रुतौ भानस्य कृतिमात्रोपलक्षणतया, तमेव कुर्वन्तमनुकरोति सर्वमिति श्रुत्य-र्थमभिप्रेत्य सूत्रे 'अनुकृतेः' इत्युक्तत्वात् सौत्रहेत्वनुवादायेति ध्ये-यम्। 'तत्स्थः' उत्तरवाक्यस्थः। "न तत्र सूर्यो भाति" इत्यस्य सूर्याद्यप्रकाश्यत्वरूपलिङ्गप्रतिपादकवाक्यस्यादित्वेऽपि, तस्य पुंनपुंस-कसाधारण्यात्, वक्ष्यमाणदिशा युक्तिसूचनाय सूत्रोपात्तपुल्लिङ्गोपेतं "तं" इत्येतदेव गृहीतम्। **व्यवहितेति**। "एको वशी" इति वाक्योक्तेत्यर्थः। **सन्निहितेति**। "कथं नु तत्" इति वाक्यो-क्तेत्यर्थः। अस्पष्टत्वात् फलफलिभावं स्वयमेवाह—**यद्याद्य इति**। उत्तरवाक्यगततच्छब्दो व्यवहितेश्वरपर इति पक्ष इत्यर्थः। **सा-धकसद्भावादिति**। सन्निहितपरत्वरूपेत्यर्थः। **द्वितीय इति**। आ-नुकूल्येन गृह्यमाणपर इत्यर्थः।

चन्द्रिका

गृह्यमाणनिष्ठत्वेन ब्रह्मपक्षे साधकसद्भावात् तेनैव कारणेन "तदेतत्" इति तच्छब्दादेस्सान्निहितज्ञानिसुखपरत्वाभावेन ज्ञानिसुखपक्षे साधकाभावाच्चानुकूल्येन गृह्यमाणं ब्रह्मैव ॥

पूर्वपक्षस्तु—इदमानुकूल्येन गृह्यमाणं ज्ञानिसुखमेव, न तु ब्रह्म, "तद्विजानीयां" इति तच्छब्देन,

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।

इति प्रकृतसुखपरामर्शात् । न च—

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।

इति ब्रह्मप्रकरणात् अनिर्देश्यत्वादिलिङ्गाच्च तत्सुखं ब्रह्मेति वाच्यं,

प्रकाशः

पूर्वपक्षटीकायां यथाभाष्यं "तद्विजानीयां" इति तच्छब्दस्य प्रकृतसुखपरत्वमनुक्त्वा "तदेतत्" इति वाक्यस्य प्रकृतज्ञानिसुखपरत्वसमर्थनात् "तदेतत्" इत्यादिवक्ष्यमाणन्यायविवरणरीत्या "तद्विजानीयां" इति तच्छब्दस्य प्रकृतसुखपरत्वोक्तिपूर्वं तां विवृणोति—**इदमित्यादिना** । आद्यचिन्ताहेतुत्वव्यक्तिपूर्वं द्वितीयाचिन्तां प्रपञ्चयन्, "न च सुखश्रुतिर्विष्णावपि सावकाशा" इत्यादिटीकां सोपपत्तिकं व्यनक्ति—**न चेति** । 'ते वक्ष्यामि' इति नचिकेतसं प्रति यमस्य वाक्यम् । यथा "अत्ता" इत्यत्र "नैवेह किञ्चनाग्र आसीत्" इति ब्रह्मप्रकरणात् सर्वात्तृत्वलिङ्गाच्चादितिर्ब्रह्म, तद्वदिति भावः ।

चन्द्रिका

प्रकरणात् लिङ्गाच्च "तदेतत्" इति सर्वनामश्रुतेर्बलवत्त्वात्, तस्य च

........................एकं रूपं बहुधा यः करोति ।

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

इति प्रकृतज्ञानिसुखपरत्वात् । न च तत्रेश्वरोऽपि प्रकृत इति वाच्यं, तस्य पुल्लिङ्गेन प्रकृततया तत्परत्वे तदेतच्छब्दयोः पुल्लिङ्गत्वापातात् । पूर्वाधिकरणे "तस्मिन्यदन्तः" इत्यत्र तच्छब्दस्य सन्नि-

प्रकाशः

'श्रुतेः' इति जात्येकवचनम् । श्रुत्योरित्यर्थः । "शब्दादेव" इत्यत्र वक्ष्यमाणादिशा जात्या प्राबल्यादित्यर्थः । अस्तु श्रुतिरीश्वरपरेत्यत आह—**तस्य चेति** । सर्वनाम्न इत्यर्थः । "एकं रूपं" इत्याद्यंशोक्तिः सावकाशत्वशङ्कोत्थानाय । **ज्ञानिसुखपरत्वादिति** । एतेन "तदेतत्" इत्यस्य ज्ञानिसुखपरत्वेऽपि तद्वाक्योक्तमपरामृश्य "तद्विजानीयां" इति तच्छब्दः प्राकरणिकब्रह्मपर एव किं न स्यादिति चोद्यं प्रत्युक्तम्, दुर्बलात्प्रकरणात् सर्वनामश्रुतेः सन्निहितपरत्वस्वारस्यभङ्गायोगादिति । ननु श्रुतिस्सावकाशा चेल्लिङ्गप्रकरणाभ्यां बाधार्हैवादित्यादिश्रुतिरिवेत्यतः सर्वनामश्रुतिसावकाशत्वशङ्कानिरासपरां "न च वाच्यं भगवतोऽपि" इत्यादिटीकां व्यनक्ति—**न च तत्रेति** । "नपुंसकसुखशब्देनाप्रकृतस्य 'तत्' इत्यादिपरामर्शायोगात्" इति टीकायां 'नपुंसक' इत्युक्तिसूचितां पुल्लिङ्गत्वापातादिति युक्तिमुक्त्वा, "सम्भवत्समीप" इति वाक्योक्तयुक्तिमाह—**पूर्वाधिकरण इति** ।

चन्द्रिका

हिताकाशत्यागेन पुण्डरीकपरत्वायोगवदिहापि सन्निहितज्ञानिसुख-त्यागेन व्यवहितेश्वरपरत्वायोगाच्च। "तेषां सुखम्" इति सुख-शब्देन प्रकृतज्ञानिसुखस्यैव "परमं सुखं" इत्यनेन प्रत्यभिज्ञानाच्च। न च पूर्वाधिकरणे विधेयात्मापेक्षया एतच्छब्दस्य पुल्लिङ्गतावदिहापि विधेयसुखापेक्षया नपुंसकलिङ्गमिति युक्तं, तदेतच्छब्दयोर्मध्ये एक-स्योद्देशकत्वावश्यम्भावेन द्वयोर्नपुंसकलिङ्गत्वायोगात्। अत एव टीकायां "तदित्यादि" इत्यादिशब्दः। यदानिर्देश्यं परमं सुखं तदेतत्परमात्मनो रूपमिति नपुंसकलिङ्गनिर्वाहे च रूपशब्दाध्या-हारः स्यात्। अध्याहारेण लिङ्गनिर्वाहे च "प्रास्मा अग्निं" इत्यत्र पशुशब्दाध्याहारेणास्मैशब्दस्य पुल्लिङ्गनिर्वाहान्मेषीपरत्वं स्यात्।

प्रकाशः

एतेन "पूर्वाधिकरणन्यायेन" इति पूर्वोक्तं विवृतं बोध्यम्। ईश्वरोऽपि "नित्यो नित्यानां" इति सन्निहित इति प्रत्युक्तं चिन्ताव्याख्यानप्र स्तावे। टीकास्थसुखपदसूचितां युक्तिमाह—तेषामिति। टीकायां"—'तत्' इत्यादिपरामर्शायोगात्" इत्यादिपदोक्तिस्वारस्यं शङ्कापूर्वं व्य नक्ति—न च पूर्वेति। एतेन "पूर्ववैषम्येण वा" इति प्रागुक्तं विवृतं बोध्यम्। सिद्धान्त्यभिमतलिङ्गनिर्वाहमाशङ्क्य निराह—यदिति। **प्रास्मा अग्निमिति।** विवृतमधिकरणशरीरमाकाशाधिकरणे। तथा च यदि रूपशब्दाध्याहारेण नपुंसकलिङ्गनिर्वाहस्तदा "प्रास्मा अग्निं भरता" इति वाक्ये पशुशब्दाध्याहारेण 'प्रास्मै पशवे' इति

चन्द्रिका

तच्च नेत्युक्तं नवमे । न चानुकृत्यादिहेतुभिरानुकूल्येन गृह्यमाणस्य ब्रह्मता, अनुकृतिवाक्यस्थस्य "तमेव" इति तच्छब्दस्य पुल्लिङ्गत्वेनेश्वरपरतयाऽऽनुकूल्येन गृह्यमाणपरत्वाभावात् । तदेतदभिप्रेत्योक्तं न्यायविवरणे "—"तदेतदिति मन्यन्ते, कथं नु तद्विजानीयां" इति "तेषां सुखं शाश्वतं" इत्युक्तज्ञानिसुखपरामर्शः" इति, भाष्ये च "परमात्मैवानिर्देश्यसुखरूपः" इति । तस्मात् "तदेतत्" इत्यादौ तत्पदं सन्निहितपरप्रातिपदिकानुरोधात्, प्रत्ययार्थभूतलिङ्गानुसारात्,

प्रकाशः

मेष्यामपि लिङ्गनिर्वाहसम्भवेन अध्याहारनिरासपराधानेष्टयधिकरण-सिद्धान्तहानिः स्यादित्यर्थः । निरवकाशलिङ्गबलेन श्रुतेस्सन्निहित-परत्वत्यागो युक्त इत्याशङ्कानिरासाय द्वितीयचिन्ताहेतुत्वं व्यञ्जयन् तृतीयचिन्तां सिद्धान्तहेत्वाशङ्कासमाधानाभ्यां विशदयति—**न चेति** । **ईश्वरपरतयेति** । अत एव सिद्धान्तटीकायां "न च मन्तव्यं" इत्यादिना एतदाशङ्क्य समाधीयत इति भावः । "तमेव" इति तच्छब्दस्येश्वरपरत्वे "तत्र, तस्य" इति वाक्ये तच्छब्दयोरपि तथात्वमिति भावेन'—"तमेव" इति तच्छब्दस्येश्वरपरतया' इत्युक्तम् । भाष्यविवरणपराऽपि टीका न्यायविवरणविवरणपराऽपीति भावेनाह—**तदेतदिति** । **भाष्ये चेति** । सिद्धान्तीयभाष्य इत्यर्थः । तथा च तत्प्रतिभटपूर्वपक्षे ज्ञानिसुखमेवानिर्देश्यसुखमिति वक्तव्यमिति भावः । "अतो ज्ञानिसुखस्यैव" इत्याद्युपसंहारटीकां व्यनक्ति—**तस्मादिति** ।

चन्द्रिका

समभिव्याहृतसुखपदानुसाराच्च सन्निहितज्ञानिसुखपरमिति, आनुकूल्येन गृह्यमाणत्वमपि तस्यैवेति ॥

सिद्धान्तस्तु—उपसंहारे "न तत्र सूर्यो भाति न चन्द्रतारकं" इति सूर्याद्यप्रकाश्यत्वं, "तमेव भान्तमनुभाति सर्वं" इति सूर्यादिप्रकाशहेतुत्वं, "तस्य भासा सर्वमिदं विभाति" इति सर्वजगत्प्रकाशकत्वं चोक्तम् । तानि च भाष्योक्तश्रुत्यादिभिः ब्रह्मण

प्रकाशः

बाधकाभावादित्यर्थः । एतेन चिन्तास्थपूर्वपक्षकोटीनां हेतुहेतुमद्भावोऽप्युपसंहारेण विवृतः ॥

"अनुकृतेस्तस्य च" इति सूत्रोपात्तश्रौतोपसंहारस्थलिङ्गैः श्रौतोपसंहारस्थानेकतच्छब्दप्रातिपदिकस्वारस्यानुरोधाच्चानुकूल्येन गृह्यमाणो विष्णुरेवेति, 'तदेतत्' इति सर्वनाम्नो व्यवहितेश्वरपरत्वं न्याय्यमिति भावेन सिद्धान्तटीकां विवृण्वन्,"—"तमेव भान्तमनुभाति सर्वं" इति वाक्यशेषे" इत्यादिटीकां तावद्विवृणोति—**उपसंहार इति।** टीकायामाद्यसूत्रे यथाभाष्यं लिङ्गद्वयमात्रोपादानेऽपि द्वितीयसूत्रे "किञ्च न तत्र सूर्यो भाति" इत्याद्युक्तेः बोधसौकर्याय लिङ्गत्रयमपि एकत्रैवोक्तम । **श्रुत्यादिभिरिति।** "अहं तत्तेजोरश्मीत्, न तद्भासयते सूर्यः, यदादित्यगतं तेजः" इत्यादिभिरित्यर्थः । श्रुतौ 'तेजः' सर्वजगत्प्रकाशकं, 'रश्मीत्' रश्मिप्रेरकमिति सर्वजगत्प्रकाशकत्वसूर्यादिप्रकाशहेतुत्वयोरुक्तया तयोः श्रुत्यन्तरसिद्धत्वेऽपि

चन्द्रिका

एव। "न तत्र सूर्यः" इत्यादिना च "कथं नु तद्विजानीयां" इत्यादिसन्निहितवाक्यप्रकृतमानुकूल्येन गृह्यमाणमेवोच्यत इत्यानुकूल्येन गृह्यमाणत्वं ब्रह्मण एव। ननु यद्यपि "नित्यो नित्यानां" इत्यादिकमीश्वरवाक्यं "न तत्र सूर्यो भाति" इत्यस्य व्यवहितं, "कथं नु तद्विजानीयां" इत्यादिकं तु सन्निहितम्। तथाऽपि "तमेव भान्तं" इत्यत्र 'तं' इति शब्दस्तावत् पुल्लिङ्गत्वात्पुल्लिङ्गप्रकृतेश्वरपर एवेति, तदेकार्थत्वाय "न तत्र सूर्यः, तस्य भासा" इत्यादिकमपि तत्परमेवेति सूर्यादिप्रकाशहेतुत्वादिकं नानुकूल्येन गृह्यमाणगतमिति चेन्न, "किमु भाति न भाति वा"

प्रकाशः

सूर्याद्यप्रकाश्यत्वस्य श्रुत्यन्तरसिद्धत्वं भाष्येऽनुक्तत्वादूह्यम्। स्मृतौ 'मामकं' इत्यस्य मदधीनं मदीयं चेति व्याख्यानेन लिङ्गद्वयस्य स्मृतिसिद्धं ब्रह्मधर्मत्वं, "न तद्भासयते" इत्यनेन च सूर्याद्यप्रकाश्यत्वस्य स्मृतिसिद्धं तथात्वमिति ध्येयम्। ननूक्तं नैतान्यानुकूल्येन गृह्यमाणनिष्ठानीति, तत्राह—**न तत्रेति**। "न च मन्तव्यं" इत्यादिटीकां विवृण्वन् पूर्वोक्तलिङ्गविरोधशङ्कां विस्तरेणानूद्यापाकरोति—**नन्विति**। ननु इयं शङ्का पूर्वपक्षावसर एव कुतो न सम्यगुपपादितेति चेत्, मैवं, "न तत्र" इत्यादेः सान्निहितपरत्वानवकाशत्वयोरुक्तचैतद्बाधकत्वेनोपपादनस्यात्रैव सङ्गतत्वात्, अनेकप्रातिपदिकभङ्गादिरूपदूषणस्य सुखबोधत्वाच्चात्रोपपादितेति।

चन्द्रिका

इत्यत्रोक्तस्य दुर्ज्ञेयस्यैव "न तत्र सूर्यो भाति" इत्यत्र प्रत्यभिज्ञानात् । गुणभूतप्रत्ययार्थलिङ्गानुग्रहाय प्रधानभूतानां 'तत्र, तमेव, तस्य' इत्यनेकेषां प्रातिपदिकानां स्वतः प्राप्तसन्निहितपरत्वत्यागायोगाच्च । पाशमन्त्रादौ हि प्रातिपदिकानुसारेण प्रत्ययास्वारस्यमाश्रितं, तथा "प्रयाजशेषेण हवींष्यभिघारयति" इत्यादौ प्रयाजशेषप्रातिपदिकस्वारस्याय तृतीया व्यत्ययेन द्वितीयार्था स्वी-

प्रकाशः

टीकोक्तं दुर्ज्ञेयत्वप्रत्यभिज्ञानमुपलक्षणमिति भावेनाह—**गुणेति** । यत्तु आद्यस्य चतुर्थपादे "बहुषु बहुवचनम्" इत्यत्र कैय्यटे मञ्जर्यां च, स्वार्थद्रव्यलिङ्गसङ्ख्याकर्मादिकारकविशेषाश्चेति पञ्चकं प्रातिपदिकार्थ इत्युक्तं, तत्तु "लिङ्गविशेषनिर्देशात्" इति षष्ठाद्यपादीयनये मीमांसकैः विभक्तिविकाराणां टाबादीनामन्वयव्यतिरेकाभ्यां लिङ्गाभिधायित्वदृष्टेरयुक्तत्वात् 'प्रत्ययार्थ' इत्युक्तम्* । न्यायसिद्धोऽयमर्थ इत्याह—**पाशेति** । उक्तं पाशाधिकरणशरीरं "गुहां" इत्यत्र । अत्र यद्यपि प्रधानभूतकर्मकारकरूपप्रत्ययार्थानुग्रहाय सङ्ख्यानादरो न प्रातिपदिकस्वारस्यानुग्रहायेत्यपि सुवचं, तथाऽपि,

> प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः ।
> उभयोः प्रकृते भावान्नोत्कर्षोऽस्यावकल्पते ॥

इत्युक्तत्वादेवमुक्तम् । अत एवोदाहरणान्तरं—**तथेति** । चतुर्थे "अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदस्स्यात्" इत्याद्यपादीयत्रयोदशाधिकरणे "प्रयाजशेषेण हवींष्यभिघारयति" इति वाजपेयगतं वाक्यमुदाहृत्य, किं हविस्संस्कारार्थमभिघारणमुत प्रया-

* 'यत्तु' इत्यादि एतदन्तवाक्यं क्वचित्पुस्तकेषु नोपलभ्यते । 'तत्तु' इत्येतत् 'तस्य' इति शोध्यम् ।

चन्द्रिका

कृता, न तु तृतीयानुसारेण प्रातिपदिकस्य लक्षणा । एवञ्च—

प्रयाजशेषेणेतिवत् प्रकृत्यर्थानुसारतः ।

प्रत्ययस्य स्वरसताभङ्ग एवात्र युज्यते ॥

उपपत्स्येते च सिद्धान्तरीत्या "तदेतत्" इत्यादेः "कथं नु तत्" इत्यादेश्चेश्वररूपैकार्थपरत्वे 'तं' इत्यस्य पुल्लिङ्गत्वसान्निहितपरत्वे ।

प्रकाशः

जशेषप्रतिपत्तिरिति संशये, उपयोक्ष्यमाणसंस्कारस्य उपयुक्तसंस्कारापेक्षयाऽभ्यर्हितत्वात्, द्वितीयातृतीयाभ्यां प्रधानोपसर्जनभावावगमाच्च न्यायतः शब्दतश्च हविस्संस्कारार्थमिति प्राप्ते, शेषस्य प्रतिपत्त्यपेक्षत्वात् तादर्थ्यादभिघारणं दृष्टार्थं, हविःसंस्कारोऽनपेक्षितोऽदृष्टं कल्प्येत, न च दृष्टे सत्यदृष्टकल्पनं न्याय्यमिति, प्रयाजशेषं हविष्षु क्षारयेदिति वाक्यार्थवर्णनेन प्रतिपत्तिरिति सिद्धान्तितम् । तत्र यथा प्रातिपदिकस्वारस्यानुग्रहाय प्रत्ययस्वारस्यत्यागः, तथाऽत्रापीत्यर्थः । अत्र वक्तव्यो विशेषो "न सङ्ख्योपसङ्ग्रहात्" इत्यत्र वक्ष्यते । उक्तं सङ्गृह्णाति–एवञ्चेति । अत्रेति । 'तं' इति शब्द इत्यर्थः । अभ्युपेत्येदमुक्तम् । वस्तुतस्तु—'यस्यैवं सुखं रूपं तत्रेति वाक्ययोजनोपपत्तेश्च' इति टीकोक्तरीत्या प्रत्ययार्थास्वारस्यमपि नेत्याह—उपपत्स्येते चेति । पुल्लिङ्गत्वेति । रूपशब्दापेक्षया मध्ये 'तत्' इत्यादेर्नपुंसकत्वेऽपि "एको वशी" इत्यादिना सर्वत्रेश्वरस्य पुल्लिङ्गशब्दैः प्रकृतत्वेन तत्परामर्शितया पुंस्त्वं, आनुकू-

चन्द्रिका

एवञ्च "कथं नु तत्" इत्यादेः सन्निहितज्ञानिसुखपरत्वाय "तमेव भान्तं" इत्यादेर्व्यवहितेश्वरपरत्वं वा, "तमेव भान्तं" इत्यादेः सन्निहितानुकूलगृह्यमाणपरत्वाय "कथं नु तत्" इत्यादेर्व्यवहितेश्वरपरत्वं वेति विशये, यद्यप्याद्यपक्षे 'तत्' इत्यादेः सन्निहितपरत्वं, नपुंसकलिङ्गत्वं, 'तं' इत्यस्य पुल्लिङ्गत्वं च युज्यते, तथाऽपि द्वितीयपक्ष एव युक्तः, यतः—

बलवानुपसंहारस्तद्धृश्या तदिति श्रुतिः ।
कथं पश्येत्तद्विरुद्धपूर्ववाक्यावबोधितम् ॥

प्रकाशः

त्वेन गृह्यमाणपरत्वाच्च सन्निहितपरत्वं चेत्यर्थः । स्यादेवं, यदि 'तत्' इत्यादेरीश्वरपरत्वमेव भवेत्, तदा टीकारीत्या यस्येश्वरस्यैवं सुखं रूपं तत्र तमित्यादौ पुल्लिङ्गत्वोपपत्तिः । तदेवायुक्तं, व्यवधानात्, नपुंसकलिङ्गत्वविरोधात्, सुखश्रुतिकृतप्रत्यभिज्ञाविरोधाच्चेति । तथा 'तं' इत्यस्य व्यवहितेश्वरपरत्वे पुंस्त्वोपपत्तेश्चोक्तत्वादित्यतो "न च वक्तव्यं, समीपस्थपरामर्शं विहाय कथञ्चिदेव दूरस्थग्रहणे कारणाभाव इति" इत्यादिटीकोक्तमेव विचारपूर्वं साधयति— **एवञ्चेति** । 'यतः' इत्यस्य श्लोकेनान्वयः । 'कथं' इत्याक्षेपः । 'यतस्तद्विरुद्धं न पश्यति ततो युक्तः' इति पूर्वेणान्वयः । उपसंहारबलवत्त्वं तद्बीजं च समन्वयसूत्र एव प्रतिपादितं, आश्रितं च तत्प्राबल्यं "प्रथमेऽश्रवणात्" इत्यत्र तृतीयाद्यपाद इति भावः ।

चन्द्रिका

न हि "तदेतत्" इत्यादिश्रुतेः बलवदुपसंहारस्थाभिः 'तत्र, तमेव, तस्य' इत्यनेकप्रातिपदिकश्रुतिभिर्गृहीतायास्तदविरुद्धपूर्वप्रकृतेश्वरपरत्वे सम्भवति, तद्विरुद्धपूर्वप्रकृतज्ञानिसुखपरत्वं युक्तम्। किञ्च "न तत्र" इत्यस्य "एकं रूपं बहुधा यः करोति" इत्येतदतिदूरस्थं, "तदेतत्" इत्यस्य तु किञ्चिद्दूरस्थम्। तत्र 'तदेतत्' इत्यस्य किञ्चिद्दूरस्थपरत्वात् बिभ्यतो "न तत्र" इत्यादेरतिव्यवहितपरत्वात् कथं न भीतिः। न चेश्वरपरत्वे 'तदेतत्' इति नपुंसकलिङ्गायोगः, व्यत्ययादिनाऽपि तत्सम्भवात्।

प्रकाशः

श्लोकं व्याचष्टे—**न हीति**। **गृहीताया इति**। ताश्च भगवद्धर्माणां सूर्याद्यप्रकाश्यत्वादीनां धर्मिसमर्पिका इति भावः। "दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिः" इति टीकोक्तं युक्त्यन्तरमिति भावेन तद्व्याचष्टे—**किञ्चेति**। ननूक्तं तदित्यादेरीश्वरपरत्वे नपुंसकलिङ्गविरोधः, व्यवहितपरामर्शः, सुखश्रुतिप्रत्यभिज्ञाविरोधश्चेत्यतः सर्वं क्रमेण परिजिहीर्षुः, "न च परमात्मनो नपुंसकसुखशब्देनाप्रकृतत्वात्तदेतादिति परामर्शायोगः" इति शङ्काटीकार्थं तावदनूद्य स्वयमेकं समाधिं तावदाह—**न चेश्वरपरत्व इति**। **व्यत्ययादिनेति**। 'तमेतं' इति वक्तव्ये 'तदेतत्' इति च्छान्दसो लिङ्गव्यत्ययो वा, "सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति सूत्रेण 'तमेतं' इत्यत्र सुपां सुलुकि सति तमेतामिति पदयोः प्रा-

चन्द्रिका

अपिच विनैव व्यत्ययादिकं लिङ्गं युक्तं, "यतो वाचो निवर्तन्ते, एषोऽस्य परम आनन्दः" इत्यादौ प्रसिद्धं यदनिर्देश्यं परमं सुखं, तदेतत् ब्रह्मणो रूपमिति तच्छब्दस्य सुखपरत्वात्। एतच्छब्दस्य च "एकं रूपं बहुधा यः करोति" इति प्रकृतेश्वररूपपरत्वात्।

प्रकाशः

तिपादिकनिर्देशमात्रं वा, स्त्रीलिङ्गपुल्लिङ्गानुगतं सामान्यमेव नपुंसक लिङ्गमिति वैयाकरणोक्तमर्यादया पुल्लिङ्गनिर्दिष्टस्यापि नपुंसकलिङ्गेन परामर्शो युक्त इति वा तत्सम्भवादित्यर्थः। व्यत्ययादिकल्पकस्य निरवकाशवाक्यशेषस्थलिङ्गबहुत्वस्य सत्त्वादिति भावः। उक्तं च "नपुंसकमनपुंसकेनैकवच्च" इति सूत्रकैयटे "स्थितिर्नपुंसकं, सा च सर्वत्र विद्यत इति स्थितिरूपत्वेनैव स्त्रीपुंसयोर्विवक्षायां सिद्धः स्त्रीपुंसयोर्नपुंसकप्रयोगः" इति। इदानीं "यदनिर्देश्यं परमं सुखं" इत्यादिटीकोक्तमेव समाधिं व्यनक्ति—अपि चेति।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान्...................॥

इति तैत्तिरीये सुखस्य वागाद्यगोचरत्वेनानिर्देश्यत्वं श्रूयते। वाजसनेये "एष ब्रह्मलोकः सम्राडिति होवाच" इति प्रकृत्य "एष परम आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति ब्रह्मानन्दस्य परमत्वं सिद्धमिति, तदनुवादो "यदनिर्देश्यं" इति टीकायां दर्शित इत्यर्थः। "अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं

चन्द्रिका

एवं च यथा—"तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा" इत्यत्र, सर्वनाम्ना परामर्शः तस्यैवातोऽवकल्पते ।

प्रकाशः

ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षते" इत्यादिरादिपदार्थः। तद्दृष्टान्तेनोपपादयति—**एवञ्च यथेति**। चतुर्थेऽध्याये "एकानिष्पत्तेस्सर्वं समं स्यात्" इत्याद्यपादीयाष्टमाधिकरणे "तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं" इत्युदाहृत्य किमामिक्षायागेनैव दध्यानयनं प्रयुज्यते अथ वाजिनयागेनापीति संशये, वैश्वदेवयागस्यामिक्षाद्रव्यकत्वात्तस्याश्च घनीभावात् रूपभेदेन मधुराम्लादिरसभेदेन च क्षीरादन्यत्वात्, तथा च दध्यानयनस्यासंयुक्तस्यैव विधानेन केवलं सामर्थ्यलिङ्गेनामिक्षार्थताया वक्तव्यत्वात्, तादृशसामर्थ्यस्य वाजिनेऽपि सत्त्वादुभयप्रयुक्तमानयनमिति प्राप्ते, आस्तां तावदामिक्षापदं, "सा वैश्वदेवी" इति तच्छब्दपरामृष्टस्य हविष्ट्वात्पूर्ववाक्ये आनयतेर्द्विकर्मकत्वेन प्रथमेन कर्मणा दध्ना द्वितीयकर्मणः पयसो व्याप्यमानत्वेन प्रधानतया पयस एव तच्छब्दपरामृष्टत्वात् पय एव देवतासम्बन्धाद्धविः, तथा च मन्त्रः "जुषतां युग्यं पय इति पय एव घनीभूतमामिक्षा" इति, आमिक्षापदं नित्यानुवादः, तत्सामानाधिकरण्यात्सेति स्त्रीलिङ्गं, रसभेदादिकमन्यप्रयुक्तमिति वैश्वदेवयागप्रयुक्तं दध्यानयनमिति सिद्धान्तितम्। अत्रत्येन न्यायेनाष्टमस्य द्वितीयपादे "आमिक्षोभयभाव्यत्वादुभयविकारः स्यात्" इति

चन्द्रिका

इत्युक्तत्वेन तच्छब्दस्य पयःपरामर्शकत्वेऽपि आमिक्षाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता, तथेहाप्येतच्छब्दस्येश्वरपरामर्शकत्वेऽपि रूपशब्दसामानाधिकरण्यात् नपुंसकलिङ्गता। तदुक्तं न्यायविवरणे—"यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति, तदेतत् स्वरूपमिति मन्यन्ते" इति। काठकभाष्ये तु 'तदेतदेव भगवद्रूपं परमं सुखं' इति सुखं विधेयमित्युक्तम्। तत्र 'तत्' "गुह्यं ब्रह्म सनातनं" इत्युपक्रान्तं 'एतत्' "एकं रूपं" इति मध्ये उक्तं ब्रह्मणो रूपं परमं

प्रकाशः

चतुर्थेऽधिकरणे,

> पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः।
> दध्ना हि नीयमानेन तदेव व्याप्यते पयः॥
> कर्मतोऽपि प्रधानत्वं तस्य स्यात्सम्प्रदानवत्।
> सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते॥

इत्युक्तं शास्त्रदीपिकायाम्। तथा च तत्र यथा पयःपरत्वेऽपि स्त्रीलिङ्गता, तद्वदत्रापीत्यर्थः। नन्वेवमुद्देश्यविधेयवचनव्यत्ययेन लिङ्गसमर्थनं भाष्यानुक्तं, काठकभाष्यविरुद्धं च, तत्र 'तदेतदेव भगवद्रूपं परमं सुखं, ज्ञानिसुखं तु विप्लुणमात्रम्' इत्युक्तेरित्यतो योजनान्तरमेतदिति भावेन टीकोक्तयोजनस्य मूलमाह—**तदुक्तमिति**। काठकभाष्योक्तयोजनायां तदेतच्छब्दयोरर्थं वदन्नेव नपुंसकोपपत्तिमाह—**काठकभाष्ये त्विति**।

चन्द्रिका

सुखमिति तदेतच्छब्दयोर्ब्रह्मपरत्वान्नपुंसकतेति द्रष्टव्यम् । नापि व्यवहितपरत्वं, "तेषां सुखं" इति वाक्यादुत्तरस्मिन् "नित्यो नित्यानां चेतनश्चेतनानां" इति वाक्ये ईश्वरस्य सन्निहितत्वात् । अस्तु वा "तेषां सुखं" इति वाक्यात् पूर्वस्मिन् "एको वशी" इत्यादिव्यवहितवाक्ये प्रकृतेश्वरपरामर्शः, तथाऽपि न दोषः,

सन्निकृष्टमयोग्यं चेद्योग्यं दूरेऽपि संस्थितम् ।
गृह्यते सन्निधानाद्धि योग्यतैव बलीयसी ॥

उक्तं हि जैमिनिसूत्रे "आनन्तर्यमचोदना" इति ।

प्रकाशः

"तदेतत्' इत्यादेर्व्यवहितपरामर्शित्वदोषं द्वेधा परिहरति—**नापीत्यादिना । सन्निहितत्वादिति ।** एतेन "—"चेतनश्चेतनानां" इत्यादौ परमात्मनोऽपि प्रकृतत्वात्" इति टीकायां 'प्रकृतत्वात्' सन्निहितत्वादित्यर्थो दर्शितः । "दूरोक्तस्यापि समीपोक्तपरित्यागेन ग्रहणम्" इति टीकावाक्यानुरोधेन पक्षान्तरमाह—**अस्तु वेति** । कुत इत्यतः "एतदुभयस्य ज्ञानिसुखेऽसम्भवात् परमात्मनि सम्भवात् दूरोक्तस्यापि" इत्यादिटीकार्थं सङ्गृह्य हेतुमाह—**सन्निकृष्टमिति।** श्लोके हिशब्दो हेतौ । यस्मात्तस्मान्न दोष इत्यर्थः। सान्निधितो योग्यताया बलवत्त्वं मीमांसकसंमत्या द्रढयति—**उक्तं हीति** । तृतीयस्याद्यपादे "आनन्तर्यमचोदना" इति उपान्त्याधिकरणे "हस्ताववनेनिक्ते उलपराजिं स्तृणाति" इति दर्शपूर्णमासगतं "मुष्टीकरोति,

चन्द्रिका

वार्तिके च—

यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः ।

अर्थतो ह्यसमर्थानां आनन्तर्यमकारणम् ॥

इति। अयोग्यं च ज्ञानिसुखं, अनिर्देश्यत्व–निरुपपदपरमत्व–सूर्यादिप्र-

प्रकाशः

वाचं यच्छति, दीक्षितमावेदयाति" इति ज्योतिष्टोमगतं वाक्य-मुदाहृत्य चिन्तितम् । हस्तावनेजनं हस्तसंस्कारार्थं, मुष्टीकरण-वाग्यमने मनःप्रणिधानार्थं, तेन त्रयमपि तावत्सामर्थ्यरूपाल्लिङ्गा-त्करिष्यमाणकर्माङ्गम् । तत्किमनन्तरयोरुलपराज्यास्तरण–दीक्षितावेद-नयोरेवाङ्गमुत सर्वकर्माङ्गमिति संशये, तत्रानन्तर्यादेकवाक्यत्वाद-वान्तरप्रकरणाद्वा तन्मात्राङ्गत्वे प्राप्ते, लिङ्गप्रकरणाभ्यां प्राकर-णिकसर्वकर्मार्थत्वप्रतीतेरानन्तर्यशब्दितपाठसान्निधिरूपक्रमस्य दुर्बल-त्वात् सर्वकर्माङ्गतेति सिद्धान्त इति । वेद्यामास्तरीतुं सम्पादिततृण-विशेषा उलपराजयः । दीक्षितावेदनप्रकारश्चैवं श्रुतः "अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह, देवेभ्य एवैनं प्राह, त्रिरुच्चैरुभ-येभ्य एवैनं देवमनुष्येभ्यः प्राह" इति । सूत्रार्थस्तु—'आन-न्तर्यं' सन्निधानं, 'अचोदना' निमित्तं न भवतीति । योग्यता-बलवत्त्वस्य सूत्रे अप्रतीतेराह—**वार्तिके चेति** । अस्त्वेवं, ततः किमित्यत आह—**अयोग्यं चेति** । टीकायां "एतदुभयस्य ज्ञानिसुखे असम्भवात्" इति वाक्यशेषस्थलिङ्गद्वयमात्रासम्भवो-

चन्द्रिका

काशहेतुत्वादिनाऽन्वेतुम् । टीकायामपि

व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत् ।

इति व्यवधानोक्तिरभ्युपेत्यवादेन । अत एव "–"चेतनश्चेतनानां" इत्यादौ परमात्मनोऽपि प्रकृतत्वात्" इति टीकायां सन्निहितवाक्य एव प्रकृततोक्ता । यद्वा–"नित्यो नित्यानां" इत्यस्मादपि परस्मिन्

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम् ।

इत्यत्र प्रकृतेन ज्ञानफलेन शान्तिशब्दार्थेन सुखेन "नित्यो नित्यानां" इति वाक्योक्तस्याप्यात्मनो

प्रकाशः

क्तावपि "अनिर्देश्यत्वाद्ययोगाच्च" इत्युत्तरग्रन्थपर्यालोचनयाऽभिप्रेतानेकहेतूनाह—**अनिर्देश्यत्वेति** । आदिपदेन सूर्याद्यप्रकाश्यत्वजगत्प्रकाशकत्वयोर्ग्रहः । आद्यपक्षे पूर्वोत्तरटीकावाक्ययोर्विरोधमाशङ्क्योत्तरवाक्यस्य गतिमाह—**टीकायामपीति** । **टीकायामिति** । पूर्वमिति योज्यम् । "अस्तु वा" इत्युक्तद्वितीयपक्ष एव टीकाभिमत इति भावेन टीकास्थपूर्ववाक्यविरोधं निराकर्तुं तेन सान्निध्यलाभप्रकारमाह—**यद्वा–नित्यो नित्यानामिति** । एतेन टीकायां "–"चेतनश्चेतनानां" इत्यादौ परमात्मनोऽपि प्रकृतत्वात्" इत्युक्तिस्तु प्रकृतत्वमात्राभिप्राया, न तु सन्निहितत्वाभिप्रायेत्युक्तं भवति। एवञ्चेश्वरस्य व्यवहितत्वमुपेत्य "दूरस्थस्यापि योग्यतया परामर्शः" इत्युपरितनं टीकावाक्यं न विरुद्धं, नाप्यभ्युपगमवादेन नेत-

चान्द्रिका

व्यवहितत्वात् टीकायां सन्निधानाद्योग्यताया बलीयस्त्वोक्तिः । एतेनैव सुखशब्दैकत्वनिमित्तप्रत्यभिज्ञाऽपि निरस्ता । अस्य सुखस्यानिर्देश्यत्वादिभिर्ज्ञानिसुखात् भेदस्यैव भानात् । प्रत्युत ब्रह्मपक्ष एव 'तमात्मस्थं, तदेतत्' इति तच्छब्दैक्यकृता प्रत्यभिज्ञाऽस्तीति ॥

अत्र चाद्यसूत्रे 'तस्य' इत्यनेन समन्वेतव्यमानुकूल्येन गृह्यमाणमुच्यते, "तस्य भासा" इति वाक्यं च प्रतीकेनोपादीयते । तथा च 'तस्य'आनुकूल्येन गृह्यमाणस्य 'अनुकृतेः' सूर्यादितेजोभि

प्रकाशः

व्यमिति तात्पर्यम् । **व्यवहितत्वादिति** । एतदेव प्राचीनपक्षेऽस्वारस्यबीजं ध्येयम् । यदपि सुखश्रुतिकृतप्रत्यभिज्ञाविरोध इति, तदपि "अनिर्देश्यत्वाद्ययोगाच्च" इति टीकया निरस्तमिति भावेनाह—**एतेनेति** । एतच्छब्दार्थं व्यनक्ति—**अस्येति** ॥

सूत्रार्थस्य भाष्यादावस्फुटत्वात्समन्वेतव्याप्रतीतेश्च सूत्रार्थं वदन् क्रमं च सूचयति—**अत्रेति** । **वाक्यं चेति** । तन्त्रावृत्त्योरन्यतराश्रयणेनेति भावः । एतेन यदुक्तं श्रुतप्रकाशे 'तस्येत्यस्य प्रतीकत्वे "यदेव विद्ययेति हि" इतिवादितिशब्दः स्यादिति, तन्निरस्तं, समन्वेतव्यपरत्वस्यापि सत्त्वेनेतिशब्दाभावोपपत्तेः । "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि" "अस्यैव चोपपत्तेरूष्मा" इत्यादौ तदभावाच्चेति । आद्यपक्षेऽन्वयपूर्वमर्थमाह—**तथा चेति** । किमिदं सूर्यादिभिस्तदनुकरणमित्यतस्तात्पर्यमाह—**सूर्यादीति** ।

चन्द्रिका

रनुकरणात्, सूर्यादितेजसां तदधीनप्रकाशत्वात्, "तस्य भासा" इति वाक्येन सर्वस्य जगतस्तत्प्रभाप्रकाश्यत्वेनोक्तेश्चेति सूत्रार्थः। अत एव टीकायां "एतदधीनप्रकाश" इति, "तस्य भासा" इति "चोक्तम्। सूत्रे चशब्दस्तु, द्वितीयसूत्रस्याऽऽद्यव्याख्याने सूर्याद्यप्रकाश्यत्वरू-

प्रकाशः

"तमेव भान्तमनुभाति सर्वं" इति वाक्यशेषे 'सर्वं' सूर्यादितजोजातं कर्तृ, 'तं भान्तमनु' तदिच्छानुरोधेन भाति, न तु स्वातन्त्र्येणेत्युक्त्या सूर्यादितेजसां तदधीनप्रकाशत्वं लब्धमित्यर्थः। प्रतीकग्रहणपक्षेऽर्थमाह—**तस्येति**। सर्वं जगत्तस्य भासा विभातीत्युक्त्या तत्प्रकाश्यत्वं सर्वस्योक्तमिति, सूत्रे 'तस्य' इति प्रतीकेन तदर्थो हेतुत्वेन अभिमत इत्युक्तं भवति। **अत एवेति**। 'तस्य' इत्यस्य समन्वेतव्यपरत्वस्यापि सत्त्वादेव टीकायां "तमेव भान्तमनुभाति सर्वं" इति वाक्यशेषे सूर्यादीनामेतदधीनप्रकाशश्रवणादित्येतच्छब्दप्रयोगः, "तस्य भासा" इति सर्वजगतः तत्प्रकाश्यत्वप्रतीतेश्चेत्युक्तमित्यर्थः "तस्य च" इति चशब्दार्थं व्यनक्ति—**सूत्र इति**। "अपि स्मर्यते" इत्यस्य "यदादित्यगतं तेजः" इति स्मृतौ प्रागुक्तलिङ्गद्वयं विष्णुनिष्ठतया स्मर्यतेऽपीत्येका व्याख्या। 'मामकं' इत्यस्य मदधीनं मदीयं चेत्यर्थात् मत्तेजएवाऽऽदित्यादिस्थितं तत्तेजःप्रेरकत्वेनाखिलं भासयतीति व्याख्यानात्। तथा "न तत्र सूर्यो भाति" इत्यनेन यदानुकूल्येन गृह्यमाणस्य

चन्द्रिका

पानुक्तहेतुसमुच्चये, द्वितीयव्याख्याने सर्वजगत्प्रकाशकात्मत्वरूपोक्त-हेतुसमुच्चये। तेनास्याधिकरणान्तरत्वे चशब्दायोग इति यत्कैश्चिदुक्तं तन्निरस्तम्। यद्यप्यत्र "अनुभाति" इति श्रुत्यनुसाराद् सूत्रेऽप्यनुभानादिति वक्तव्यं, तथाऽपि सूर्यादिकृतं यदन्यदपि तपनादि तदपीशाधीनमिति दर्शयितुं 'अनुकृतेः' इत्युक्तम्। उक्तं हि भारते—

तापिनी पाचिनी चैव शोषिणी च प्रकाशिनी।
नैव राजन्रवेः शक्तिः शक्तिर्नारायणस्य सा ॥

इति। द्वितीये आद्यसूत्रोक्तहेतूनां विष्णैकनिष्ठत्वे श्रुतिस्मृती उक्ते। तत्र च

प्रकाशः

सूर्याद्यप्रकाश्यत्वमुक्तं, तच्च विष्णोरेव स्मर्यत इत्यपरा व्याख्या। तत्राद्यव्याख्यान इत्यर्थः। **सर्वजगादिति**। 'तस्य' इति प्रतीकग्रहणेन लब्धहेतोः कण्ठोक्तानुकृतिरूपहेतुना समुच्चयार्थ इत्यर्थः। **कैश्चिदिति**। पूर्वाधिकरणशेषत्वं वदद्भिरित्यर्थः। 'अन्यकृतीनामप्युपसङ्ग्रहार्थमनुकृतेरित्युक्तम्' इति तत्त्वप्रदीपानुरोधेन परिहारमाह—**तथाऽपीति**। 'भानश्रुत्याऽपि कृतिरुपसङ्गृहीता, भानपूर्वकत्वात् कृतेः' इति तत्त्वप्रदीपोक्त्या श्रुतावपि भानमुपलक्षणमितिभावः। ऐतरेयभाष्योदाहृतं वाक्यमाह—**उक्तं हि भारत इति**। **श्रुतिस्मृती इति**। न केवलं श्रूयते किन्तु स्मर्यतेऽपीति व्याख्यानादिति भावः। सूत्रे स्मृतेरेव प्रतीत्या कथं द्वयोरुक्तिरित्यतः तद्विशदयन्नेवं विन्यासे हेतुं चाह—**तत्र चेति**।

चन्द्रिका

"अहं तत्तेजः" इत्यादिश्रुतौ "यदादित्यगतं" इत्यादिस्मृताविव विवक्षितार्थो न स्पष्टः, यत्र तु "न तत्र सूर्यो भाति" इत्याथर्वणश्रुतौ स्पष्टः, तत्र विष्णुविषयत्वमद्याप्यसिद्धमिति स्मृतिः स्वशब्देनोक्ता, श्रुतिस्त्वपिशब्देन समुच्चिता । यद्यपि चात्रानुकूल्येन गृह्यमाणस्य विष्णुत्वरूपे प्रधानसाध्ये "तदेतत्प्रेयः, प्रियो हि ज्ञानिनोऽत्यर्थमहं" इत्यादिश्रुतिस्मृतिपरत्वेनेदं सूत्रं व्याख्यातुं शक्यं, तथाऽपि "प्रियो हि" इत्यादौ ज्ञानार्थं प्रार्थितत्वरूपस्यानुकूल्येन गृह्यमाणत्वस्यास्फुटत्वादाद्यसूत्रोक्तहेतूनां विष्णवेकनिष्ठत्वस्यावश्यसाध्यत्वाच्च तत्परतयैव भाष्यकृता व्याख्यातम् ॥

अन्ये तु—आथर्वणस्थं "न तत्र सूर्यः" इत्यादिकं विषयवाक्य-

प्रकाशः

"अहं तत्तेजो रश्मीत्" इति श्रुतावित्यर्थः । व्याख्यानान्तरमाशङ्क्य भाष्यकृतव्याख्याने बीजमाह—**यद्यपीति** । 'इदं' द्वितीयसूत्रं । एतेनाऽऽद्यसूत्रे लिङ्गोक्तिः, द्वितीये तत्समर्थनमिति क्रमोऽप्युक्तो भवति ॥

**अन्ये त्विति** । तेषामिदमधिकरणशरीरं—"न तत्र सूर्यो भाति" इत्यादौ सूर्याद्यप्रकाश्यत्वादिनाऽवगतं किं तेजोन्तरमुत ब्रह्मेति संशये, तत्रेति सतिसप्तम्या 'तस्मिन् सति सूर्यादिकं न भाति' इत्युक्त्या 'तत्र' इत्यनेन सूर्यादितेजोभिभावकस्य वस्तुनः प्रतीतेः सूर्यादेश्चन्द्रतारकादितेजोन्तराभिभावकत्वदृष्ट्या प्रकृतेऽपि

प्रकाशः

'तत्र' इत्यनेन तेजोन्तरस्यैव सूर्याद्यभिभावकत्वस्य ग्राह्यत्वात्, "तमेव भान्तमनुभाति" इति वाक्ये चानुकारावगमादनुकारस्य च सजातीय एव 'धावन्तमनुधावति' इत्यादौ दर्शनात्, "तस्य भासा" इति वाक्ये सर्वभासकत्वावगमाच्च तुल्यरूपमप्रकृतमपि तेजोन्तरमेवात्रोपास्यत्वेनोच्यते, "तेन रक्तं रागात्, तस्यापत्यं" इत्यादावप्रकृतेऽपि तच्छब्ददर्शनात्। तदुक्तं भामत्यां—

अभानं तेजसोऽदृष्टं सति तेजोन्तरे यतः।
तेजोधात्वन्तरं तस्मादनुकाराच्च गम्यते ॥

इति। एवं चास्य वाक्यस्य "यस्मिन् द्यौः" इत्यादिब्रह्मप्रकरणगतत्वेऽपि असम्भवानुकारसामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाध इति प्राप्ते, "तमेव भान्तं" इत्यादौ "भारूपः सत्यसंकल्पः" इति श्रुतिसिद्धभारूपब्रह्मार्थत्वसम्भवे अलौकिकतेजोन्तरकल्पनायोगात्, 'तत्र' इत्यस्य विषयसप्तम्यन्ततया तद्वाक्योक्तसूर्याद्यभास्यत्वस्य ब्रह्मलिङ्गत्वात्, "तस्य भासा" इत्युक्तसर्वजगद्विषयकभानवत्त्वस्य ब्रह्मण्येवोपपत्तेः, 'अग्निं दहन्तमयःपिण्डोऽनुदहति, वायुं गच्छन्तं रजोऽनुगच्छति' इत्यादौ विसदृशेऽप्यनुकारदर्शनेन "तमेव" इति वाक्ये विसदृशेऽप्यनुकारसम्भवात् ब्रह्मैवात्रोच्यते। उक्तं च भामत्यां—

ब्रह्मण्येव हि तल्लिङ्गं न तु तेजस्यलौकिके।

चन्द्रिका

मित्याहुः। तन्न, त्वया हि "यत्तदद्रेश्यं" इत्यादिप्रकरणस्य ब्रह्मपरत्वसाधकेनादृश्यत्वाद्यधिकरणेनैव तत्प्रकरणस्थस्य "यस्मिन् द्यौः" इत्यादेरपि तत्परत्वे सिद्धे द्युभ्वाद्यधिकरणं व्यर्थमिति शङ्कित्वा, "यत्तदद्रेश्यं" इत्यादिप्रकरणे "यस्मिन् द्यौः" इत्यादिवाक्यं नास्तीति कृत्वाचिन्तया द्युभ्वाद्यधिकरणमित्युक्तम्। आथर्वणस्थं च "न तत्र" इत्यादिवाक्यं "यत्तदद्रेश्यं" इत्यादिप्रकरणे द्युभ्वादिसूत्र-स्थित्यदनसूत्रविषयभूतयोः "यस्मिन् द्यौः" "अनश्नन्नन्य" इति वाक्ययोर्मध्ये च वर्त्तते। तथा चास्याधिकरणस्य अदृश्यत्वाधिकरण-द्युभ्वधिकरणाभ्यामगतार्थत्वाय "न तत्र" इत्यादिवाक्यं "यत्तदद्रेश्यं" इत्यादिप्रकरणे "यस्मिन् द्यौः" इत्यादिवाक्यद्वयमध्ये च नास्तीति कृत्वाचिन्तयेदमधिकरणमिति वाच्यम्। न च तद्युक्तं, यतः,

> एकत्रापि च नास्तीति कृत्वाचिन्ता न युज्यते।
> अनेकस्मिन् न युक्तेति किमु गत्यन्यन्तरे सति॥

प्रकाशः

> तस्मान्न तदुपास्यत्वं ब्रह्म ज्ञेयं तु गम्यते॥

इति। तत्र विषयसंशयपूर्वपक्षादिबीजानि क्रमेण निराह—**तन्नेत्यादिना**। **इत्युक्तमिति**। विवृतमेतत्तत्रैव। **इति वाच्यमिति**। अन्यथा व्यर्थतापत्तेः। लिङ्गेन प्रकरणबाध इति भामत्युक्तं तु "दृढपूर्वपक्षहेत्वभावाच्च" इत्यग्रे निरसिष्याम इति भावः। 'यतः' इत्यस्य श्लोकेनान्वयः 'इति यतस्ततो न युक्तं' इति। गत्यन्त-

चन्द्रिका

अस्ति हि काठकवाक्यरूपं गत्यन्तरम् । अन्यथा "अत एव प्राणः" इत्यस्य "प्राणबन्धनं हि सोम्य मनः" इति वाक्यं ब्रह्मप्रकरणस्थत्वेनासन्दिग्धत्वान्न विषयः, किन्तु "प्राण इति होवाच" इति वाक्यमेवेति प्राणाधिकरणे यत्त्वयोक्तं, तदयुक्तं स्यात, तद्वाक्यं तत्प्रकरणे नास्तीति कृत्वाचिन्तया तत्सम्भवात् । किञ्चाथर्वणे पूर्वत्र "विरजं ब्रह्म निष्कलम्" इत्यादीनां, परत्र "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादीनां ब्रह्मश्रुतिलिङ्गादीनां स्पष्टत्वात्, अस्माकं पक्ष इव दृढपूर्वपक्षहेत्वभावाच्च न तत्र संशयः।

प्रकाशः

रमसिद्धमित्यत आह—**अस्ति हीति** । 'अन्यथा' गत्यन्तरे सत्येव-माश्रयणे । ननु न कृत्वाचिन्तयेदमारभ्यते, किं तर्ह्यनुकारसाम-र्थ्यरूपलिङ्गेन प्रकरणबाधया पूर्वपक्षे तत्समाधानार्थं, तथैव भाम-त्युक्तेरित्यत आह—**किञ्चेति** । सत्यमेवं सति तु तादृशलिङ्गे, तदेव नास्ति, अनुकारस्य विसदृशेऽपि दर्शनेन सावकाशतयाऽ-नेकपूर्वोत्तरगतश्रुतिलिङ्गबाधकत्वायोगात् । 'तत्र' इति सतिसप्तमी-त्यत्रासाधारणहेत्वभावे तस्यापि सावकाशत्वात्। "तस्य भासा" इत्यपि सावकाशमेव, शब्दानुशासनपरे सूत्रे तच्छब्दस्य पूर्वाप्रकृत-परत्वदर्शनेऽप्येकार्थप्रतिपादनपरवाक्येषु क्वापि सर्वनाम्नोऽप्रकृतपर-त्वादर्शनाच्चेति भावेनोक्तं—**दृढपूर्वपक्षहेत्वभावाच्चेति** । सिद्धा-

चन्द्रिका

अपि च परपक्षे ब्रह्मणो भानमात्रतया 'भान्तं' इति शत्रन्त शब्दः, "तस्य भासा" इति षष्ठी चायुक्ता। किञ्च प्रपञ्चे ब्रह्मभानान्यभानाभावेनानुशब्दायोगः। 'धावन्तमनुधावति' इत्यादौ हि धावनभेदे सत्येवानुशब्दो दृष्टः। न च श्रौतो व्यपदेशो 'वह्निं दहन्तं अयोऽनुदहति' इत्यादिवदारोपितभेदनिमित्तको युक्तः। किञ्च "अपि स्मर्यते" इति सूत्रविषयत्वेन त्वयोदाहृते "न तद्भासयते, यदादित्यगतं" इति वाक्ये ब्रह्मणः सूर्याद्यभास्यत्वस्य,

प्रकाशः

न्तोऽप्ययुक्तः, श्रुत्यननुसारादित्याह—**अपि चेति**। "लः कर्मणि च भावे चाकर्मकेभ्यः" इति "भा दीप्तौ" इत्यस्य कर्तरि लट्प्रत्यये "लटः शतृशानचावप्रथमासमानाधिकरणे" इति विहितलडादेशशतृप्रत्ययस्य कर्तृवाचित्वेन 'भान्तं' इत्युक्तभानकर्तृत्वं न चैतन्ये युक्तमित्यर्थः। **तस्येति**। षष्ठ्यर्थस्य भेदघटितत्वादिति भावः। ननु 'वह्निं दहन्तमयोऽनुदहति' इत्यत्र क्रियाभेदाभावेऽपि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासादृश्यं व्याख्येयमिति भामत्युक्तत्वादिहापि तथा स्यादित्यत आह—**न चेति**। अप्रामाण्यापत्तेरिति भावः। एतेन 'अनुकृतेः' अनुभानात्, 'तस्य' इति प्रतीकग्रहणेन "तस्य भासा" इति सर्वस्य तद्धेतुकभानोक्तेः "न तत्र" इति सूर्याद्यप्रकाश्यं ब्रह्मेत्याद्यसूत्रार्थः प्रत्युक्तः। द्वितीयसूत्रार्थमपि प्रत्याह—**किञ्चेति**॥

चन्द्रिका

सूर्यादितेजसोऽपि भगवदधीनत्वस्य चैवोक्तत्वेन त्वदभिप्रेतस्य ब्रह्म ज्ञानान्तरावेद्यमित्यस्य, अस्मदादिसम्बन्धिघटादिज्ञानं ब्रह्मरूपमित्यस्य चासिद्धिः ॥

केचित्तु—च्छान्दोग्ये उत्तरस्मिन् प्रजापतिवाक्ये ऽपहतपाप्मत्वादिरूपेण जीव उच्यते, तत्र कर्मादिना तिरोहितस्यापहतपाप्मत्वादि-

प्रकाशः

**केचित्त्विति।** 'इति व्याचक्षाणाः पूर्वाधिकरणशेषतया व्याचक्षते' इत्यन्वयः। अयमर्थः—"इतरपरामर्शात्स इति चेन्नासंभवात्" इत्यत्र "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय" इति जीवपरामर्शात्स एव दहराकाश इति चेन्न, तस्मिन् पूर्वोक्तापहतपाप्मत्वादेरसम्भवादित्युक्ते, उत्तरस्मात् "य आत्मा" इत्यादिप्राजापत्यवाक्यात् जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयते इत्याशङ्क्य प्रजापतिवाक्ये न स्वाभाविकापहतपाप्मत्वादिगुणक उच्यते, अपि तु प्राक्तिरोहितस्वरूपस्सन् "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति भगवत्प्रसादादाविर्भूतगुणक एव, अतः उत्तरवाक्यं जीवपरमित्युक्तम्। पूर्वोक्तदहरवाक्ये तु अपहतपाप्मत्वादयः स्वाभाविका एव श्रूयन्ते, ते च जीवे न युक्ता इति दहराकाशो न जीवः, किन्तु तथोच्यमानः परमात्मैवेत्यत्र हेत्वन्तरमत्रोच्यते 'तस्य' दहराकाशस्य परमात्मनोऽनुकृतेरनुकारात् "परमं साम्यमुपैति" इत्युक्तसाम्यापत्तेश्चेति यावत्। अतोऽनुकृत्या प्रजापतिवाक्ये तादृशगुणवत्त्वेन निर्दिष्टो जीवः, अनुकार्यं ब्रह्म दहराकाश इति,

चन्द्रिका

गुणस्याविर्भावोक्तेः; पूर्वस्मिन् दहरवाक्ये तु ब्रह्म, तत्रातिरोहितस्य स्वाभाविकस्यैव तस्योक्तेरित्येवम्परतया "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रं व्याचक्षणाः, "अनुकृतेः" इत्यादिसूत्रद्वयं 'तस्य' ब्रह्मणः, 'अनुकृतेः' सादृश्यात्, "मम साधर्म्यमागताः" इति स्मृतेश्च प्रजापतिवाक्योक्तो जीवो दहरवाक्योक्तं तु ब्रह्मेति, पूर्वाधिकरणशेषतया व्याचक्षते। तन्न, प्रजापतिवाक्येऽपि दहरवाक्य इव "य आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यादेरेव श्रवणेन तत्राप्यपहतपाप्मत्वादिप्रादुर्भावोक्त्यभावात्। "स्वेन रूपेणाभिनिष्पद्यते" इति वाक्यशेषस्तूभयत्राप्यस्ति। दहरवाक्ये जीवस्याभिनिष्पत्त्युक्तिर्जीवस्वरूपाभिनिष्पादकत्वरूपब्रह्म-

प्रकाश

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।

इति संसारिणो मुक्त्यवस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यतेऽपीति पूर्वशेषतया व्याचक्षत इति। पूर्वोत्तरवाक्ययोः परोक्तं वैलक्षण्यमसिद्धमित्याह—**तन्नेति**। ननु "य आत्माऽपहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः सविज्ञासितव्यः। सर्वांश्च लोकानाप्नोति, सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति" इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपेसदुषे मघवते प्रजापतिर्जागरितस्वप्नसुषुप्त्यवस्थजीवात्मानमशरीरं

प्रकाशः

क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयोपदिश्य, तत्र परिशुद्धात्मस्वरूपोपदेशयोग्याय मघवते "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्य शरीरस्याधिष्ठानं" इति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्यामृतस्वरूपतां चोक्त्वा, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरुपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति कर्मारब्धशरीरयोगिनः तदनुगुणसुखदुःखभोक्तृत्वरूपानर्थं, तद्विमोक्षे च तदभावमभिधाय, "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपणाभिनिष्पद्यते" इति जीवात्मनः स्वरूपमेव शरीरविमुक्तमुपदिदेश। "स उत्तमः पुरुषः, स तत्र पर्येति जक्षन् क्रीडन्" इत्यादिना प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वं निवृत्ततिरोधानस्य परं ज्योतिरुपसम्पन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्त्यादिकमभिधाय, "स यथा प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्तः" इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं युग्यशकटयोगदृष्टान्तेनाभिधाय, "यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणं" इत्यादिना चक्षुरादीनां करणत्वं, रूपादीनां ज्ञेयत्वं, अस्य च ज्ञातृत्वं प्रदर्श्य, तत एव शरीरेन्द्रियेभ्यो व्यतिरेकमुपपाद्य "सवा एष एतेन दिव्येन चक्षुषा मनसैतान् पश्यन् रमते य एते ब्रह्मलोकाः"

चन्द्रिका

गुणोक्त्यर्था चेत्, प्रजापतिवाक्येऽपि तदर्थाऽस्तु। किञ्चापहतपाप्मत्वादिगुणके आत्मनि इन्द्रेण पुनःपुनः पृष्टे प्रजापतिः, "य एषोऽन्तराक्षिणि पुरुषो दृश्यते, एष आत्मा" इति, "य एष स्वप्ने महीयमानश्चरति एष आत्मा" इति, "यत्रैतत्सुप्तः समस्तस्सम्प्रसन्नः स्वप्नं न विजानाति एष आत्मा" इति तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानं इत्यसकृदुपदिदेश। तत्र चाक्षिवाक्यं तावद्ब्रह्मविषयं, "अन्तस्तद्धर्मोपदेशात्, अन्तरुपपत्तेः" इत्यत्र च निर्णीतब्रह्म-

प्रकाशः

इति तस्यैव विधूतकर्मनिमित्तशरीरेन्द्रियमनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा "तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आप्तास्सर्वे च कामाः" इत्येवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय, "सर्वांश्च लोकानवाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति हि प्रजापतिरुवाच" इत्येवंविधमात्मानं विदुषः सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम्" इत्यन्तेन तदीयभाष्येण प्रजापतिवाक्यजातस्य सर्वस्यापि जीवपरत्वमुक्तम्। तत्कथमुच्यते दहरवाक्याद्वैलक्षण्यं नेतीत्यतो जागरितस्वप्नसुषुप्ताशरीरवाक्यानि प्रकरणचतुष्टयगतानि तावत्क्रमेणोदाहृत्य तेषां ब्रह्मपरत्वं साधयति—**किञ्चेत्यादिना**। उपदिदेश प्रजापतिरिन्द्रायेत्यर्थः। "अन्तः" इति तन्मतरीत्योपन्यासः। तत्रत्यविषयवाक्यं "य एषोऽन्तः" इति।

चन्द्रिका

त्वस्य "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" "यएषोऽक्षिणि पुरुषो दृश्यते" इति श्रुत्यन्तरोक्तस्यैवेह प्रत्याभिज्ञानात् । जीवस्य हृत्स्थत्वेनाक्षिस्थत्वाभावाच्च। स्वप्नवाक्यमपि तथा,

स्वप्नेन शारीरमभिप्रहत्यासुप्तस्सुप्तानभिचाकशीति ।

इति श्रुत्यन्तरात् । अत्रापि महीयमानत्वलिङ्गाच्च । सुप्तवाक्यमपि तथा, "प्राज्ञेनात्मना संपरिष्वक्तः" इत्यादिश्रुत्यन्तरात् । अत्रापि "यत्र सुप्तः" इति यच्छब्दोक्तस्य समस्तसुप्ताधारस्यैव

प्रकाशः

हृत्स्थत्वेनेति । "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि" इति सूत्रे "एष आत्मा" इति श्रुतौ च सिद्धत्वादिति भावः ।

हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति ।

इत्यादि त्वभिमानातिशयाभिप्रायम् । यथा चैतत्तथाऽवोचामान्तराधिकरणे । तथेति । ब्रह्मविषयमित्यर्थः । 'शारीरं' जीवं 'अभिप्रहत्य' संयोज्येति वाजसनेयवाक्यादित्यर्थः । न च तत्रापि विवादः,

शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः ।

इति वाक्यशेषे जीवमादाय गच्छतीति श्रवणात्, पूर्वोक्तार्थे श्लोकत्वेनोदाहरणाच्चेति भावः । महीयमानत्वं च जीवस्य तदा न युक्तं, भयादेरप्युपलम्भात् । न च कदाचिन्महीयमानत्वं, नित्यवच्छ्रवणविरोधात् । "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं" इति वाजसनेये सुप्तौ भगवत्परिष्वङ्गेनैव बाह्याद्यज्ञानश्रवणेन तत्स-

चन्द्रिका

"एष आत्मा" इत्येतच्छब्देन परामर्शाच्च । अशरीरवाक्यमपि तथा,अशरीरशब्देन निरपेक्षस्य सार्वकालिकस्य च शरीरराहित्यस्य स्वरसतः प्रतीतेः, तस्य चेश्वर एव सम्भवात् । किञ्चाक्ष्यादि-वाक्येषु प्रतिवाक्यं "एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्म" इति श्रवणात्कथं तेषां जीवविषयता । किञ्च प्रजापतिवाक्ये "य आत्माऽपहतपाप्मा" इति प्रसिद्धार्थेन प्रकृतपरामर्शिना च 'यः' इति सर्वनाम्ना "एष आत्माऽपहतपाप्मा" इति प्रस्तुतदहरवाक्ये प्रसिद्धेश्वरपरामर्श एव युक्तः । अपि च "तेषां सर्वेषु लोकेषु कामचारो भवति" इति दहरवाक्ये यन्मोक्षाख्यं फलं, तस्यैव "तेषां सर्वे लोका आप्ताः" इति प्रजापतिवाक्येऽपि श्रुतत्वात्,

प्रकाशः

माख्यया अत्रापि तथात्वमित्यर्थः । "मर्त्यं वा इदं शरीरं तदस्यामृत-स्याधिष्ठानं" इति वाक्यमपि ब्रह्मपरमित्याह—**अशरीरेति । तस्य चेति** । "अरूपवदेव" इत्यत्र वक्ष्यमाणत्वादिति भावः । अक्षि-स्वप्न-सुषुप्तिवाक्येषु त्रिषु ब्रह्मपरत्वे युक्त्यन्तरं चाह—**किञ्चेति** । ननूपक्रमे "य आत्माऽपहतपाप्मा" इत्यादिना जीवस्योपक्रान्तत्वात् तत्परत्वं सर्वस्य वाच्यमित्यतस्तदपि न जीवविषयमित्याह—**किञ्च प्रजापतीति** । प्रकारान्तरेण दहरवाक्यवैलक्षण्यमाह—**अपि चेति** ।

विष्णुमानन्दरूपेतं सम्यग्ज्ञानविपर्ययौ ।
आपतुः.......................................॥

चान्द्रकी

तथा दहरवाक्ये "तस्मिन्यदन्तस्तदन्वेष्टव्यं" इति यदन्वेष्टव्यत्वादिकमुक्तं, तस्यैव प्रजापतिवाक्ये "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति श्रवणात्,

इन्द्रो विरोचनश्चैव श्रुत्वा तं ब्रह्मणोऽक्षिगम् ।
विष्णुमानन्दरूपेतं.................... ॥

इत्यादिस्मृतेश्च न तयोर्भिन्नार्थतेति दिक् ॥

"अनुकृतेः" इत्यादिसूत्रद्वये च किं मुक्तस्यापहतपाप्मत्वादिरूपेणेश्वरसाम्यं साध्यं किंवाऽन्यत्र प्रसिद्धेन तेन

प्रकाशः

इत्यादिच्छान्दोग्यभाष्योदाहृतस्मृतेरित्यर्थः । एवं वाक्यान्तराण्यपि ब्रह्मपरतया साधनीयानीत्याह—दिगिति । तथा हि–"प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्तः" इत्यत्र प्राण शब्दस्य "अत एव प्राणः" इत्यादौ ब्रह्मण्येव प्रसिद्धत्वात्, "आकाशमनुविषण्णं चक्षुः" इत्यादिवाक्यस्य

इदं पश्यामि जिघ्राणीत्यादि जीवा न वै विदुः ।
द्रव्याणामपि चाज्ञानाद्वेदासौ पुरुषोत्तमः ॥

इति स्मृत्या विष्णुपरत्वात् । "एतं देवा आत्मानमुपासते" इति देवोपास्यत्वश्रवणाच्च । तदुक्तं भगवत्पादैः—"न हि जीवमात्रं देवा उपासते, "ऊर्जं पृथिव्या भक्त्वोरुगायमुपासते" इति हि श्रुतिः" इति । अन्यस्तु क्षुद्रोपद्रवोऽग्रे निरासिष्यते ॥

सूत्रार्थं च प्रत्याचष्टे—अनुकृतेरिति । 'तेन' ईश्वरसाम्येन ।

चन्द्रिका

दहरप्रजापतिवाक्योक्तयोर्ब्रह्मत्वजीवत्वे साध्ये । नाद्यः, तस्य त्वन्मते चतुर्थे "सम्पद्य" इत्यादावेव सिद्धेः । समन्वयाध्यायासङ्गतेश्च । सूत्रे "अनुकृतेः" इति साम्यस्य हेतुत्वोक्तेश्च । नान्त्यः, अनुकृतिमात्रेण पूर्वोक्तं ब्रह्म, पश्चादुक्तस्तु जीव इत्यस्यासिद्धेः ॥

प्रकाशः

"सम्पद्याविहाय स्वेन शब्दात्" इत्यत्रेत्यर्थः ।

एतेन प्रायो रामानुजरीतिमनुसरतः कस्य चिच्छैवस्य मतमपि प्रत्युक्तं बोध्यम् । यदत्र शिवार्कमणिदीपिकायां, चन्द्रिकोक्तरीत्या अक्ष्यादिवाक्यानां ब्रह्मपरत्वमाशङ्क्य समाधानमुक्तं, स्वप्नवाक्ये स्वप्नप्रयोजकत्वेन, सुषुप्तिवाक्ये सुषुप्त्याधारत्वेन ब्रह्मणि सम्भवन् स्वप्नसुषुप्तिसम्बन्धो नोच्यते, येन समाख्यादिबलाद्ब्रह्म स्यात्, किन्तु स्वप्नसुषुप्त्यवस्थावत्त्वमेव, स्वप्नसम्बन्ध्यात्मोपदेशानन्तरं "घ्नन्ति त्वैवं विच्छाययन्ति वा" इत्यादिनेन्द्रेण तस्य हन्यमानत्वादिप्रतिभासतो दुष्टत्वस्य, सुप्तिसंबन्ध्यात्मोपदेशानन्तरं "नाहं खल्वयमेवं संप्रत्यात्मानं जानातीत्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" इति तस्य ज्ञानशून्यतया विनष्टप्रायत्वस्योक्तत्वात् । अक्षिवाक्ये "एतदमृतमभयं" इत्यादि तु मुक्त्यवस्थायां भाविरूपापेक्षया उपपद्यत इति, तदसारं, स्वप्नादिवाक्यशेषे "घ्नन्तीव" इत्यादिश्रवणेऽपि इन्द्रः "एष स्वप्ने महीयमानः" इति प्रजापतिनोक्तस्वप्नप्रदर्शकं ब्रह्मैवेति जानन्नपि असुरजनमोहाय जीववि-

प्रकाशः

वक्षया "घ्नन्ति" इत्यादिदोषान् वक्तीत्युपपत्तेः । उक्तं च—

पुनःपुनश्च मोहाय गत्वागत्वा निवर्तते ।
कथंचिदेव विज्ञातं मयेत्यज्ञान् विमोहितुम् ।
तद्योग्यान्येव वाक्यानि ब्रह्माऽप्याह पुनःपुनः ।

इति ।

दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया ।
घ्नन्तीवैनं मदन्तीव.............................. ॥

इत्यादि च । यदप्यमृतत्वादिकं मुक्त्यवस्थाभिप्रायेणेति, तन्न, तथात्वे अन्तराद्यधिकरणेऽपि तथात्वापत्त्या तत्रत्यसिद्धान्तहान्यापत्तेः । महीयमानत्वस्य दुरुपपादत्वाच्च । अक्षिस्थत्वायोगस्मृतिविरोधादेरनुद्धृतत्वाच्च यत्किञ्चिदेतत् । यच्चोक्तं, सूत्रे 'तस्य' इति कर्तृषष्ठ्यन्तेन जीवः परामृश्यते, दहरपदं कर्मणिषष्ठ्यन्ततया विपरिणामेन दहरस्येतीहानुवर्तते, तथाच जीवस्य दहरानुकृतेरनुकर्त्रनुकार्ययोर्भेदाद्दहरो न जीव इति सूत्रार्थ इति, तन्न, अनुवृत्तिविपरिणामप्रथमान्तावृत्तीनां क्लिष्टत्वात् । अस्मद्रीत्याऽनुकृतेः साक्षात्साध्यान्वयसम्भवे तया भेदं प्रसाध्य तस्य साध्यान्वयोक्तिरयुक्तत्वात् ।

गगनं गगनाकारं सागरस्सागरोपमः ।

इत्यादावभेदेऽप्यनुकर्त्रनुकार्यभावनिर्देशाच्चेति ॥

"सर्वं सूर्यादि जगद्भातीति शेषः" इति टीकायां सर्वशब्दस्यैव

चन्द्रिका

टीकाक्षरार्थस्तु—"न हि ज्ञानिसुखं" इति भाष्ये सर्वशब्दस्ते-जःपर इत्याह—**सर्वं सूर्यादीति**। "न च तद्भासा" इति भाष्ये 'जगत्, भाति' इति पदद्वयमध्याहार्यमित्याह—**जगद्भातीति शेष इति। रश्मीदिति सूर्यादितेजसां नारायणाधीनत्वमुच्यत इति**। अग्नीच्छब्दस्याग्निसमिन्धकत्वमिव रश्मीच्छब्दस्य रश्मिसमिन्धकत्वमर्थ इति भावः। "नारायणभासा हि" इति भाष्यस्य सूर्यादितेजसां नारायणाधीनप्रकाशत्वं, नारायणस्य सर्वजगत्प्रकाशकत्वं चार्थ इत्यभिप्रेत्य तदनुगुणतया 'नारायणभासा' इति पदं, सर्वपदं, भातिपदं चार्थद्वयपरतया व्याचष्टे—**तदधीनभासेत्यादिना**।

प्रकाशः

सूर्यादिजगदित्यर्थ इति प्रतीयते। 'भाति' इत्यस्य क्वान्वयः इत्यपि न ज्ञायते। "नारायणभासा हि सर्वं" इत्यत्रत्यसर्वशब्दार्थ इति वा प्रतीयते। अत आह—**न हीति**। "अहं तत्तेजोरश्मीत्" इति रश्मीच्छब्देनायमर्थः कथं लब्ध इत्यत आह—**अग्नीदिति। यथाऽग्निशब्दोपपदात्** "इन्धी दीप्तौ" इत्यस्मात्क्विपि "अनिदितां हल उपधायाः क्ङिति" इति नलोपे **रूपमिति** "अग्नीदग्नीन्विहर" इत्यादौ वह्निदीपकत्वमर्थः, तथेहापि रश्मिपदोपपदादिन्धेः क्विपि **रूपमित्युक्तं** भवति। "—'नारायणभासा' तदधीनभासा तदीयभासा च सर्वं सूर्यादि जगच्च 'भाति' प्रकाशते प्रकाश्यते च" इति टीकायास्सम्यगर्थाप्रतीतिरुद्भाष्यत्वप्रतीतेश्चाह—**नारायणेति**।

चान्द्रिका

युक्तिसमुच्चयेऽपिपदमिति । यद्यप्याद्यव्याख्याने सौत्रोऽपिशब्दः आद्यसूत्रे आनुकूल्येन गृह्यमाणस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतूकृतानुकृत्यादेर्ब्रह्मधर्मत्वसाधकश्रुतिसमुच्चयार्थः । तथाऽपि द्वितीयव्याख्याने प्रधानसाध्य एव हेतोः सूर्याद्यप्रकाश्यत्वरूपयुक्तेस्समुच्चयार्थ इत्यर्थः ।

प्रकाशः

"अपि स्मर्यते" इत्यत्र "युक्तिसमुच्चयेऽपिपदं" इति वाक्यमाक्षिप्य समाधत्ते—यद्यपीति ॥

इत्यनुकृत्यधिकरणम्.

## — अथ वामनाधिकरणम् —

विष्णुरेव जिज्ञास्य इत्युक्तम् । तत्र

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥

इति सर्वदेवोपास्यः कश्चित्प्रतीयते ।

---

तत्त्वप्रकाशिका

अत्र प्रेरकत्वसाम्येन भगवति वायौ च साधारणस्येशाननाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयसंशयौ च सूचयति—विष्णुरेवेति । "अथातो ब्रह्मजिज्ञासा" इति जिज्ञास्यत्वं विष्णोरुक्तम् । तज्जिज्ञास्यत्वं ईशानस्य काठके प्रतीयते,

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य...................... ॥

इत्युक्त्वा "ऊर्ध्वं प्राणं" इत्यादौ "विश्वे देवा उपासते" इति, जिज्ञासोपासनयोरैक्यात् । श्रवणादिरूपविचारो हि जिज्ञासोच्यते । उपासना च सैव । यदाहुः—

सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चैव तदङ्गं धारणादिकम् ॥

स च "एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते" "योऽयं मध्यमः प्राणः" "कुविदङ्ग" इत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते।

तत्त्वप्रकाशिका

इति। स च यदि विष्णोरन्यः स्यात्तदा जिज्ञास्यत्वं चान्यस्यैव प्रसज्यत इत्यवश्यं निर्णेयः। स ईशानोऽत्र विषयः। किं विष्णुर्वायुर्वेति सन्देहः। प्रागुक्तसाधारण्यमेव सन्देहबीजमिति भावः। ईशानशब्दस्य रुद्रे प्रसिद्धावपि तद्विषयसंशयः सर्वदेवोपास्यत्वलिङ्गभिया गर्भः स्रावेणेव निवृत्तः। 'य उन्नयति तं' इत्यन्वयः। सयुक्तिकं पूर्वपक्षयति—स चेति। स चेशानो वायुरेव भवेत्, ईशानस्य "ऊर्ध्वं प्राणमुन्नयाति" इति वाक्ये प्राणव्यवस्थापकत्व-मध्यमत्व सर्वदेवोपास्यत्वश्रवणात्। न चैतल्लिङ्गश्रवणेऽपि कुतोऽयं वायुर्विष्णुः किं न स्यादिति, "यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते" इति प्राणव्यवस्थापकत्वस्य वायुलिङ्गत्वश्रवणात्। "अथेममेव नासोद्योऽयं मध्यमः प्राणः" इति मध्यमत्वस्य तद्धर्मत्वोक्तेः। "कुविदङ्ग" इति तस्य सर्वदेवोपास्यत्वप्रतीतेश्च। अतो वाय्वेकनिष्ठलिङ्गश्रवणादीशानो वायुरेवेति हेतोस्तस्यैव जिज्ञास्यत्वम्। न च वाच्यं नेदमनिष्टं, वायोरपि जिज्ञास्यताभ्युपगमाद्विष्णुजिज्ञास्यत्वस्याबाधा-

अतोऽब्रवीत्,

ओम्—शब्दादेव प्रमितः—ओम् ॥ २४ ॥

वामनशब्दादेव विष्णुरिति प्रमितः। न हि श्रुतेर्लिङ्गं बलवत्,

तत्त्वप्रकाशिका

दिति, वायोस्सर्वदेवोपास्यत्वे तस्य मोक्षदातृत्वापातात्। न हि प्राप्तसमस्तैश्वर्याणां देवानां प्रयोजनान्तरमस्ति। तथा च किं विष्णुजिज्ञासानियमेनेति विष्णुरेव मोक्षार्थं जिज्ञास्य इत्यर्थस्यानुपपत्तिरिति भावः। अयं मन्त्रार्थः—अङ्गेति सम्बोधनम्। ये देवाः वायोर्नमस्कारादिना ज्ञानादिगुणपूर्णा अज्ञानाद्यवद्यविधुराश्च पुरा आसंस्ते क्वचिद्रहस्यस्थाने सूर्येण साकं ज्ञानिने संसारबाधवद्भिः शरणं प्राप्ताय वायवे बुद्धिमावासयंस्तद्विषयामकुर्वन्निति। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति। विष्णुरेवेशानो भवेत्, "मध्ये वामनं" इति वामनश्रुतेः, तस्याश्च विष्णौ महायोगरूढिसिद्धायास्तत्प्रमापकत्वात्। अतो विष्णोरीशानत्वेन तस्यैव जिज्ञास्यत्वमिति भावः। अत्र प्रमितपदं श्रुतेर्निवरवकाशत्वसूचनार्थम्। ननु वायुलिङ्गसद्भावादीशानो वायुरेव किं न स्यादित्यत आह—न हीति। भवेत्सत्यामपि श्रुतौ लिङ्गेन वायुत्वनिश्चयो यदि श्रुतेर्लिङ्गं बलवद्भवेन्न च तदस्तीत्यर्थः। अनेन "शब्दादेव" इत्येवकाराभिप्रायो वर्णितो भवति। कुतो न श्रुतेर्लिङ्गं

श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।
पूर्वं पूर्वं बलीयस्स्यादेवमागमनिर्णयः ॥

इति स्कान्दे ।

तत्त्वप्रकाशिका

बलवदित्यत आह—श्रुतिरिति । नाममात्रेण निर्देशः श्रुतिः । असाधारणधर्मो लिङ्गम् । निराकाङ्क्षपदानि वाक्यम् । एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम् । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् । समानोक्तिस्समाख्या । अत्र श्रुतेस्साक्षादर्थधीजनकत्वात्सर्वतः प्राबल्यम् । लिङ्गस्यानुमापकतयाऽर्थबोधकत्वात्तदानन्तर्यम् । वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात्ततोऽपि दौर्बल्यम् । प्रकरणस्य बह्वर्थपरत्वेनार्थानुमितिहेतुत्वात्तदवमता । स्थानस्यातिबह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्यम् । समाख्यायाः स्थानान्तरगतायास्सादृश्यमात्रेणार्थानुमापकत्वात्ततोऽपि दुर्बलत्वम् । अत्रापि पूर्ववन्निरवकाशात्स्वभावदुर्बलादपि स्वभावप्रबलसावकाशस्य दौर्बल्यमित्यादि द्रष्टव्यम् । अत्र विरुद्धैतेषां समवाये सत्येवं पूर्वपूर्वेणोत्तरोत्तरबाधयाऽऽगमार्थनिर्णयो भवतीत्यर्थः । न च यथास्थित एव क्रमः, "आत्मा प्रकरणात्" इत्यत्र समाख्यायाः प्रकरणेन बाधितत्वात् । तदाह जैमिनिः—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्" इति । भाष्यकारोऽपि

तच्च लिङ्गं विष्णोरेव, तस्यैव प्राणत्वोक्तेः "तद्वै त्वं प्राणो अभवः" इति। ॥२४॥

तत्त्वप्रकाशिका

वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा ।

इति । श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वम् । उपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वम्, अन्यत्र चेत्प्रकरणनिश्चायकत्वेन । उपक्रमोपसंहारावपि श्रुत्यादिना सत्यामर्थसिद्धौ तात्पर्यलिङ्गे, अन्यथा प्रकरणनिश्चायकौ । समाख्याऽपि साक्षाद्विप्रतिपन्ननिष्ठा समाख्यात्वेनैव लिङ्गम्, अन्यथा प्रकरणनिश्चायकत्वेन भवति। लिङ्गवाक्ययोः साक्षादसाक्षात्त्वेन भेदः, "गोत्रभिदं, प्रवक्षणा अभिनत्पर्वतानां" इत्यादिवदिति । नन्वस्तु श्रुतेःस्वभावप्राबल्यं, तथाऽपि बाहुल्येन लिङ्गानामपि प्राबल्यादनिर्णय एवेत्यत आह—तच्चेति । न बाहुल्येऽपि लिङ्गानां श्रुतिसाम्येनानिर्णयः, श्रुतेर्निरवकाशत्वात्, लिङ्गानां विष्णाववकाशात्, सावकाशशतादपि निरवकाशैकस्य प्राबल्यादिति भावः। श्रुत्यन्तरेण प्राणनिष्ठतयालिङ्गोक्तेः कथं तद्विष्णोरित्यत आह—तस्यैवेति । वायुत्वमत्रोपलक्ष्यते ॥ २४ ॥

तथाऽपि कथमीशानो विष्णुर्भवेत्, अङ्गुष्ठमात्रत्वोक्तेः । न च विष्णोरङ्गुष्ठमात्रत्वं युक्तम्, सर्वगतत्वात् । न च वक्तव्यं व्योमवत्सर्वगतस्याप्यणुत्वं प्रत्यपादीति, "अङ्गुष्ठमात्रः" इति तन्मात्र-

## ओम् हृद्यपेक्षया तु मनुष्याधिकारत्वात् ओम् ॥

सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते। इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ॥२९॥

तत्त्वप्रकाशिका

त्वोक्तिरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदक्षराणि व्याचष्टे—हृदीति। सर्वगतस्यापि विष्णोरङ्गुष्ठमात्रत्वोक्तिर्युक्ता, हृदि विद्यमानावकाशस्याङ्गुष्ठमात्रत्वेन तदपेक्षया भगवन्मूर्तिविशेषस्याभिव्यक्त्या तन्मात्रपरिमाणत्वादित्यर्थः। भिन्नेष्वपि स्थानैक्येनैक्योक्तिवद्धृदयाकाशस्याङ्गुष्ठमात्रत्वेन तत्सम्बन्धात्सर्वगतेऽपि हरावुपचारेणाङ्गुष्ठमात्रत्वोक्तिरिति वाऽर्थः। तुशब्दः परिच्छिन्नतयाऽङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवार्थः। तथाऽपि नाङ्गुष्ठमात्रत्वं विष्णोर्युक्तम्। तथा हि—किं तत्तदङ्गुष्ठमात्रत्वं वा यत्किञ्चिदङ्गुष्ठमात्रत्वं वा। नाद्यः, पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतविष्णोरङ्गुष्ठमात्रत्वायोगात्। न द्वितीयः, तत्कथनवैयर्थ्यादसम्भवाच्चेत्याशङ्कां परिहरत्सूत्रशेषं व्याचष्टे—इतरेति। युक्तं विष्णोरङ्गुष्ठमात्रत्वम्, तत्तदङ्गुष्ठमात्रत्वाभ्युपगमेन विकल्पानवकाशात्। न च तत्पक्षोक्तविरोधः, मनुष्याणामेव वेदविद्योपासनाधिकारित्वेन तान् प्रत्येतद्विद्याप्रवृत्त्या पश्वादीनामङ्गुष्ठाभावेऽपि विष्णोरङ्गुष्ठमात्रत्वोक्तिसम्भवादिति भावः। तुशब्दोऽपिशब्दार्थः। तस्मादीशानो विष्णुरेवेति स एव जिज्ञास्य इति सिद्धम् ॥ २९ ॥

चन्द्रिका

## ॥ ओम् शब्दादेव प्रमितः ओम् ॥

यद्यप्यत्रेशानपदप्रवृत्तिनिमित्तं प्रेरकत्वमसङ्कुचितं न वायौ, सङ्कुचितं तु जीवान्तरेऽपि, रुद्रे त्वीशानशब्दप्रसिद्धिरप्यधिका। तथाऽपि तस्य वायौ किञ्चित्संकुचितत्वादन्यत्र त्वत्यन्तसङ्कुचितत्वादीशानत्वसहचरितप्राणादिव्यस्थापकत्वस्यान्यत्रात्यन्तासम्भवाच्चेशानशब्दो विष्णु

प्रकाशः

॥ ओम्—शब्दादेव प्रमितः—ओम् ॥ अत्र टीकायां "प्रेरकत्वसाम्येन भगवति वायौ च साधारणस्येशाननाम्नः" इत्यादिना सङ्गतिग्रन्थे प्रेरकत्वसाधारण्येनेशानशब्दस्योभयत्रप्रसिद्धिरुक्ता। सा न युक्तेव, व्यधिकरणत्वात्। किञ्च प्रेरकत्वमसङ्कुचितं सङ्कुचितं वा। नोभयथाऽपि पूर्वोत्तरकोटिद्वयमात्रसाधारण्यं लभ्यत इत्याक्षिप्य समाधत्ते—यद्यपीति। अक्षरशब्दस्यैव प्रवृत्तिनिमित्तसाधारण्यादुभयत्रप्रसिद्धिरिति न वैयधिकरण्यमिति भावः। प्रसिद्धिरपीति। "ईश्वरश्शर्व ईशानः शङ्करः" इत्युक्तेरूढिरपीत्यर्थः। वायुमात्रप्रसिद्धलिङ्गसाहित्येन रुद्रादित्यागे च द्वयमात्रसाधारण्यमित्याह—ईशानत्वेति। 'अन्यत्र' विष्णुवायुभ्यां। यद्यपि नायं नियमः, यथोक्तमक्षरनये—"अन्यसाधारण्येऽपि संशयकोटिसाधारण्यमात्रेण तत्सिद्धेः" इति। तथाऽपि सति सम्भवे त्यागायोगादेवमुक्तम्। एतेन "ईशानशब्दस्य रुद्रे प्रसिद्धावपि" इत्यादिटीका विवृता। "विष्णुरेव जिज्ञास्य इत्युक्तं" इति भाष्यादि तु फलपरमिति भावेन

चन्द्रिका

वायुसाधारण इति ज्ञेयम् । "तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं" इति पूर्वत्र विष्णुज्ञानादेव मोक्ष इत्युक्तम् । तदयुक्तं, "विश्वे देवा उपासते" इत्यन्यस्यैव देवोपास्यत्वप्रातीतेः, प्राप्तसमस्तैश्वर्याणां च देवानां मोक्षादन्यार्थमुपासनायोगादन्योपासनया च विष्णुज्ञानायोगादिति पूर्वाधिकरणाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥

अत्र "ईशानो भूतभव्यस्य" इति काठकोक्त ईशानः किं वायुः

प्रकाशः

पूर्वानन्तर्ये हेतुमाह—तमिति । ऐश्वर्यार्थमुपासनं कुतो नेत्यत आह—प्राप्तेति । विष्णुज्ञानार्थमेव देवानामन्योपासनमस्त्वित्यत आह—अन्येति । एतेन यदुक्तं कल्पतरौ—'प्राक् सति विषये च साधारणी सप्तमी "न तद्भासयते" इति विषयत्वनिषेधस्मृत्या विषये व्यवस्थापिता, तद्वत्परिमाणमपि जैवं पारमेश्वरं वेति संशयेऽङ्गुष्ठमात्रं निश्चकर्षेति निर्णीतस्मृत्या जैवमिति प्रत्यवस्थानात् सङ्गतिरिति, तन्निरस्तं, वक्ष्यमाणदिशाऽसङ्कुचितेशानत्वरूपब्रह्मधर्मसन्दृष्टत्वेन संशयस्यैवायोगात् । यदपि, "अल्पश्रुतेरिति चेत्" इत्यत्राल्पपरिमाणत्वं भगवत उक्तम्, अथाल्पपरिमाणविशेषः परमात्मव्यतिरिक्तस्य दृश्यत इति सङ्गतिरिति श्रुतप्रकाशोक्तं, तदप्यनेन निरस्तं, न्यायभेदादिना "अनुकृतेः" इति योगद्वयस्याधिकरणान्तरत्वेऽवश्यम्भाविनि व्यवहितेन सङ्गत्युक्तेरयुक्तत्वात् ॥

विषयसंशयटीकां व्यनक्ति—अत्रेति । काठके चतुर्थवल्ल्यां

चन्द्रिका

उत विष्णुरिति चिन्ता। तदर्थं किं "ऊर्ध्वं प्राणमुन्नयाति" इति प्राणव्यवस्थापकत्वादिलिङ्गानुसारेण "मध्ये वामनं" इति वामन श्रुतिर्नेया किं वा विपरीतमिति। तदर्थं किमनेकानि लिङ्गानि प्रबलानि किं वैकाऽपि श्रुतिः प्रबलेति। तदर्थं किं लिङ्गानि निरवकाशानि श्रुतिस्तु सावकाशा उत विपरीतमिति ॥

प्रकाशः

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत्।
अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वैतत्।

इत्याद्युक्त्वा पश्चात्

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥

इत्याम्नायते। तत्रेशानो विषय इत्यर्थः। एतेन "स ईशानोऽत्र विषयः" इति टीकास्थतच्छब्दपरामर्शो दर्शितः। **प्राणेति**। प्राणव्यवस्थापकत्व मध्यमत्व-सर्वदेवोपास्यत्वलिङ्गानुसारेणेत्यादिपदार्थः। यदि लिङ्गानि निरवकाशानि, तदा तैर्वामनश्रुतेर्बाधाद्वायुरेवेशान इति पूर्वपक्षे फलम्। यदि सावकाशानि, तदा श्रुत्यैव लिङ्गानां बाधाद्विष्णुरेवेशान इति सिद्धान्ते फलमिति स्पष्टः फलफलिभाव इति भावः। अत्र यद्यपि श्रुतिः प्रबलेति चिन्तानन्तरं, किमनेक-

चन्द्रिका

**पूर्वपक्षस्तु**—अयमीशानो वायुरेव, ईशाने "ऊर्ध्वं प्राणमुन्नयति" इति प्राणव्यवस्थापकत्वस्य, "मध्ये वामनमासीनं" इति मध्यमत्वस्य, "विश्वे देवा उपासते" इति सर्वदेवोपास्यत्वस्य च श्रवणात्, तेषां च "एवमेवैष प्राणः" "योऽयं मध्यमः प्राणः" "कुविदङ्ग"

प्रकाशः

त्वप्रयुक्तप्राबल्यं बलवत् उत श्रुतित्वप्रयुक्तप्राबल्यं बलवदित्येवं चिन्ता वाच्या, श्रुतिस्वभावप्राबल्यैस्यवात्र समर्थनात्, न तु निरवकाशत्वादिचिन्ता, तथाऽपि सा पूर्वत्रैकानेकपदप्रयोगादेव सूचितेति, सौत्रैवकारप्रमितशब्दाभ्यां श्रुतित्वनिरवकाशत्वोभयप्रयुक्तप्राबल्यस्य सूचितत्वात्, न्यायविरणानुसारेणाभ्युच्चयत्वेन सावकाशत्वादिचिन्ताऽपि दर्शिता ॥

उत्तरोत्तरचिन्ताफलत्वं पूर्वपूर्वचिन्तायाः प्रदर्शयन् लिङ्गानेकत्वव्यक्तिपूर्वकं तन्निरवकाशत्वकथनेन पूर्वपक्षयन् "स ईशानो वायुरेव" इत्यादिटीकां विवृणोति—**पूर्वपक्षस्त्वित्यादिना** । अत्र त्रयः पूर्वपक्षप्रकाराः । एकस्तावल्लिङ्गानामनेकत्वाद्वामनश्रुतेरेकत्वादनेकैरेकस्य बाध इत्यनेकत्वरूपः सौत्रावधारणसूचितः । अयं च स्पष्टत्वात् भाष्यटीकयोर्न प्रपञ्चितः । द्वितीयस्तु सौत्रप्रमितपदसूचितो निरवकाशत्वादिरूपः । स त्वस्पष्ट इति "यथा सम्राट्" इत्यादिना टीकादौ प्रपञ्चितः । तं व्यनक्ति—**तेषामित्यादिना** । तृतीयस्तु द्वितीयसूत्रसूचितोऽङ्गुष्ठमात्रत्वरूपोऽग्रे स्पष्ट इति ध्येयम् ।

चन्द्रिका

इति भाष्योक्तश्रुतिभिर्वायुधर्मत्वात् । "एवमेव" इत्यत्र च प्राण-शब्दो मुख्यप्राणपरः, "आत्मत एष प्राणो जायते" इति पूर्ववाक्ये तस्यैव प्रकृतत्वात् । विष्णुलिङ्गाभावाच्च । अत एव "कुविदङ्ग" इति ऋच्यपि वायुशब्दो न विष्णुपरः । न च ऋचि देवोपास्यत्वमात्रं इह तु सर्वदेवोपास्यत्वमिति भेदः, ऋच्यपि 'देवाः' इति

प्रकाशः

"यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्नि-धत्ते" इति षट्प्रश्ने प्राणव्यवस्थापकत्वस्य, "अथेममेव नाप्नो द्योऽयं मध्यमः प्राणः" इति वाजसनेये मध्यमत्वस्य,

कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥

इत्यस्यामृचि देवोपास्यत्वस्य वायुधर्मत्वेन प्रसिद्धत्वादित्यर्थः । तदर्थ-स्तु—अङ्गेति सम्बोधनम् । ये देवा वायोर्नमस्कारादिना ज्ञानादिपरि-पूर्णा अज्ञानाद्यवद्याविधुराश्च पुरा आसन्, ते क्वचिद्रहस्यस्थाने सूर्येण साकं ज्ञानिने संसारबाधवद्भिः शरणं प्राप्ताय वायवे बुद्धि-मवासयन् तद्विषयामकुर्वन्निति टीकायां व्यक्तः । श्रुत्यन्तराणां वायुपरत्वं टीकायामस्फुटत्वात् स्वयं साधयति—**एवमेवेत्यादिना** । ननु "अत एव प्राणः" इति न्यायेनोपक्रमबाधेन प्राणशब्दो विष्णुपरः स्यादित्यत आह—**विष्ण्वति** । 'अत एव' विष्णुलिङ्गा-

चन्द्रिका

बहुत्वस्यासङ्कोचाय कात्स्न्यें पर्यवसानात्, त्रित्वे पर्यवसाने गुणातिशयासिद्धेः। न हि 'नरेन्द्रं नरास्सेवन्ते' इत्यादौ त्रित्वे पर्यवसानम्। "वसन्ताय कपिञ्जलान्" इत्यत्र तु त्रित्वापर्यवसाने सर्वकपिञ्जलालम्भस्याशक्यानुष्ठानत्वात्, अष्टदोषदुष्टविकल्पापातात्,

प्रकाशः

भावादेव। ननु कथं तर्हि कपिञ्जलाधिकरणे त्रित्वे पर्यवसानमुक्तमित्यत आह—**वसन्तायेति**। एकादशाध्याये "बहुवचनेन सर्वप्राप्तेः विकल्पः स्यात्" इत्याद्युपादीयाष्टमाधिकरणे "वसन्ताय कपिञ्जलानालभेत" इत्यत्र किं त्रयाणामेवालम्भः उत त्रिप्रभृतीनामिति संशये, बहुवचनस्य सर्वत्र प्रवृत्तेः सर्वसङ्ख्यानां शास्त्रार्थत्वाच्छास्त्रीयाच्च प्रयासगौरवात् फलभूयस्त्वमिति यावदुत्साहं विकल्पेन नानासङ्ख्योपादानमिति प्राप्ते, बहुत्वमात्रस्यैव शास्त्रार्थत्वात्, त्रीननालभ्य चतुर्थालम्भासम्भवादवश्यं त्रयाणामालम्भे तावतैव शास्त्रार्थसिद्धेः नाधिकालम्भं शास्त्रं कारयतीति निवृत्तव्यापारे विधौ, "न हिंस्यात्" इति निषेधशास्त्रप्रवृत्तेरष्टदोषदुष्टविकल्पापाताच्च त्रयाणामेवालम्भ इत्युक्तम्। बहुवचनार्थो मुख्य उपादीयते अथ यथोत्साहं कदाचित्किञ्चित्सङ्कुचितः। आद्ये दोषमाह—**सर्वेति**। द्वितीये दोषमाह—**अष्टदोषेति**। एकस्योपादाने तस्याप्रामाण्यत्यागः, प्रामाण्यस्वीकारः, अन्यस्य प्रामाण्यत्यागः, अप्रामाण्यस्वीकारश्चेति चत्वारो दोषाः। अन्यस्योपादानदशायां तस्य पूर्वक्लृप्ताप्रामाण्यत्यागः, त्यक्त-

चन्द्रिका

"न हिंस्यात्" इति शास्त्रस्यासङ्कोचसम्भवे सङ्कोचायोगाच्च त्रित्वे पर्यवसानम् । एतेन विश्वदेवशब्दो गणविशेषपर इति निरस्तं, गुणातिशयासिद्धेः । भूतभव्येशानत्वानानुगुण्याच्च । "योऽयं मध्यमः प्राणः" इति श्रुत्यन्तरोक्तं मध्यमत्वं तु न परस्मिन् शक्यशङ्कं, "अयं वाव शिशुर्योऽयं मध्यमः प्राणः, तस्य प्राणः स्थूणा" इति उत्तरवाक्ये तस्य शिशुत्वब्रह्माश्रितत्वाद्युक्तेः ।

अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।
अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ॥

प्रकाशः

प्रामाण्यस्वीकारः, तत्प्रतियोगिनोऽन्यस्य तु प्राक्क्लृप्तप्रामाण्यत्यागः, त्यक्ताप्रामाण्यस्वीकारश्चेति चत्वारो दोषा इति मिलित्वाऽष्टौ दोषा ध्येयाः । **असङ्कोचेति** । त्रित्वव्यतिरिक्ते प्रवृत्तसम्भवे सर्वकपिञ्जलव्यतिरिक्तत्वरूपसङ्कोच इत्यर्थः । एतेनेत्युक्तं **व्यनक्ति—गुणेति** । गुणपरत्वं नेत्यत्र युक्त्यन्तरमाह—**भूतेति** । क्रममुल्लङ्घ्य प्रसङ्गादागतं ऋचो वायुपरत्वं लिङ्गैक्यं च समर्थ्य "योऽयं मध्यमः" इत्येतदपि वायुपरमिति साधयति—**योयमिति** । वाजसनेये तृतीयेऽध्याये "अथातो व्रतमीमांसा" इत्युपक्रम्याधीते पञ्चमे ब्राह्मणे अभिहितस्यैव "अथेममेव नाप्नोत् योयं मध्यमः प्राणः" इत्यस्य, चतुर्थाध्यायद्वितीयब्राह्मणे "यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद सप्त स द्विषतो भ्रातृव्यानवरु-

चन्द्रिका

इति स्मृतेश्च। तत्समाख्यानादिहापि "मध्ये वामनमासीनं" इति सर्वोत्तमत्वरूपकाष्ठात्वाविरोधिमध्यस्थत्वमेवोच्यते, "तदन्तरेण सर्वा अन्या देवताः" इतिवत्, न तु मध्यदेशस्थत्वम्। यद्यपि विष्णोरपि "अन्तर्यामी" इत्यत्र सर्वनियामकता, "दहरे" इत्यत्र सर्वजिज्ञास्यत्वरूपसर्वोपास्यता चोक्ता। न च तत्रोक्तजिज्ञास्यत्वमिह पूर्वपक्षे आक्षिप्यत इति शङ्क्यं, उपास्यत्वस्य वाय्वेकनिष्ठत्वस्याद्याप्यसिद्ध्याऽन्योन्याश्रयात्। तथाऽपि वायोर्यच्छ्रुत्यन्तरसिद्धं प्राणनियामकत्वं देवोपास्यत्वं च, तदेवेह भाति, न तु

प्रकाशः

णद्धि। अयं वाव शिशुः योऽयं मध्यमः प्राणः तस्येदमेवाधानमिदं प्रत्याधानं प्राणस्स्थूणा अन्नं दाम" इत्यत्र शिशुत्वप्राणशब्दितविष्णवाश्रयत्वोक्तेरित्यर्थः। स्मृतेश्चेति। "चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः" इत्यत्र भाष्योक्तस्मृतेरित्यर्थः। तदन्तरेणेति। बह्वृचब्राह्मणे "अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः" इत्यत्र यथाऽन्यदेवतानामग्नाविष्णुमध्यमत्वं, तथेहापीत्यर्थः। ननु नैतानि निरवकाशानि, विष्णावपि सम्भवादित्याक्षिप्य समाधत्ते—यद्यपीति। अन्योन्येति। वाय्वेकनिष्ठत्वे सिद्धे प्राक्तनमपि तस्यैवेति सिध्यति। प्रागुक्तं न विष्णोः किन्तु वायोरेवेति सिद्धौ तस्य वाय्वेकनिष्ठत्वसिद्धिरित्यर्थः। तदेवेहेति। विश्वशब्दस्य श्रुत्यन्तरानुरोधेन योग्यसर्वपर-

चान्द्रकी

ब्रह्मधर्मभूतं सर्वनियामकत्वं सर्वदेवोपास्यत्वं च। न हि "आग्नेयं चतुर्धा करोति" इत्यादावाग्नेयादिशब्दैरैन्द्राग्नादिधीः।

प्रकाशः

त्वादिति भावः। प्राणादिनियामकत्वादिप्रतीतावपि न सर्वनियामकत्वादिधीरित्येतद्दृष्टान्तेनोपपादयति—**न ह्याग्नेयमिति**। तृतीयस्याद्यपादे "शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बद्धत्वात्" इत्यन्तिमाधिकरणे दार्शपूर्णमासिकेषु आग्नेयाग्नीषोमीयैन्द्राग्नपुरोडाशेषु "आग्नेयं चतुर्धा करोति" इत्युदाहृत्य किमाग्नेयस्यैव चतुर्धाकरणं उत सर्वेषामिति संशये, अग्नेश्चतुर्धाकरणविषयद्रव्योपलक्षणमात्रत्वेन स्वयं कार्ययोगित्वाभावात् सम्बन्धमात्रेणोपलक्षणत्वसम्भवे देवतात्वाकारानपेक्षत्वात्, "सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः" इति स्मरणादग्नेरिदमिति सम्बन्धमात्रेऽप्याग्नेयशब्दनिष्पत्तेरग्निसम्बन्धस्य चाविशिष्टत्वात् सर्वत्र चतुर्धाकरणमिति प्राप्ते, देवताभूतस्तावदिहाग्निशब्दः, तद्धितेनोपलक्षणमुपादीयते, सम्भवति तु तस्य यथाश्रुत्यैवोपलक्षणत्वं, केवलाग्नेयस्यापि सत्त्वात्, अतो न शब्दानवगतेन सम्बन्धमात्रेणोपलक्षणत्वं युक्तं, विना कारणेन श्रुतबाधप्रसङ्गात्, अग्नीषोमीयादौ च समासादुत्पन्नस्तद्धितो द्वयोः सापेक्षयोर्देवतात्वमाह, तेन तत्रान्यसापेक्षस्याग्नेर्देवतात्वम्, न च सापेक्षितस्य तद्धितेन सामर्थ्यमस्ति, तेनाग्नेयशब्दो न शक्नोत्यग्नीषोमीयादिकमभिवदितुम्, यद्यपि सम्बन्धमात्रेऽप्यविरुद्धः तद्धित-

चन्द्रिका

न च ब्रह्मणः सर्वोपास्यत्वाङ्गीकारे तदाक्षेपायोगः, मुमुक्षुभिर्ब्रह्मैव जिज्ञास्यमित्यवधारणस्यैवाक्षेपात् । अत एव टीकायां "किं विष्णुजिज्ञासानियमेन" इत्युक्तम् । तदेतदभिप्रेत्योक्तं न्यायविवरणे "ऊर्ध्वं प्राणमुन्नयतीत्यादिलिङ्गानां प्राणादन्यत्रावकाशराहित्यं" इति । वामनशब्दस्तु वायावेव युक्तः, न तु ब्रह्मणि, तत्राल्पमात्रपरिमाणत्वादिरूपवामनत्वायोगात् । "अन्यभावव्यावृत्तेः" इत्यादौ सर्वगतस्यापि ब्रह्मणोऽणुत्वाद्युक्तावपि "अङ्गुष्ठमात्रः" इतीशाने श्रुतस्य मात्रशब्दार्थस्य अधिकपरिमाणराहित्यस्यायोगाच्चेति ॥

प्रकाशः

स्तथाऽपीह देवतार्थतैव, उपलक्षणार्थत्वात्, प्रसिद्धसम्बन्धं हि तल्लक्षणं भवति, प्रसिद्धश्च देवतासम्बन्ध एव, न सम्बन्धमात्रमतो देवतात्वमेवोपलक्षणम्, तच्चाग्नीषोमीयादौ नास्तीत्याग्नेयस्यैव चतुर्धाकरणमिति सिद्धान्तितम् । तत्र यथाऽऽग्नेयशब्देनैन्द्राग्नादिधीर्न भवति तथेत्यर्थः। नन्वेवं भाष्योक्तजिज्ञासासूत्राक्षेपो न युक्तः स्यादित्याशङ्क्य, तदाक्षेपप्रकारमाह—**न चेति** । लिङ्गानामनवकाशत्वमुक्त्वा श्रुतिविरोधं निराह—**वामनेति** । द्वितीयसूत्रव्यावर्त्यं हेतुमाह—**अन्यभावेति** । आदिपदेन "अल्पश्रुतेः" "अर्भकौकस्त्वात्" इत्येतद्गृह्यते । **मात्र इतीति** । एतेन वायोरपि "अणुश्च" इत्यणुत्वस्य वक्ष्यमाणत्वादतिसूक्ष्मे तस्मिन् अङ्गुष्ठमितत्वमयुक्तमिति निरस्तं, अधिकपरिमाणराहित्यपरत्वेन तत्परिमाणविधावतात्पर्यादिति । पञ्चम्यन्तहेतूनां 'ईशानो वायुरेव' इति साध्येनान्वयः ।

चन्द्रिका।

सिद्धान्तस्तु—

सहस्राद‌पि लिङ्गानां श्रुतिर्बलवती स्वतः ।
अवकाशोज्झिता सावकाशात्तु किमु लिङ्गतः ॥

वामनश्रुतिर्हि निरवकाशा, "एष उ एव वामनिरेष हि सर्वाणि वामानि नयति" इति श्रुत्यन्तरेऽवधारणात् । "उपेन्द्रो वामनः प्रांशुः" इति स्मृतेः । आर्यप्रसिद्धेश्च ।

प्रकाशः

सौत्रैवकारप्रमितशब्दाभ्यां श्रुतेर्जात्या ऽनवकाशत्वेन च प्राबल्यसूचनादेकयाऽपि श्रुत्याऽनेकेषां सावकाशलिङ्गानां बाधो युक्त एवेति भावेन, "विष्णुरेवेशानः" इत्यादिटीकां विवृण्वन् सूत्राद्युक्तन्यायं सङ्गृह्याह—सहस्रादिति । 'स्वतः' अनवकाशत्वादिकमनपेक्ष्य । स्वभावप्राबल्यमग्रे प्रतिपिपादयिषुः आदौ "तस्याश्च विष्णौ महायोगरूढिसिद्धायाः तत्प्रमापकत्वात्" इति टीकोक्तयोगरूढी विवृण्वन् उत्तरार्धोक्तं निरवकाशत्वं तावद्व्यनक्ति—वामनेति । अत्रैवं क्रमः—ईशानो विष्णुरेव, "मध्ये वामनं" इति वामनश्रुतेः । ननु सावकाशा श्रुतिरित्युक्तमिति चेत्, तत्रेदमुपतिष्ठते—वामनश्रुतिर्हीति । योगमाह—एष इति । 'श्रुत्यन्तरे' छान्दोग्ये । रूढिमाह—उपेन्द्र इति ।

उपेन्द्रो वामनः प्रांशुरमोघश्शुचिरूर्जितः ।

इति सहस्रनामसु । आर्येति । वृद्धानां वामनशब्दस्य विष्णावेव

चन्द्रिका

वामनवामनिशब्दयोश्च लोकवेदाधिकरणन्यायेन वर्णविकारादिनैकदेशस्यान्यथात्वेऽपि 'देवासः, देवाः' इत्यादाविव लाघवेन प्रत्यभिज्ञया एकत्वे संभवति भेदकल्पनायोगात्। न हि "नकिरिन्द्रः" इत्यादौ किरित्यस्य लोकप्रसिद्धात् 'कः' इत्यस्माद्भेदः। तदुक्तं वार्तिके—

प्रकाशः

प्रयोगादित्यर्थः। ननु वामनशब्दनिर्वचनेऽपि वामनिशब्दस्य किमायातमित्यत आह—वामनेति। आद्याध्यायस्य तृतीयपादे "प्रयोगचोदनाभावात् अर्थैकत्वमविभागात्" इत्यन्तिमेऽधिकरणे प्रथमवर्णके, लोकवेदयोः पदपदार्थानां अन्यत्वमुतानन्यत्वमिति संशये, सत्यपि वर्णाभेदे स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानाध्यायादिधर्मभेदेन, जराराजपदयोरिव क्रमभेदेन व्यपदेशभेदात् स्पष्टः पदानां भेदः, पदान्यत्वादेवार्थभेदोऽपीति प्राप्ते, प्रत्यभिज्ञानाद्वर्णाभेदे तदात्मकत्वात्पदानां यत्किंचिद्धर्मभेदेऽप्यर्थभेदापादकधर्मभेदस्यैव पदान्यत्वे प्रयोजकत्वात्, यत्किञ्चिद्धर्मभेदेनाप्यर्थभेदाभावात् पदानामनन्यत्वं, तदभेदादर्थानां अनन्यत्वमिति सिद्धान्तितम्। अत्रोक्तन्यायेन यथा 'देवासः' इत्यादौ "आज्जसेरसुक्" इति जसेः प्रत्ययस्यासुगागमेनैकदेशस्याधिक्येऽपि 'देवाः' इति पदादनन्यत्वं तथेत्यर्थः। आदिपदेन 'रुद्रेभिः, 'रुद्रैः' इत्यादि गृह्यते। उक्तं च महाभाष्ये—"एकदेशविकृतमनन्यवद्भवति। श्वा पुच्छे च्छिन्ने नाश्वो न गर्दभः" इति। तदेव प्रयोगदर्शनेनाह—न हीति।

चन्द्रिका

आकृतीनामभिव्यक्तिर्या कथञ्चिन्निरूपिता ।
नासाववयवाधिक्यविनाशेषु विनश्यति ॥

इति । एवञ्च यथा "यद्योन्यां तदुत्तरयोर्गायति" इत्यत्र उत्तराशब्द उत्तराग्रन्थे संज्ञारूपो निरपेक्ष इति तत्पर एव, न तु योन्यृग्रूपप्रतियोगिसापेक्षोत्तरऋक्परः, तथा वामनशब्दोऽपि रूढ्या विष्णुपरः, नतु दीर्घप्रतियोगिह्रस्वपरः । तदेतदभिप्रेत्योक्तं न्यायविवरणे "वाम-

प्रकाशः

"न किरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन्" इत्यत्र 'किः' इत्यस्य 'कः' इत्यस्य चाभेदस्तथेहापीत्यर्थः । कथंचिन्निरूपिता या देवत्वाद्याकृत्यभिव्यक्तिः असौ अवयवाधिक्यविनाशमात्रेण न नश्यतीति तन्त्रवार्तिकार्थः । ननूक्तमल्पमात्रपरिमाणवत्त्वरूपं वामनत्वं कथं ब्रह्मणि युक्तमित्यतो नायमत्रान्यसापेक्षशब्दः, किन्तु रूढ इति सदृष्टान्तमाह--एवञ्चेति । नवमस्य द्वितीये पादे "नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत" इति षष्ठाधिकरणे "यद्योन्यां तदुत्तरयोर्गायति" इत्यत्र किं योनिनामकऋगपेक्षयोत्तरदेशेऽधीतयोः ऋचोर्गानमुतोत्तरासंज्ञकग्रन्थविशेषाधीतयोरिति संशये, उत्तराशब्दस्य सम्बन्धिशब्दत्वात् यैव योनेः परत्र पठिता सैवोत्तरा, ततश्च योनिपदापेक्षया रथन्तरयोनेः परतो बृहद्योनेः पाठितत्वात् तस्यां गानं, उत्तराग्रन्थे तु रथन्तरयोनेःपरतो "न त्वावां अन्यो दिव्यः" इत्यस्याः पठितत्वात्तस्यां गानमतो विकल्पः, द्वयोरपि रथन्तरयोन्युत्तरत्वादिति प्राप्ते, यद्यप्ययं सम्बन्धिशब्दो लोके, तथा-

चन्द्रिका

नश्रुतेरेवानवकाशः" इति । लिङ्गानि तु सावकाशानि, सर्वनियामकत्वादिमति प्राणादिनियामकत्वादेः प्रासादवासिन्यायेन सम्भवात्। ऐन्द्राग्नादौ तु देवतात्वं व्यासज्यवृत्तीत्यग्नेः प्रत्येकं तत्र देवतात्वाभावान्नाग्नेयता । नियमनं तु न व्यासज्यवृत्ति, "यः पृथि

प्रकाशः

ऽप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धः, तत्र संज्ञाशब्दस्यानपेक्षवृत्तित्वात् सापेक्षवृत्तेः सम्बन्धिशब्दाद्बलीयस्त्वं, प्रकरणपाठाच्चोत्तराग्रन्थःक्त्वञ्च, तस्मादुत्तराग्रन्थाधीतास्वेव गानमिति सिद्धान्तितम् । यथोत्तराशब्दः प्रतियोगिनिरपेक्षार्थः, तथा वामनशब्दोऽपीत्यर्थः । ननूक्तलिङ्गान्यप्यनवकाशानीत्यतो न्यायविवरणोक्तं सावकाशत्वं "तच्च लिङ्गं विष्णोरेव" इत्यादिना भाष्यादौ किञ्चिद्विवृतं प्रपञ्चयति—**लिङ्गानि त्विति** । प्राणादिनियन्तृत्वं विष्णावाह—**सर्वेति** । **प्रासादेति** । केचित्प्रासादवासिनः, केचिद्भूमिवासिनः, केचिदुभयवासिनः । तत्र यथोभयवासिनः प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च गृह्यन्ते, तथेहापि प्राणादिनियामकग्रहणेन प्राणादितरसर्वनियामको ग्रहीतुं शक्य इत्यर्थः । विवृतश्चायं प्रासादवासिन्यायो महाभाष्ये प्रथमपादे—"मुखनासिकावचनोऽनुनासिकः" इत्यत्र । प्रागुक्तैन्द्राग्नादिवैषम्यमाह—**ऐन्द्रेति** । "ऐन्द्राग्नमेकादशकपालं" इत्यादौ इन्द्राग्नी देवता अस्येति विगृह्य

चन्द्रिका

वीमन्तरो यमयति" इत्यारभ्य "यः प्राणमन्तरो यमयति" इति प्रत्येकं नियमनश्रवणात् । "यद्देवान् प्राणयो नव, देवा उपासां चक्रिरे" इत्यादिश्रुतिषु ब्रह्मणो विशिष्य प्राणनियामकत्वादिश्रवणाच्च । "एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते पायूपस्थेऽपानं चक्षुश्श्रोत्रे मुखनासिकाभ्यां" इति

प्रकाशः

"साऽस्य देवता" इत्यण्प्रत्ययस्योभाभ्यां परतः उत्पादितत्वेन द्वयोरन्योन्यसापेक्षयोरेकमेव देवतात्वं व्यासज्यवृत्ति, अन्यथा प्रत्येकं देवतात्वे "समर्थः पदविधिः" इति सूत्रात्समर्थानुवृत्तेस्तद्धितेऽपि भावेन प्रत्येकं देवताकारकात्तद्धितोत्पत्तेरैन्द्रमाग्नेयमिति पृथङ्निर्देशस्स्यात् । 'आग्नेयं' इत्यत्र तु इतरनिरपेक्षाग्नेरेव देवतात्वस्य तद्धितेन बोधितत्वात् तदा तत्र तस्यैव ग्रहणं नान्यस्येत्यर्थः । प्रत्येकमिति । अन्यथा पृथिव्यप्तेजोवाय्वादीन्यमयतीति श्रूयेतेति भावः । यद्देवानिति । "तद्वै त्वं प्राणो अभवः, महान् भोगः प्रजापतेः भुजः करिष्यमाणः, यद्देवान्" इति तैत्तिरीयवाक्यस्य वैष्णवत्वं च "अत एव प्राणः" इत्यत्र सिद्धमिति भावः । उक्तं च भाष्ये—"तस्यैव प्राणत्वोक्तेस्तद्वै त्वं प्राणो अभव इति" इति । "तं भूतिरिति देवा उपासां चक्रिरे" इत्यैतरेये "प्राणस्तथा" इत्यत्रोक्तरीत्या विष्णोरेव सर्वदेवोपास्यत्वश्रवणादित्यर्थः । 'श्रुत्यन्तरे' षट्प्रश्ने । प्राणशब्दितसर्वेन्द्रियाभिमानिनियामकत्वश्रव-

चन्द्रिका

श्रुत्यन्तरे मुख्यप्राणे उक्तस्य सर्वप्राणनियामकत्वस्य

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।

इत्यनेनाप्रतीतेश्च । "मध्ये वामनं" इत्यत्र च मध्यशब्दो देशवाची, "ऊर्ध्वं प्राणं" इति देशवाचकोर्ध्वशब्दसाहचर्यादूर्ध्वत्वप्रतियोगित्वाच्च । एवञ्च यथा "त्रिः प्रथमामन्वाह" इत्यत्र प्रथ-

प्रकाशः

णेऽपि इह प्राणापाननियामकत्वस्यैव श्रुतत्वेन वायुलिङ्गाप्रतीतेरित्यर्थः । एवं लिङ्गद्वयं विष्णावुपपाद्य मध्यमत्वमपि सावकाशयति—मध्य इति । साहचर्यादिति । यथा "वत्समालभेत" इति श्रुतवत्सालम्भस्य गोदोहनादिगुणकर्मसाहचर्येण गुणकर्मत्वं तथेति भावः । ऊर्ध्वेति । ऊर्ध्वशब्दस्य पूर्वसापेक्षत्वेन तत्प्रतियोगिसमर्पकत्वाच्च मध्यदेशवाचीत्यर्थः । अस्त्वेवं किं तत इत्यतो दृष्टान्तपूर्वं प्रकृते सङ्गमयति—एवञ्चेति । नवमस्याऽऽद्यपादे "अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मस्स्यात्" इति नवमेऽधिकरणे दर्शपूर्णमासयोः पञ्चदशसामिधेनीः विधायैकादशर्चः पठित्वा "त्रिः प्रथमामन्वाह, त्रिरुत्तमां, ताः पञ्चदश सम्पद्यन्ते" इति श्रुतं वाक्यमुदाहृत्य त्रिरभ्यासः किं प्राथम्योपलक्षिताया ऋचः प्रवोवाजीयाया धर्मः, तथा च यत्रतत्रस्था प्रवोवाजीया त्रिरभ्यसितव्या, उत प्रथमस्थानधर्मः, ततश्च प्रवोवाजीयाया अन्याऽपि या विकृतिषु प्रथममुच्यते साऽप्यूहेन त्रिरभ्यसितव्येति संशये, 'प्रथमां' इति स्त्रीलिङ्गनिर्देशात् तस्या एव ऋचस्त्रिरभ्यास इति प्राप्ते,

चन्द्रिका

माशब्दः, या ऋक् यत्र प्रकृतौ विकृतौ वा प्रथमस्थानस्था तत्पर एव, न तु प्रकृतौ प्रथमस्थानस्थप्रवोवाजीयऋग्विशेषमात्रपरः, एवं मध्यशब्दोऽपीह "ऊर्ध्वं प्राणं" इति प्राणस्य स्थानान्तरनिर्देशात्तत्त्यागेन मध्यस्थानस्थब्रह्मपरः, न तु श्रुत्यन्तरे मध्यमशब्दोक्तप्राणपरः। तस्माल्लिङ्गानि सावकाशानि। तदुक्तं न्यायविवरणे—"लिङ्गानां परमात्मन्यवकाशो विद्यत एव" इति। अङ्गुष्ठमात्रत्वं च मूर्तिविशेषस्य व्यक्त्यात्मनाऽङ्गुष्ठमात्रत्वाद्वा, स्थान

प्रकाशः

प्रथमाशब्देनैव श्रुत्या प्राथम्याभिधानादृचस्तु लक्षणीयत्वाद्यत्प्रथममुच्यते तत्त्रिरिति प्राथम्यैकार्थसमवेतत्रिरभ्यासस्य विधिः, स्त्री लिङ्गं तु प्राथम्यस्य ऋगाश्रयत्वेनैव प्राप्तत्वाद्गुणवाचिनामाश्रयलिङ्गवचनत्वान्नित्यानुवादः, तस्मात्प्रथमस्थानधर्म एव त्रिरभ्यास इति सिद्धान्तितम्। तत्र यथा प्रथमाशब्दः प्रथमस्थानस्थऋङ्मात्रपरो न तु विशेषपरः, एवमिहापि मध्यमस्थानस्थपरो, न तु तत्रस्थप्राणरूपविशेषपरस्तस्य स्थानान्तरे निर्देशात्। तथा च मध्यस्थं ब्रह्मैवेति तत्पर इति सिध्यतीत्यर्थः। एवं प्रथमसूत्रोक्ति श्रुतिलिङ्गयोर्निरवकाशत्वसावकाशत्वे समर्थ्येदानीं पूर्वपक्ष्युक्ताङ्गुष्ठमात्रत्वस्यापि "हृद्यपेक्षया तु" इति द्वितीयसूत्रोक्तं सावकाशत्वं "हृदि विद्यमानावकाशापेक्षया" इत्यादिटीकायां द्वेधाऽभिप्रेतमिति भावेन टीकां विवृण्वन्नाह—अङ्गुष्ठेति। एतेन टीकावाक्यं वाशब्दसंयोजनेन योज्यमित्युक्तं भवति। टीकायां क्वचिद्वाशब्देनापि पाठः।

चन्द्रिका

हृदयगतस्य स्थानिनि ब्रह्मण्युपचाराद्वा युक्तम् । ननु प्रमाणार्थकमात्रच्प्रत्ययोऽयं, न त्ववधारणार्थो मात्रशब्दः,

देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि ।

इति स्मृतौ 'मितः' इति परिमाणस्यैवोक्तेः । अङ्गुष्ठपरिमाणत्वं च सर्वगतस्यापि व्योमवद्युक्तमित्येव सूत्रे कस्मान्न समाहितमिति चेत्, तथात्वेऽङ्गुष्ठमात्रवाक्ये "मध्य आत्मनि" इत्यस्य "हृदि" इत्यस्य च वैयर्थ्यापातात् ।

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।

इति श्रुत्यन्तरे चाङ्गुष्ठमात्रहृदयगतत्वेनाङ्गुष्ठमात्रत्वोक्तेः । स्मृतावपि "हृदि" इत्यादेरवैयर्थ्यायावधारणस्य विवक्षणीयत्वाच्च । प्राण्यन्तरस्याङ्गुष्ठाभावेऽपि शास्त्रस्य मनुष्याधिकारिकत्वान्मनुष्याणां चाङ्गुष्ठस्य सत्त्वेनादोषात् ।

प्रकाशः

सौत्रं समाधानमाक्षिप्य समाधत्ते---नन्विति । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति सूत्रादङ्गुष्ठशब्दान्मात्रच्प्रत्यये 'जानुमात्रं जलं' इतिवदङ्गुष्ठपरिमाण इत्यर्थो लभ्यते । ततश्च किमित्यत आह---अङ्गुष्ठेति । वैयर्थ्येति । अङ्गुष्ठपरिमितत्वस्य स्थानसापेक्षत्वभावादिति भावः । नन्विदं समाधानं पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतविष्णावसम्भवीत्यतो "मनुष्याधिकारत्वात्" इति सूत्रशेषतात्पर्यं भाष्यटीकयोरुक्तमाह—प्राणीति । अत्राद्यसूत्रस्य

चन्द्रिका

प्रमितग्रहणेनात्र श्रुतेर्निरवकाशताम् ।
एवकारेण लिङ्गेभ्यः प्राबल्यं सूत्रकृज्जगौ ॥

अन्ये तु "अङ्गुष्ठमात्रः पुरुषः" इति श्रुतोऽङ्गुष्ठमात्रो जीवः, परिच्छिन्ने तत्र तन्मात्रत्वसम्भवात् ।

प्रकाशः

हेतूक्तिपरत्वाद्द्वितीयस्य बाधकनिरासपरत्वात् पौर्वापर्यमिति सङ्गतिः स्पष्टेत्युपेक्ष्योक्तन्यायस्य सूत्राक्षरारूढतां टीकोक्तामेव सङ्गृह्य दर्शयति—प्रमितेति । 'अत्र' आद्यसूत्रे ॥

अन्ये त्विति । तत्र भामत्यां,

नाञ्जसा मानभेदोऽस्ति परस्मिन् मानवर्जिते ।
भूतभव्येशता जीवे नाञ्जसा तेन संशयः ॥

इत्यादिना संशयपूर्वोत्तरपक्षा उक्ताः । तथा हि—किमङ्गुष्ठमात्रश्रुत्यनुग्रहाय जीवोपासनपरमेतद्वाक्यमस्तु, तदनुरोधेनेशानश्रुतिः कथञ्चिन्नीयतामाहोस्वित् ईशानश्रुत्यनुग्राहाय ब्रह्मपरमेतदस्तु, तदनुरोधेनाङ्गुष्ठमात्रश्रुतिः कथञ्चिन्नीयताम् । तत्रान्यतरस्यान्यतरानुरोधविशये भामत्युक्तरीत्यैव पूर्वोत्तरपक्षावनुवदति—अङ्गुष्ठेति । 'तत्र' जीवे । तस्यान्तःकरणाद्युपाधिकल्पितब्रह्मभागत्वादन्तःकरणस्य च प्रायो हृत्कमलकोशस्थानत्वात् हृत्कमलकोशस्य च मनुष्याणामङ्गुष्ठपरिमितत्वात् तदवच्छिन्नो जीवोऽपि तथा, नभइव वंशपर्वावच्छिन्नमरत्निमात्रमित्यर्थः । न तु ब्रह्मण्यपरिच्छिन्नत्वादिति भावः । किञ्च

चन्द्रिका

"ईशानो भूतभव्यस्य" इति चरमश्रुतमीशानत्वं तु प्रथमश्रुताङ्गुष्ठमात्रत्वानुरोधात् सङ्कोचयितव्यम्। न च "अल्पश्रुतेः" इति न्यायेनेश्वरेऽप्यङ्गुष्ठमात्रत्वं, तत्र हृत्पुण्डरीकस्येवेह स्थानविशेषस्यानिर्देशादिति प्राप्ते, ब्रह्मप्रश्नोत्तरत्वादस्येशानत्वमसङ्कुचितमेव, अङ्गु-

प्रकाशः

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्।

इति स्मृत्या च जीव एवाङ्गुष्ठमात्रः, सर्वेश्वरस्य यमेन कर्षणायोगादित्यपि बोध्यम्। ननु कथं जीवे भूतभव्येशानत्वं युक्तमित्यत आह—**ईशान इति**। दहराधिकरणपौनरुक्त्याशङ्कोत्तरे अनुवदति—**न चेति**। युक्तं हृत्पुण्डरीकदहरस्थानत्वं परमात्मनः, तदुपलब्धिस्थानविशेषस्य हृत्पुण्डरीकस्य तत्र निर्देशात्, इह तदभावात्। न च "मध्य आत्मनि" इत्यत्रापि स्थानभेदो निर्दिष्ट इति शङ्क्यं, आत्मशब्दस्य स्वभावजीवब्रह्मसाधारणतया, स्वभावस्य स्वभवितृधीननिरूपणतया, स्वस्य च भवितुरनिर्दिष्टतया कस्य मध्य इत्यज्ञानात्, जीवपरयोश्चाणुत्वेन मध्यासम्भवान्नात्र स्थाननिर्देशः स्पष्ट इति भावः। **ब्रह्मेति**।

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥

इति प्राक् ब्रह्मणः पृष्टत्वात् उत्तरग्रन्थसन्दर्भस्य तत्प्रतिव-

चन्द्रिका

ष्ठमात्रत्वोक्तिस्तु ब्रह्मणो जीवैक्याभिप्रायेति सिद्धान्त इत्याहुः। तत्र तावत्पूर्वपक्ष एवायुक्तः, "ईशानो भूतभव्यस्य" इत्यस्याङ्गुष्ठ-वाक्याच्चरमत्वेऽपि "ईशानं भूतभव्यस्य" इत्यस्य प्रथमत्वेनाङ्गुष्ठ-वाक्यस्येशानश्रुतिभ्यां सन्दष्टत्वात्। "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि" "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिव" इति वाक्यद्वये स्थानस्यानिर्देशेऽपि,

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः।

इति तृतीयवाक्ये स्थाननिर्देशाच्च। सिद्धान्तोऽप्ययुक्तः, तत्पक्षे "अन्यत्र धर्मादन्यत्राधर्मात्" इत्यत्र ब्रह्मण इव "येयं प्रेते वि-

प्रकाशः

चनत्वमेव युक्तमिति भूतभव्येशानत्वं निरङ्कुशमेव न सङ्कोचयित-व्यमित्यर्थः। **जीवैक्येति**। यथा "तत्त्वमसि" इति जीवस्य त्वम्पदार्थस्य तदिति परमात्मना विरुद्धांशत्यागेनैकत्वमुच्यते, तथेहाप्यङ्गुष्ठपरिमितस्य जीवस्येशानश्रुत्या ब्रह्माभेदः प्रतिपाद्यत इत्यर्थः। तदुक्तं भामत्यां

प्रश्नोत्तरत्वादीशानश्रवणस्याविशेषतः।

जीवस्य ब्रह्मरूपत्वप्रत्यायनपरं वचः॥

इति। यत्तावदुक्तं प्रथमश्रुताङ्गुष्ठमात्रत्वानुरोधेन चरममीशानत्वं नेय-मिति, तत्तावन्नेत्याह—**ईशान इति**। यदपि दहराधिकरणवैषम्यं, तदपि नेत्याह–**अङ्गुष्ठेति**। अभ्युपेत्येदमुक्तम्। वस्तुतस्तु "मध्य आत्म-

चन्द्रिका

चिकित्सा मनुष्ये" "इत्यत्र जीवस्यापि पृष्टत्वेनाङ्गुष्ठवाक्यस्य जीवपरत्वेऽप्यदोषात्। किञ्च निर्विशेषं ब्रह्मैवैतत्पादार्थः। नच तस्य किंचिदपि प्रतीशितृत्वमस्ति। जीवस्य तु स्वनियम्यं देहादिकं प्रत्यस्ति। एवं च—

ईशानो जीव एव स्यात् स्वदेहादेर्नियामकः।
निर्विशेषं तु नेशानमेकस्याप्यनियामकम् ॥

ऐक्याभिप्रायत्वमपि न तावन्मुख्यार्थत्वाय कल्प्यम्, वाच्यार्थयोरैक्यानङ्गीकारात्। नापि प्रामाण्याय, भेदेऽप्यङ्गुष्ठमात्रहृदयनिष्ठत्वेन गौणाङ्गुष्ठमात्रत्वसंभवात्। युक्तं चाभेदायाङ्गुष्ठमात्रादिश्रुतीनामीशानादिश्रुतीनां च अमुख्यार्थत्वादङ्गुष्ठमात्रत्वश्रुतिमात्रस्य भेदेन गौणार्थत्वम्। किञ्च त्वत्पक्षे जीवस्यापि न स्वतोऽङ्गुष्ठमात्रत्वं, किं तु हृत्क-

प्रकाशः

नि" इत्यत्र देहादिमध्यरूपस्थाननिर्देशोऽस्ति। तथा तृतीयवाक्येऽपि 'हृदये' इति स्पष्टः स्थाननिर्देशोऽस्तीत्यपि ध्येयम्। यदपीशानत्वमसङ्कुचितं ब्रह्मणीति, तदपि नेत्याह—किञ्चेति। यदप्यङ्गुष्ठमात्रत्वोक्तिरैक्याभिप्रायेति, तत्किं वाक्यस्य मुख्यार्थतालाभाय कल्प्यते उत प्रामाण्याय। न द्वयमपि युक्तमित्याह—ऐक्येति। सम्भवादिति। ब्रह्मण इति भावः। ननु को विशेष इत्यत आह—युक्तं चेति। प्रकारान्तरेणान्यथोपपत्तिं वदन्नभेदकल्पनं युक्तमित्याह—किञ्चेति। अत्र तथा स्थाननिर्देशो नेति तु प्रत्यु-

चन्द्रिका

मलकोशोऽङ्गुष्ठमात्रो मनश्चप्रायेण तत्स्थं तदवच्छिन्नश्च जीव इत्येवमौपाधिकम्। एवं चेश्वरस्य जीवाभेदं विनैव दहराधिकरणोक्ताङ्गुष्ठमात्रहृत्कमलकोशस्थत्वादङ्गुष्ठमात्रत्वोपपत्तौ किं जीवाभेदकल्पनया। किं च पूर्वत्र "आत्मानं जीवमन्तिकात्" इति "तं देवास्सर्वे अर्पिताः" इति, उत्तरत्र च

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।

इति, "तादृगेव भवति" इति, "इतरेण तु जीवान्ति" इति, "सुप्तेषु जागर्ति" इति,

प्रकाशः

क्तमिति ध्येयम्। कल्पकाभावमुक्त्वा तत्प्रकरणगतपूर्वोत्तरबहुवाक्यविरोधमाह—किञ्च पूर्वत्रेति।

य इदं मध्वदं वेद आत्मानं जीवमन्तिकात्।

इति जीवस्य समीपस्थमात्मानं वेदेति वाक्येऽन्तिकशब्देन भेदप्रतीतेः।

तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन।

इतिवाक्ये 'अर्पिताः' प्राप्ता इति प्राप्तृप्राप्यभावेन भेदः। 'आत्मनि' जीवे इत्याधारसप्तम्या भेदसिद्धिः।

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।
एवं मुनेर्विजानत आत्मा भवति गौतम॥

इति सादृश्यवाचिना तादृक्छब्देन भेदसिद्धिः।

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेता उपाश्रितौ॥

चन्द्रिका

नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान् । इति, "तमात्मस्थं" इति, "भयादस्याग्निस्तपति" इति भेदस्यैव श्रुतेः कथमभेदपरत्वम् । किञ्चाङ्गुष्ठमात्रे श्रुतं सर्वदेवोपास्यत्वं न पूर्वपक्षस्यानुगुणं, जीवमात्रस्य सर्वदेवोपास्यत्वायोगात् । नापि सिद्धान्तस्य, ज्ञेये निर्विशेषे ब्रह्मणि उपास्यत्वायोगादिति ॥

केचित्तु "प्राणाधिपः सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रः" इति श्रुत्यन्तरे जीवस्याङ्गुष्ठमात्रत्वश्रवणात्, ईश्वरस्य च क्वापि तदश्रवणादिहाप्यङ्गुष्ठमात्रो जीव एवेति प्राप्ते, अन्यत्राश्रुतमप्यङ्गु-

प्रकाशः

इत्यत्रोपजीव्योपजीवकभावेन, "य एष सुप्तेषु" इत्यादौ स्पष्टो भेदः । व्यावहारिकभेदपराण्येतानीति प्रत्युक्तमन्तर्यामिनये । 'ज्ञेये' इति हेतुगर्भम् ॥

**केचित्त्विति** । "अङ्गुष्ठमात्रः पुरुषः" इति वाक्यत्रये श्रुतोऽङ्गुष्ठमात्रः प्रत्यगात्मोत परमात्मेति संशये, तृतीये वाक्ये 'हृदये' इति स्थाननिर्देशेन परोक्तरीतिरयुक्तेत्यन्यथाऽधिकरणशरीरं वर्णितम् । तदनुवदति ।

प्राणाधिपस्सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः ।
सङ्कल्पाहङ्कारसमन्वितो यः ................. ॥

इति वाक्यस्य कर्मवशत्वादिना जीवपरत्वं सिद्धमिति भावः । **जीव एवेति** । ईशानत्वं तु प्रथमाङ्गुष्ठमात्रत्वानुरोधेन शरीरेन्द्रियभो-

चन्द्रिका

ष्ठमात्रत्वमिहेश्वरस्यैव, ईशानशब्दादिति सिद्धान्त इत्याहुः। तन्न,

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः।

हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥

इति श्वेताश्वतरे,

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः।

ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥

इति तैत्तिरीये चान्यत्रेश्वरस्यापि तच्छ्रवणात्। ईश्वरस्यान्यत्र तच्छ्रवणं नास्तीति कृत्वाचिन्ता त्वस्मदुक्ते गत्यन्तरे सति न युक्ता। यदि च श्वेताश्वतरादेरीश्वरविषयत्वे पूर्वपक्षिणो विप्रतिपत्तिस्तर्हि

प्रकाशः

ग्यभोगोपकरणापेक्षया नेयमिति भावः। **ईशानेति**। भूतभव्यस्य सर्वस्येशितृत्वं जीवे ऽयुक्तमितीशानत्वं निरवकाशं, अङ्गुष्ठमात्रत्वं तूपासनार्थमुपासकहृदयेऽङ्गुष्ठमात्रे वर्तमानत्वात्तदपेक्षया युक्तमिति भावः। **ईश्वरस्यापीति**। अन्तरात्मत्व-मोक्षप्रदत्व-सर्वजगदीशानत्वादीनां ईश्वरलिङ्गानामत्र श्रवणादिति भावः। ननु श्रुतप्रकाश एवैतदाशङ्क्य "कृत्वाचिन्तेयं, परमात्मनोऽन्यत्राङ्गुष्ठमितत्वश्रवणाभावमुपेत्यानेन वाक्येनाङ्गुष्ठमितत्वं सिध्यति नेति विचार्यते" इत्यादिना समाहितमित्यत आह—**ईश्वरस्येति**। "यदा मन्त्रगतं ब्रह्मलिङ्गं क्लिष्टं कृत्वा तावपि मन्त्रौ विवादास्पदीकृतौ, तदानीं न कृत्वाचिन्तेयं" इति श्रुतप्रकाशोक्तं प्रकारान्तरमप्यपाकरोति—**यदि चेति**।

चन्द्रिका

"प्राणाधिपः सञ्चरति" इत्यादेर्जीवविषयत्वे सिद्धान्तिनोऽपि सा किं न स्यादिति दिक् ॥

प्रकाशः

ननु तत्र कर्मवशत्वादिकं जीवलिङ्गं श्रुतं चेदिहाप्यन्तरात्मत्वादि-ब्रह्मलिङ्गानि श्रुतानीति समम्। एतेषां जीवेऽपि क्लेशेन नयने तेषामपि कथञ्चित् ब्रह्मणि नेतुं शक्यत्वादिति समम्। किञ्च वाक्यद्वयक्लेशापेक्षया "प्राणाधिपः" इत्येकस्यैवान्यथा नयनमुचितम्। अपि च कृत्वाचिन्तात्वपक्षे "हृदये सन्निविष्टः" इति वाक्ये 'हृदये' इति स्थाननिर्देशो नास्तीत्येव कृत्वाचिन्तासम्भवे किं पररीतिमवधीर्य वाक्यान्तरान्वेषणक्लेशेन। अपि च जीवस्याप्याराग्रमात्रस्य अङ्गुष्ठमात्रत्वममुख्यमित्युपासनार्थं तदिति निर्वाह्यम्। तत्परमात्मपरत्वेऽपि सम्भवति, उपासनार्थमल्पपरिमाणत्वस्य परस्मिन्नप्युक्तदिशा श्रवणात्, अन्यथा जीवेऽप्यश्रवणात्। यदपि जीवो ब्रह्म वेति विचारे, नेश्वरसम्बन्धिलिङ्गान्निर्णयः, किन्त्वीश्वरत्ववाचिशब्दादेवेति वा, पूर्वपक्ष्याशङ्किताया ईशानशब्दान्यथासिद्धेर्निरासार्थो वेति सौत्रैवकारार्थकथनं, तदपि "स्वशब्दात्" इत्यादाविवावधारणेन विनाऽप्युपपत्तेरतिशयालाभाच्चापेशलम्। तदेतदभिप्रेत्योक्तं—दिगिति ॥

एतेन यत्केनचिदुक्तं अङ्गुष्ठमात्रो जीवः शिवो वेति सन्देहे रामानुजरीत्या पूर्वपक्षयित्वा, "सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्ये" इति श्रुत्या भूतभव्येशितृत्वस्य शिवलिङ्गत्वादीशानश्रुतेः

चन्द्रिका

अत्र "श्रुतिर्लिङ्गं" इत्यादिभाष्ये श्रुत्यादौ पूर्वबलीयस्त्वमुक्तम् ।

प्रकाशः

तत्र रूढत्वाच्च शिव एवाङ्गुष्ठमात्र इति, तन्निरस्तं, पूर्वपक्षे तन्मतोक्तदोषग्रासात् । यदत्रोक्तं "अङ्गुष्ठं च समाश्रितः" इत्यादिमन्त्रोऽप्यङ्गुष्ठमात्रत्वश्रवणादेव जीवपर इत्यत्राक्षिप्यते । अतो न दोष इति, तन्न, अङ्गुष्ठमात्रत्वस्याद्यापि जीवमात्रधर्मत्वासिद्धेः । "प्राणाधिपः" इति श्रुतेरपि जीवपरत्वे विवादादित्युक्तत्वात् ।

अथ सत्यवतः कायात् पाशबन्धवशङ्गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥

इति स्मृतेरपि तैत्तिरीयाद्यनेकवाक्यबाधकत्वासामर्थ्यात् । किञ्चाङ्गुष्ठमात्रे श्रुतस्य सर्वदेवोपास्यत्वस्य जीवमात्रेऽनुपपत्तिश्च । सिद्धान्तोऽप्ययुक्तः, "न ते विष्णो जायमानः" "स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः" "सप्तार्धगर्भा भुवनस्य रेतो विष्णोः" इत्यादिश्रुतिभिः,

सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः प्रभुः ।
ब्रह्मेशानादिभिर्देवै र्यत्प्राप्तुं नैव शक्यते ॥

इत्यादिस्मृतिभिस्सर्वेशितृत्वस्य विष्ण्वेकनिष्ठत्वात् । विष्णौ निरूढवामनश्रुतिविरोधाच्च । ईशानशब्दस्य यौगिकार्थप्रतिसम्बन्धिभूतभव्याद्युपादाने रूढ्यनुन्मेषाच्च । "ईशानः प्राणदः प्राणः" इति विष्णौ प्रयोगाच्चेति ।

टीकोक्तश्रुत्यादिलक्षणस्य प्रकृतोपयोगं वदन् तन्मूलप्रमाणमाह—

अत्रेति ।

चन्द्रिका

तदुपपादयितुं टीकायां,

> श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् ।
> पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ।
> एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते ।
> अन्यत्र तत्समोक्तिस्तु समाख्या स्थानमेव च ।
> अध्यायादिप्रबन्धास्तु प्रभेदा आगमस्य तु ॥

इति तत्त्वप्रदीपोदाहृतवचनानुसारेण श्रुत्यादिलक्षणमुक्त्वा तद्बलाबलबीजमुक्तम् । तत्रायं भावः—वाचकशब्दः श्रुतिः । "नाममात्रेण" इति टीकायां मात्रशब्देन शुद्धो योगो व्यावर्त्यः, न तु रूढिसहितः, तेन योगरूढानां वामनादिशब्दानां न श्रुतित्वहानिः ।

प्रकाशः

'टीकायामुक्तं' इत्यन्वयः । अस्पष्टत्वादाह—**तत्रायं भाव इति** । टीकायां "नाममात्रेण निर्देशः श्रुतिः" इत्युक्तम् । तत्र यानि रूढानि तानि नामानीत्युक्त्या रूढशब्दस्यैव श्रुतित्वाप्त्या योगरूढे वामनादिशब्देऽव्याप्तिरित्यतो भावमाह—**वाचकेति** । रूढ्या योगरूढ्या वेत्यर्थः । योगरूढस्यापि नामत्वस्य प्रागेवोक्तेरिति भावः । नन्वेवं "तल्लिङ्गात्" इत्यत्रोक्तानन्तत्वाद्रीथत्वादिलिङ्गवाचिशब्देऽतिव्याप्तिः, तस्यापि योगरूढिभ्यां विष्णुवाचित्वादितिचेन्न, यौगिकत्वेनैव तत्र लिङ्गत्वोक्तेः । "अन्तवद्वै किल ते साम" इत्यादौ पूर्वत्रान्तवत्त्वमुक्त्वा आकाशप्रकरणे 'अनन्तः'

प्रकाशः

इत्युक्तया यौगिकत्वस्यैव प्रतीतेः । अत एवोक्तं तत्र "अन्तत्रयोज्झिते विष्णौ" इत्यादि । यद्वा—अनन्तशब्दस्य श्रुतित्वेऽपि तत्र पूर्वोक्तन्यायातिदेशार्थं यौगिकत्वमात्राश्रयणेन लिङ्गत्वोक्तिः । यद्वा—"नाममात्रेण निर्देशः" इत्यत्र रूढशब्देनैव निर्देश इति प्रतीतेः सर्वस्यापि शब्दस्यौणादिकप्रत्ययान्तत्वेन यौगिकत्वादप्रसिद्धिरित्यतो वाचकशब्दः श्रुतिरित्यभिप्राय उक्तः । न चैवमनन्तादिलिङ्गेऽतिव्याप्तिः, तत्र स्वार्थे श्रुतित्वस्यापि सत्त्वात्, निर्णेयार्थे च व्याप्यार्पकत्वेनानुमापकतया वाचकत्वाभावात् । न चैवं वामनशब्दोऽपि वामनेतृत्वादिव्याप्यार्पकतया निर्णेयार्थेऽनुमापक इति न श्रुतिः स्यादिति वाच्यं, आपाततोऽपि व्याप्यार्पकस्यैव लिङ्गत्वेनाभिमततया वामनशब्दे तदभावात् । तस्य द्विरूपत्वेऽपि लिङ्गत्वानाश्रयेणनापाततो रूढ्याश्रयणेन श्रुतित्वाभिधानाद्वा । नन्वेवं यत्तदादिसाधारणशब्दानां सर्ववाचकतया विष्णोरपि वाचकत्वात् तच्छ्रुतित्वापत्तिरिति चेन्न, श्रुतित्वसामान्यस्येष्टत्वात्, विष्णुश्रुतित्वेऽप्यनिष्टाभावात् । न च तन्निर्णायकतापत्तिप्रसङ्गोऽनिष्टः, श्रुतिमात्रस्यानिर्णायकत्वेऽपि श्रुतित्वानपायात् । असाधारण्येन वाचकश्शब्दः श्रुतिरित्यप्याहुः । नन्वेवमप्यन्विताभिधाने अन्वयरूपवाक्यार्थे पदस्यैव वाचकतया तत्र श्रुतित्वं स्यादिति चेत्, इष्टत्वात् । न च वाक्यप्रमाणकत्वविरोधः, सामान्यान्वये श्रुतित्वेऽपि विशेषान्वये

प्रकाशः

पदान्तरसमभिव्याहारसापेक्षत्वेन तदुपपत्तेः। तदुक्तं तर्कताण्डवे—"तत्तद्विशेषोपस्थापनेन पदान्तरसार्थक्यात्" इति। यद्वा—'नाममात्रेण' इत्यत्र नामपदस्य सुबन्तपद एव प्रसिद्ध्या प्रातिपदिकप्रत्ययपदरूपश्रुतित्रयपरिग्रहाय वाचकशब्दः श्रुतिरित्यर्थ उक्तः। एवञ्च "अत्ता चराचर" इत्यादावदित्यादिप्रातिपदिकस्य, गुहानये "ऋतं पिबन्तौ" इति द्विवचनस्य पिबत्प्रातिपदिकस्य च, "ब्रह्मजिज्ञासा" इत्यादौ ब्रह्मपदादेः श्रुतित्वव्यवहारष्टीकादौ युक्तः। अत एव प्रकृतिप्रत्ययसमभिव्याहारेण जीवान्यगुणपूर्णवस्तुनः कर्मत्वप्रतीत्या विषयसिद्धिरुच्यते जिज्ञासासूत्रे। नन्वेवं "न तु श्रुतेः स्वतो भेदः" इति तर्कताण्डववाक्यविरोध इति चेन्मैवं, मीमांसकोक्तविधायकत्ववि-नियोजकत्वादिभेदनिषेध एव तात्पर्यात्। यद्वा—

श्रुतिश्शब्दोऽनपेक्षस्स्याद्विध्युक्तिविनियोगकृत्।

इत्यादिना मीमांसकैर्विधायकाभिधायकविनियोजकभेदेन श्रुतित्रैविध्यमुक्तम्। तदयुक्तं, सर्वासां श्रुतीनां अभिधायकत्वेन ततो विधान्तराभावादिति परमतनिरासमभिप्रेत्य "नाममात्रेण" इत्यादिटीका प्रवृत्तेति भावेन वाचकः शब्द श्रुतिरित्यर्थ उक्तः। यथोक्तं तर्कताण्डवे—"सर्वाऽपि श्रुतिरभिधात्र्येव। ज्ञापक एव हि शब्दो न तु कारकः। परन्त्विन्द्रादिश्रुतिरिन्द्रमभिधत्ते। लिङादिश्रुतिस्तु विधिम्" इत्यादि। "असाधारणधर्मो लिङ्गं" इति टीका

चन्द्रिका

असाधारणधर्मार्पकः शब्दो वा तदर्पितोऽसाधारणधर्मो वेह लिङ्गम्। न हीहानुमानमात्रं लक्ष्यं, तस्य वाक्याद् दुर्बलत्वात्। किन्तु श्रुतितो दुर्बलं वाक्याच्च प्रबलं वैदिकं लिङ्गम्। तच्च द्विविधमेकपदात्मकमनेकपदात्मकं चेति। तत्राऽऽद्यं यथा "तल्लिङ्गात्" इत्यादौ 'अनन्तः' इत्यादि। द्वितीयं यथा "अत एव प्राणः" इत्यादौ "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यादि। तत्राग्निशब्दादिरूपायाः श्रुतेरग्न्यादिरूपे स्वार्थे साक्षाद्धीहेतुत्वात्सर्वतः प्राबल्यम्। धूमशब्दादिरूपस्य लिङ्गस्य तु स्वार्थे व्याप्ये श्रुतिरूपत्वेऽपि व्यापकेऽग्न्यादौ व्याप्यधीद्वारा धीहेतुत्वाच्छ्रुतितो दौर्बल्यम्। यथाऽत्रैव व्या-

प्रकाशः

न युक्तेव, "तल्लिङ्गात्" इत्यादेरसिद्ध्यापत्तेः। "स एषोऽनन्तः" इत्यादौ तादृशधर्मवाचिन एव सत्त्वेन धर्मस्याभावादित्यत आह— **असाधारणेति**। असाधारणधर्मवाचको लिङ्गमित्युक्ते अनेकपदात्मकलिङ्गेऽव्याप्तिरतः—**तदर्पित इत्युक्तम्**। 'तदर्पितः' शब्दार्पितः। अस्मिन् पक्षे "तल्लिङ्गात्" इत्युक्तिस्तदर्थस्य लिङ्गत्वात् तस्य लिङ्गत्वमभिप्रेत्येति भावः। अव्याप्तिं निरस्यति—**न हीति**। 'तस्य' स्वतन्त्रस्य। एवं श्रुतिलिङ्गयोर्लक्षणटीकां विवृत्येदानीं "श्रुतेस्साक्षादर्थधीजनकत्वात् सर्वतः प्राबल्यं, लिङ्गस्यानुमापकतयाऽर्थबोधकत्वात्तदानन्तर्यम्" इति बलाबलोक्तिपरां टीकां विवृणोति— **तत्रेति**। **दौर्बल्यमिति**। विलम्बितप्रतीतेः हेतुत्वादिति भावः।

चन्द्रिका

प्यार्पकस्य "ऊर्ध्वं प्राणमुन्नयति" इत्यस्य वामनश्रुतितः। स्वस्मिन्नेव पूर्णाकाङ्क्षत्वेन अन्यत्र निराकाङ्क्षपदसन्दर्भरूपवाक्यस्य तु स्वार्थे शाब्दप्रमाणत्वेऽपि, स्वान्तर्गतपदार्थनिर्णये वा, समभिव्याहृतवाक्यान्तरार्थनिर्णये वा कार्येऽनुमापकत्वमेव। तत्राऽऽद्यं यथा "तत्त्वमसि" इति वाक्ये तत्सादृश्यं तच्छब्दार्थ इत्यत्र तत्पदेन सह "त्वमसि" इति पदसमभिव्याहारस्य। वाक्यान्तरार्थनिर्णायकत्वमपि तन्निर्णायकश्रुत्यादियुक्तत्वेन वा, प्रश्नोत्तरादिभावेन समभिव्याहारमात्रेण वा।

प्रकाशः

'इत्यस्य' प्राणव्यवस्थापकत्वबोधकशब्दस्य। यावदयं शब्दः स्वार्थं व्याप्यमुपस्थाप्येशानपदाद्यर्थतया वायुं बोधयित्वा वाक्यस्य तत्परत्वं बोधयति, ततः प्रागेव वामनश्रुतिः झडिति स्वार्थमीशानपदाभिमतं बोधयतीति तस्य दौर्बल्यमित्यर्थः। "निराकाङ्क्षपदानि वाक्यम्" इति टीका 'गौरश्वः पुरुषः' इत्यादावतिव्याप्तिप्राप्तेरन्योन्याकाङ्क्षावत्पदकदम्बकवाक्येऽसम्भवाच्चायुक्तेत्यतः तदाशयव्यक्तिपूर्वं, "वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात्ततोऽपि दौर्बल्यम्" इति टीकावाक्ये अनुमापकत्वोक्तिरयुक्ता, तस्य शब्दप्रमाणत्वादित्यतस्तत्साधयन् तदवान्तरविभागमाह—**स्वस्मिन्नेवेति**। 'स्वार्थे' संसर्गरूपे। **स्वान्तरिति**। अनेन वाक्यं स्वान्तस्स्थपदार्थनिर्णायकं समभिव्याहृतवाक्यार्थनिर्णायकं चेति द्विविधमित्युक्तं भवति। द्वितीयमपि द्विविधमित्याह—**वाक्यान्तरेति**। **मात्रेण वेति**। 'अनुमापकत्वं'

चन्द्रिका

तत्राप्याद्यं यथा "आकाश इति होवाच" इति वाक्ये ब्रह्मा ऽऽकाशशब्दार्थ इत्यत्र "आकाशः परायणं" इति वाक्यस्य। द्वितीयं यथा "हृद्यन्तर्ज्योतिः" इति वाक्ये ब्रह्मैव ज्योतिश्शब्दार्थ इत्यत्र प्रसिद्धजीवपरत्वेऽनुपपन्नस्य "कतम आत्मा" इति प्रश्नवाक्यस्य। ततश्च वाक्यस्य लिङ्गवत्साक्षाद्व्याप्यभूतैकार्थासमर्पकत्वादव्याप्यभूतानेकपदार्थकथनद्वारा प्रश्नोत्तरादिभावेन समभिव्याहृतस्वार्थान्वययोग्य एव वाक्यान्तरार्थ इत्यनुमापकत्वाल्लिङ्गाद्दुर्बलत्वम्। यथा "दहरे" इत्यत्र "किं तदत्र विद्यते यदन्वेष्टव्यं" इत्यादिवाक्यस्यापहतपाप्मत्वादिलिङ्गात्। विवृतं चैतत्तत्रैव। अत एव तत्र टीका "वाक्यान्वयानुपत्तेः" इति। अत्रापि "लिङ्गवाक्ययोः

प्रकाशः

इति वर्तते। इदानीं "वाक्यस्यानेकार्थकथनद्वारा" इति वाक्यं व्यनक्ति—ततश्चेति। उक्तदिशाऽनुमापकत्वे सतीत्यर्थः। कथं तर्ह्यनुमापकत्वमित्यत आह—प्रश्नोत्तरेति। आदिपदेन श्रुतिलिङ्गयोर्ग्रहः। विवृतमिति। "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं" इति पूर्ववाक्यं, "किं तदत्र विद्यते" इत्यादिप्रश्नप्रतिवचनपरवाक्यानुरोधेनाऽऽकाशस्य प्रसिद्धाकाशत्वमुपेत्य तद्द्वारा द्यावापृथिव्यादेः हृत्पद्मस्थत्वादिपरं उत "एष आत्माऽपहतपाप्मा" इत्यादिलिङ्गानुसारात् ब्रह्मणस्तथात्वपरमिति विशये आकाशस्य दहरवाक्ये हृत्पद्मस्थतामुक्त्वाऽ

प्रकाश

न्वेष्टव्यवाक्ये दहराकाशान्तरस्थस्यान्वेष्टव्यत्वे उक्ते "किं तदत्र विद्यते" इत्यनेन अन्वेष्टव्ये आधेये पृष्टे "यावान्वै" इत्यादिना पूर्वोक्तमाधारमाकाशमनूद्य, तच्च द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशस्य तुल्यतया विशिष्य, "उभे अस्मिन्" इत्यादिना द्याव्यापृथिव्यादेरन्वेष्टव्यत्वोक्तेरन्वितत्वेन "किं तदत्र" इत्यादिवाक्यानुरोधाद्द्यावापृथिव्यादेरेव तथात्वपरमिति प्राप्ते, पापाद्यप्रसक्त्या जडेऽपहतपाप्मत्वादेरयोगात् सजातीये जीवे तत्प्रसक्तिमात्रेण ब्रह्मणि तत्सम्भवात्तदनुरोधेन वाक्यस्यापि कथञ्चिद्ब्रह्मणि नेयत्वात्पूर्ववाक्यं ब्रह्मण एव सर्वाधारतया हृत्पद्मस्थत्वादिपरमिति । यद्वा—"यावान्वा अयमाकाशः" इत्येतद्वाक्यं प्रसिद्धाकाशपरमुत ब्रह्मपरमिति विशये, प्रसिद्धाकाशस्य दहरवाक्ये हृत्पद्मस्थतामुक्त्वेत्यादि द्रष्टव्यम् । द्यावापृथिव्यादेरित्यत्राकाशस्येति द्रष्टव्यम् । तत्पूर्ववाक्यमित्यत्राप्युत्तरवाक्यं ब्रह्मपरमित्यपि ध्येयम् । तत्र यावत् "किं तदत्र" इत्यादिवाक्यं तदाद्यनेकपदार्थोक्तिद्वारा पदार्थसंसर्गरूपस्वार्थं बोधयित्वा समभिव्याहृतपूर्ववाक्यमन्यार्थमिति बोधयति, ततः प्रागेव तत्समानाधिकरणमपहतपाप्मत्वादिशब्दरूपं लिङ्गं व्याप्यं स्वार्थमुपस्थाप्य हृत्पद्मस्थं ब्रह्मेति निश्चाययतीति द्वितीयायामेव कक्ष्यायां निर्णीतत्वेन तृतीयकक्ष्यायां प्रवर्तमानवाक्यं न तत्र पराक्रमत इत्यर्थः। इदं च "समभिव्याहारमात्रेण वा" इत्यस्योदाहरणम् । श्रुति-

प्रकाशः

युक्तस्य तु यथाऽत्रैव

मध्ये वामनमासीनं विश्वे देवा उपासते ।

इति वाक्यं "ईशानो भूतभव्यस्य" इत्यादिवाक्यार्थनिर्णायकं, यथा वा "तमेवैकं जानथ आत्मानं" इति वाक्यं "यस्मिन् द्यौः" इत्यादिपूर्ववाक्यार्थनिर्णायकमित्यादि । लिङ्गयुक्तं तु "स एष परोवरीयान्" इत्यादिवाक्यं पूर्ववाक्यार्थनिर्णायकम्, यथा वा "तदैक्षत बहु स्यां प्रजायेय" इति वाक्यं "सदेव सोम्य" इत्यादिवाक्यार्थनिर्णायकम् । स्वान्तर्गतपदार्थनिर्णायकं तु 'गामानय' इत्यादौ गोशब्दस्य पृथिव्यादिपरत्वनिरासेन पश्वर्थत्वनिर्णायकं, यथा वा "शब्दविशेषात्" इत्यत्र "एतमेव ब्रह्मेत्याचक्षते" इति वाक्यं चतुर्मुखाद्यर्थत्वनिरासेन ब्रह्मशब्दस्य विष्णवर्थत्वनिर्णायकं, यथा वा "यं पृथिवी न वेद" इत्यादि वाक्यं पृथिव्यादिशब्दस्य चेतनार्थत्वनिर्णायकं ध्येयमिति भावः । यद्यपि स्वान्तर्गतपदार्थनिर्णायकमपि वाक्यं तन्निर्णायकश्रुतिलिङ्गोपेतत्वेन वा आकाङ्क्षादिमत्पदसमभिव्याहारमात्रेण वेत्यत्रापि द्वैविध्यं सम्भवति, "अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यादिवाक्यमानन्दमयादिपदार्थनिर्णायकात्मश्रुत्युपेतत्वेन, "यो वै भूमा तत्सुखं" इत्यादि वाक्यं भूम्नो विष्णुत्वनिर्णायकपूर्णसुखोपेतत्वेन, समभिव्याहारमात्रेण तु 'गामानय' "एतमेव ब्रह्मेत्याचक्षते" इत्यादि । तथाऽपि स्पष्टत्वात् स्वयमेवोहितुं शक्य-

प्रकाशः

मिति विशेषाभावाद्वा तन्नोक्तमिति ध्येयम् । ननु अनेकपदात्मक-वाक्ये समभिव्याहृतानि पदान्येव स्वार्थविशिष्टसंसर्गं वा संसृष्टान् स्वार्थानेव वा युगपद्बोधयन्ति, न तु पदार्थान् प्रतिपाद्यानन्तरं तत्संसर्गं वाक्यार्थं बोधयन्ति, विरम्य व्यापारानुपपत्तेः । तथा च वाक्यम-नेकपदार्थविशिष्टसंसर्गरूपं स्वार्थं बोधयित्वा तदन्वययोग्यं वाक्या-न्तरार्थमनुमापयतीति लिङ्गवदेवाविप्रकर्षात् कथं ततो दौर्बल्यम् । न च पदैः पदार्थस्मृतौ जातायामनन्तरं वाक्यार्थबोधः, ततस्तद-न्वययोग्यवाक्यान्तरानुमितिरिति विप्रकर्ष इति वाच्यं, पदकदम्ब-श्रवणवाक्यार्थबोधयोर्मध्ये पदार्थस्मृतेरेवानङ्गीकारात् । उक्तं च तर्क-ताण्डवे "वाक्यस्थपदज्ञानान्वयानुभवयोर्मध्ये पदार्थस्मृतिरेव नास्ति" इति । उक्तं च सुधायामपि "पदनिचयश्रवणवाक्यार्थबोधावान्तरार्थ-स्मृतीनामेवानभ्युपगमात्" इति । न च पदनिचयरूपवाक्यश्रव-णानन्तरं संङ्केतस्मरणे सति पदार्थविशिष्टसंसर्गबोध इति विलम्बः, लिङ्गेऽपि सङ्केतस्मरणानन्तरमेव व्याप्यरूपस्वार्थबोध इति साम्या-त् । किञ्चैकपदात्मकलिङ्गे झडिति स्वार्थबोधेऽप्यनेकपदात्मकलिङ्गे अनेकपदार्थकथनद्वारा व्याप्यरूपस्वार्थबोधेन विलम्बाद्वाक्यादवि-शेषः, एकपदात्मकेऽप्यवयवसमभिव्याहारसापेक्षत्वेन विलम्बाच्चेति चेत्, उच्यते, वाक्यं स्वार्थं बोधयित्वा तस्याव्याप्यत्वात् झडिति वाक्यान्तरार्थनिर्णये असमर्थं सत् स्वार्थान्वयायोग्यार्थपर-

चन्द्रिका

इदमेवाभिप्रेतम्। "गोत्रभिदं, प्रवक्षणा अभिनत्पर्वतानां" इतीमे अपि लिङ्गे एव, उक्तरूपयोर्लिङ्गवाक्ययोस्साक्षादसाक्षात्त्वेन भेदे दृष्टान्तिते, न तु लिङ्गवाक्ये। अत एव "इत्यादिवत्" इति वत्करणम्।

प्रकाशः

त्वे समभिव्याहारानुपपत्तेरित्यन्यथानुपपत्तिसध्रीचीनमेव वाक्यान्तरार्थं निर्णाययति, लिङ्गं तु नैवमिति विप्रकर्षसन्निकर्षौ। वाक्यद्वयानुसन्धानसापेक्षत्वाद्वाक्यस्य विप्रकर्षः। "अनेकपदार्थकथनद्वारा" इत्युक्तिस्तु विशेषान्वयबोधेऽर्थविशेषोपस्थापकपदान्तरसमभिव्याहारसापेक्षत्वमात्रेण वा, "युक्तं च एकार्थत्वे" इत्यादिवक्ष्यमाणरीत्या पदनिचयश्रवणविलम्बेनार्थप्रतीतेर्विलम्बितत्वाद्वा, संसर्गज्ञानस्यानेकपदार्थपूर्वकत्वाद्वेति। इदमेवेति। ततश्च "वाक्यस्य" इत्यादिनोक्तमेव बीजमित्यर्थः। ननु टीकायां "लिङ्गवाक्ययोः साक्षादसाक्षात्त्वेन भेदः, "गोत्रभिदं, प्रवक्षणा अभिनत्पर्वतानां" इत्यादिवत्" इति पर्वतपक्षभेदकत्वरूपव्याप्यार्पकस्यैव वाक्यतयोदाहृतत्वात् कथमेतदेवाभिप्रेतमित्युक्तमित्यत आह—गोत्रेति। यथा लिङ्गयोरेवैकपदानेकपदात्मकयोरसाक्षात्त्वादिना भेदः, तथा लिङ्गवाक्ययोरपि व्याप्याव्याप्यार्पकत्वादिना भेदो ज्ञेयः। उदाहरणं तु "किं तदत्र" इत्यादिकमेवेति द्रष्टव्यमिति तात्पर्यमुक्तं भवति। अत एवेति। अन्यथा "तद्यथा" इत्येवावक्ष्यदिति भावः। कुत एवं, लिङ्गवाक्ये

चन्द्रिका

उक्तं हि अनेकपदार्पितस्याप्यसाधारणधर्मस्य लिङ्गत्वं "अन्तस्तद्धर्मोपदेशात्" "अत एव प्राणः" "जीवमुख्यप्राणलिङ्गात्" "तथा हि दृष्टं लिङ्गं च" इत्यादिसूत्रेषु तव्द्याख्यानेषु भाष्यानुव्याख्यानन्यायविवरणेषु तट्टीकासु च। यद्यपि 'अस्तङ्गतः सविता' इत्यादिवाक्यं सन्ध्यामुपास्वेत्याद्यर्थे, तथा 'अयं दण्डः, इयं गौः'

प्रकाशः

एवैते, वदित्यपि तद्यथेत्यर्थे व्याख्यायतामित्यत आह—**उक्तं हीति।** उत्तरत्रान्वयः। **अन्तरिति।** "अन्तस्समुद्रे मनसा चरन्तं, यस्याण्डकोशं शुष्ममाहुः" इति समुद्रस्थत्वब्रह्माण्डवीर्यत्वादिलिङ्गादित्युक्तेः, "अत एव प्राणः" इत्यत्र "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रीलक्ष्मीपतित्वस्य, "जीवमुख्यप्राण" इत्यत्र "तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति" इति शतायुष्ट्वस्य, "ता अहिंसन्ताहमुक्थमस्मि" इत्यादिप्राणसंवादादिलिङ्गस्य, "तथा हि दृष्टं लिङ्गं च" इत्यत्र "अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके" इति सुधासमुद्राश्रयलोकवत्त्वादिलिङ्गस्य चोक्तेरिति भावः। नन्वेवमपि लोके अर्थान्तरानुमापकव्याप्त्यार्पकमपि वाक्यं उपलभ्यत इत्यव्याप्यभूतानेकार्थानुमापकत्वेन वाक्याप्राबल्योक्तिरयुक्तेत्याशङ्क्याह—**यद्यपीति।** विप्रस्य सन्ध्यामुपास्वेति, चोरस्य स्तेयार्थमुद्युङ्क्ष्वेति, पान्थस्य पन्थानं न व्रजेति, कामिन्याः कान्तप्रलोभने प्रवर्तस्वेत्यादिरादिपदार्थः। सवितृस्तमयस्य तद्व्याप्यत्वादिति भावः।

चन्द्रिका

इत्यादिवाक्यमपि दण्डेन गामानयेत्याद्यर्थे लिङ्गम् । उक्तं हि सुधायां—"वाक्यलिङ्गानुमा हि सा" इति । तथाऽपि वाक्यान्तरार्थावसितौ अलिङ्गत्वान्न तदिहोदाहरणम् । उक्तं ह्यनुव्याख्याने—

अगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः ।

वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा ॥

इति । एकार्थतात्पर्ययुक्तानेकवाक्यसन्दर्भरूपप्रकरणस्य तु बह्व-

प्रकाशः

**उक्तं हीति** । अनुमानिकपादे शब्दवृत्तिचिन्ताप्रस्तावे "व्यञ्जनं नामापरा वृत्तिरस्तीति चेन्न, अनुमानत्वेन शब्दशक्तित्वानङ्गीकारात् । यथोक्तं "वचनलिङ्गानुमा हि सा" इति" इति कर्मनिर्णयवाक्यमुदाहृत्यानुमानत्वमुक्तमित्यर्थः । **वाक्यान्तरेति** । वाक्यान्तरार्थावसायकं वाक्यमिहाभिप्रेतं, तच्चोक्तरूपमेवेति न दोष इति भावः । **उक्तं हीति** । भक्तिपादे "सन्ध्ये सृष्टिराह हि" इत्यधिकरणव्याख्यावसरे उक्तमित्यर्थः । 'अखिलाः' उपक्रमादयः, 'नियत व्याप्तयः' यो यत्रोपक्रम्यते स तत्र प्रतिपाद्य इत्यादिरूपां व्याप्तिमपेक्षमाणाः आगमार्थावसित्यर्था इत्यर्थः । 'तथाविधाः' व्याप्तिमपेक्ष्यागमार्थावसित्यर्था इत्यर्थः । एवं वाक्यस्य दौर्बल्यं तद्बीजं चोपपाद्येदानीं "एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम्" इति टीकाविवरणपूर्वकं "प्रकरणस्य बह्वर्थपरत्वेनार्थान्तरानुमितिहेतुत्वात् तदवमता" इति टीकावाक्यं च व्यनक्ति—**एकेति** । भिन्नतात्पर्यके

चान्द्रिका

र्थपरत्वेन अनेकावान्तरवाक्यार्थधीपूर्वकमिदं प्रकरणमेतत्परमिति यज्ज्ञानं तत्पूर्वकं प्रकरणान्तर्गतविप्रतिपन्नवाक्यस्यापि प्रकरणानुगुण एवार्थ इत्यनेकवाक्यार्थधीद्वारा लिङ्गत्वात् वाक्याद्दुर्बलत्वम्। यथा "ज्योतिर्दर्शनात्" इत्यत्र "किंज्योतिरयं पुरुषः आदित्येनैवायं

प्रकाशः

वाक्यसन्दर्भे अतिव्याप्तिवारणयैतद्विशेषणम्। बह्वर्थपरत्वेन निमित्तेन यान्यनेकान्यवान्तरवाक्यानि तदर्थधीपूर्वकमित्यर्थः। **यथेति**। वक्ष्यते चैतदधिकरणशरीरं तत्र। "किंज्योतिरयं पुरुषः" इति प्रकरणं यावत् "उभौ लोकावनुसञ्चरति, इमं लोकमभिक्रामति, उत्क्रमिष्यन् म्रियमाणः "इत्यादिजीवासाधारणलिङ्गप्रतिपादकानेकावान्तरवाक्यार्थधीमतः प्रकरणमेतज्जीवपरमिति जानतो "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इति वाक्यस्य जीवपरत्वं बोधयति, ततः प्रागेव "कतम आत्मा" इति, "आत्मनैव ज्योतिषाऽऽस्ते" इति पूर्वोक्तात्मस्वरूपप्रश्नवाक्यं स्वार्थप्रतिपादनद्वारा समभिव्याहारेण तद्वाक्यं विष्णुपरमिति बोधयतीति द्वितीयकक्ष्यायामेव वाक्यार्थनिर्णये, तृतीयकक्ष्यायां प्रवर्तमानं प्रकरणं न कल्पयितुं क्षमत इति वाक्यात् दुर्बलत्वं तस्येत्यर्थः। यद्यपि महाप्रकरणमवान्तरप्रकरणमिति च प्रकरणेऽपि द्वैविध्यं भाति, यथा "नैवेह किञ्चनाग्र आसीत्" इति विष्णुपरे महाप्रकरणे "स एष प्राणस्त्रेधा विहितः" इति प्राणावान्तरप्रकरणेन "तस्य प्राची

चन्द्रिका

ज्योतिषाऽऽस्ते" इत्यादिजीवप्रकरणस्य प्रसिद्धजीवपरत्वेऽनुपपन्नत्वात् "कतम आत्मा" इति प्रश्नवाक्यात्। अत एव तत्र टीका "कतम आत्मेति प्रश्नायोगात्" इति। यद्वाऽत्र टीकायां तत्करणस्य "तद्यथा"

प्रकाशः

दिक्शिरः" इत्यादिनोच्यमानं कूर्मरूपं प्राणस्येत्युच्यते। वाक्ये तु महावाक्यमवान्तरवाक्यमिति द्विधा न सम्भवति; महावाक्यस्यानेकवाक्यसन्दर्भरूपत्वात्प्रकरणान्तर्भावसम्भवात्। न चैवं महाप्रकरणं स्थानमेवेति वाच्यं, अनेकप्रकरणसन्दर्भशून्येऽपि ब्रह्मप्रकरणे अन्यावान्तरप्रकरणसत्त्वात्। तथा च तयोर्विरोधे सन्निकर्षादिसम्भवादवान्तरप्रकरणं बलवदित्यपि वक्तुं शक्यम्। तथाऽपि स्पष्टत्वात् नोक्तमित्याहुः। यत्तु, वाक्य इव प्रकरणेऽपि स्वान्तर्गतपदार्थनिर्णायकं तादृशवाक्यार्थनिर्णायकं चेत्यपि द्विधा सम्भवति। आद्यं यथा "अदितेरदितित्वं" इत्यदितिपदार्थनिर्णायकं "नैवेह किञ्चन" इति ब्रह्मप्रकरणम्। द्वितीयं तु "यस्मिन् द्यौः" इत्यादिवाक्यार्थनिर्णायकं "द्वे विद्ये वेदितव्ये" इत्यादिप्रकरणम्। समभिव्याहृतप्रकरणान्तरार्थनिर्णायकमिति तु त्रिधा न संभवति, प्रकरणस्य प्रकरणान्तरार्थानिर्णायकत्वादिति, तन्न, वाक्यार्थनिर्णयेनैव तस्य लाभात्। न हि पदार्थनिर्णयं विना वाक्यार्थनिर्णयः समस्ति। एवं स्थानेऽपि द्रष्टव्यम्। एवं लिङ्गवाक्ययोर्बलाबलित्वे टीकास्वारस्यानुरोधेन बीजान्तरं वक्तुं प्रकारान्तरेण तत्स्वरूपमाह—यद्वेति।

चन्द्रिका

इत्यादिवदुदाहरणार्थत्वात्, टीकास्वारस्यानुसारेण व्याप्यार्पकं पदं लिङ्गं, तदर्पकानि निराकाङ्क्षपदानि वाक्यम् । युक्तं चैकार्थत्वेऽपि 'एकः कर्ता वर्तमाने काले स्वार्थं पाकक्रियां निर्वर्तयति, पचते' इत्यनयोर्मध्ये 'एकः' इत्यादिवाक्यात् 'पचते' इति पदस्यैव झडिति बोधकस्य लिङ्गस्य वाक्यात् प्राबल्यम् । यथा "तल्लिङ्गात्" इत्यत्र वाय्वादिभूतकारणत्वरूपभूताकाशलिङ्गार्पकात् "सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति वाक्यादनन्तत्वलिङ्गस्य । अस्मिन् पक्षे वाक्यस्य प्रकरणात्प्राबल्ये "ज्योतिश्चरण" इत्यत्राग्निसूक्तात् "वि मे कर्णा पतयतः" इति वाक्यमुदाहर्तव्यम् । सूत्रादौ

प्रकाशः

ननूभयोरपि व्याप्यार्पकत्वे कथं प्राबल्यादीत्यत आह—**युक्तं चेति** । 'एकः' इत्येकवचनार्थः, 'कर्ता' इति लकारार्थः, 'वर्तमान' इति लडर्थः, एकस्यैव लकारत्वलट्त्वरूपधर्मभेदेनार्थभेदात् । 'स्वार्थ' इत्यात्मनेपदार्थः, 'पाक' इति प्रकृत्यर्थः, 'निर्वर्तयाति' इत्याख्यातार्थः । नन्वेवं "कतम आत्मा" इति प्रश्नवाक्यस्य व्याप्यार्पकत्वाभावाद्वाक्यप्राबल्ये नेदमुदाहरणमित्यत आह—**अस्मिन्निति** । सूक्तस्याग्निप्रकरणत्वात् "वि मे कर्णा" इति वाक्यस्य कर्णादिविदूरत्वरूपव्याप्यार्पकत्वादिति भावः । एतेनायं पक्षः प्रागेव तत्प्रस्तावे कस्मान्नावतारित इति निरस्तं, प्रकरणदौर्बल्यज्ञानेऽपि वाक्यस्वरूपस्य ज्ञातव्यत्वादिति । प्रागुदाहृतसूत्रभाष्यादौ लिङ्गत्वोक्तेर्गतिमाह—**सूत्रेति** ।

चन्द्रिका

वाक्योक्तेऽपि व्याप्ये लिङ्गत्वोक्तिस्तु बोधकस्य शब्दस्य वाक्यत्वेऽपि बोध्यस्य समुद्रशायित्वलक्ष्मीपतित्वादेः व्याप्यत्वमभिप्रेत्यावान्तरभेदाविवक्षया युक्ता । एकार्थपरानेकप्रकरणसन्दर्भरूपस्थानस्य तु अतिबह्वर्थैकथकत्वेनानेकप्रकरणार्थधीपूर्वकमिदं स्थानमेतत्परमिति यत् ज्ञानं तत्पूर्वकं स्थानान्तर्गतविप्रतिपन्नवाक्यस्यापि स्थानानुगुण एवार्थ इत्यनेकप्रकरणार्थधीद्वारा लिङ्गत्वात् प्रकरणाद्दुर्बलत्वम् । यथा षट्प्रश्नोपनिषद्रूपस्य ईश्वरपरस्य स्थानस्य "भगवन् कुत एष प्राणो जायते" इत्यादिखण्डरूपान्मुख्यप्राणप्रकरणात् । अत

प्रकाशः

"अनेकप्रमेयप्रतिपादकमेकार्थतात्पर्ययुक्तं स्थानम्" इति लक्षणटीकां विवृण्वन् "स्थानस्यातिबह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्यम्" इति टीकावाक्योक्तं दौर्बल्यबीजं व्यनक्ति—**एकार्थेति** । **प्रकरणार्थधीपूर्वकमिति** । तदभावे स्थानस्य तत्परत्वबुद्धेरयोगादिति भावः । **यथेति** । उपनिषद्रूपं स्थानं यावत् "प्रजाकामो ह वै प्रजापतिः" इत्यादिस्रष्टृत्वादिभगवन्महिमप्रतिपादकान्यनेकप्रकरणानि तदन्तस्स्थविष्णुलिङ्गबोधकनानावाक्यार्थालोचनपूर्वं ब्रह्मपराणीति विज्ञाय, 'सुकेशा भारद्वाजः, प्रजाकामः' इत्यारभ्य "नमः परमऋषिभ्यः" इत्यन्तं स्थानं विष्णुपरमिति जानतः, "एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते" इति तृतीयप्रश्नस्थं वाक्यं स्थानानुगुणतया विष्णुपरमिति बोधं

चन्द्रिका

एव तत्खण्डमध्यस्थं "एवमेवैष प्राणः" इत्यादिकं स्थान-बाधेन प्रकरणान्मुख्यप्राणपरम् । अत एवात्र तत्रोक्तप्राणव्यवस्था पकत्वादीनां मुख्यप्राणलिङ्गत्वं उपेत्य श्रुत्या बाध उक्तः । यथा चाकाङ्क्षादिमद्वाक्यसंघरूपप्रकरणस्य वाक्याद्भेदः, तथाऽकाङ्क्षादिमत्प्र-करणसंघरूपस्य स्थानस्यापि प्रकरणाद्भेदः । निर्णीतस्थले समानो-

प्रकाशः

जनयति, ततः प्रागेव "आत्मत एष प्राणो जायते । यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम्" इत्यारभ्य

उत्पत्तिमायातिं स्थानं विभुत्वं चैव पञ्चधा ।

अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते ॥

इत्यन्तं प्रकरणं विष्णुजत्वादिलिङ्गप्राणश्रुत्युपेतावान्तरनानावाक्या-र्थधीपूर्वं प्रकरणं वायुपरमिति जानतस्तदनुगुणतया "एव मेवैष प्राणः" इति वाक्यं वायुपरमिति बुद्धिमुत्पादयतीति तृतीयकक्ष्यायामेव प्रकरणेन निर्णये, चतुर्थकक्ष्यायां प्रवर्तमानं स्थानं निराकाङ्क्षत्वान्न प्रभवति निर्णा-ययितुमित्यर्थः । लिङ्गवाक्ययोर्न्योर्प्यार्पकत्वाविशेषेऽपि टीकोक्तं भेदमुपपाद्य, तदुपलक्षणमिति भावेन स्थानप्रकरणयोरपि स्वय-माह—यथा चेति । अनुवादमहिम्ना वाक्यप्रकरणयोरपि भेदस्स्पष्ट-इत्युक्तं भवति, उक्तरीत्या सन्निकर्षविप्रकर्षयोरानुभविकत्वादिति भावः । "समानोक्तिः समाख्या" इति टीकोक्तेः पक्षसमेऽतिव्याप्ति-वारणाय तदाशयव्यक्तिपूर्वं तदवान्तरविभागमाह—**निर्णीतेति** ।

चन्द्रिका

क्तिस्समाख्या । सा चार्थतः शब्दतश्चेति द्वेधा । तत्राऽऽद्या वैश्वानरस्य विष्णुत्वे पुरुषसूक्तसमाख्या । द्वितीया विश्वकर्मसूक्तोक्तस्य अजस्य विष्णुत्वे अम्भ्रणीसूक्तसमाख्या । अस्याः स्वार्थे शब्दरूपत्वेऽप्यत्रोक्तमेव स्थलान्तरस्थविप्रतिपन्नवाक्येनापि बोध्यमित्यत्र स्थलद्वयानुसन्धानपूर्वकं, तत्सदृशत्वादिदं तदर्थपरमित्येवं सादृश्यमात्रेण

प्रकाशः

तत्राऽऽद्येति । "शब्दादिभ्योऽन्तः प्रतिष्ठानात्" इति सूत्रे "पुरुषविधमपि चैनमधीयते" इत्यनेन "यः पुरुषाख्यो विष्णुः पुरुषसूक्ते "शीर्ष्णो द्यौस्समवर्तत, चक्षोस्सूर्यो अजायत, प्राणाद्वायुरजायत, पद्भ्यां भूमिः" इत्यादिना वाक्येन द्युादिजनकशीर्षादिमानभिहितः, तद्विधमेवात्र वैश्वानरं चाधीयते छन्दोगाः "मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा पृथिव्येव पादौ" इत्यादिना वाक्येन" इत्युक्तत्वेन तत्र शब्दतः साम्याभवेऽपि अर्थतस्समानत्वात् समाख्यात्वं युक्तमित्यर्थः । द्वितीयेति । "परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति" इत्यनेन विश्वकर्मसूक्तोक्तेन

परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव ।

इति समाख्यानाच्च विष्णुरेव विश्वकर्मसूक्तोक्त इत्याद्यसूत्रे भाष्यादौ उक्तत्वेन शब्दत एव तत्र साम्यस्य सत्त्वादित्यर्थः । "समाख्यायाः स्थानान्तरगतायाः सादृश्यमात्रेणार्थानुमापकत्वात् ततोऽपि दुर्बलत्वम्" इति वाक्यं व्यनक्ति—अस्या इति ।

चन्द्रिका

लिङ्गत्वात् स्थानाद्दुर्बलता । यथा "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति श्रुत्या ब्रह्मपरानेकप्रकरणसन्दर्भरूपभृगुवल्लीस्थानात् "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तां" इति कोशपरसमाख्यायाः ।

प्रकाशः

**यथेति** । आनन्दमयाधिकरणे ब्रह्मवल्ल्युक्तान्नमयादयः भृगुवल्लीसमाख्यानात् ब्रह्मरूपाणीत्युक्तौ भृगुवल्ल्युक्तस्यान्नप्राणादेः नामैकदेशग्रहणन्यायेनान्नमयाद्यभेदे सिद्धेऽपि, ब्रह्मत्वं कुतः, नारायणोपनिषदुक्तसमाख्यया कोशत्वमेव किं न स्यादित्याशङ्कायां, समाख्या यावत् तदुक्तमेव भृगुवल्ल्यामपि ध्येयं तत्सदृशत्वादिति बुद्धिं जनयति, ततः प्रागेव स्थानं एतद्ब्रह्मपरमिति जानतो झटित्यन्नादेः ब्रह्मत्वं गमयतीति स्थानात्तस्या विप्रकर्षात् दौर्बल्यमित्यर्थः । भृगुवल्ल्याः ब्रह्मपरत्वं कुत इत्यत उक्तं—**सैषेति** । श्रुत्यैव परमे व्योम्नि ब्रह्मणीयं विद्या प्रतिष्ठितेत्युक्तत्वादित्यर्थः । एतेन ब्रह्मवल्लीस्थानादिति वक्तव्ये भृगुवल्लीस्थानादित्युक्तिः किमर्था, तत्रान्नमयादेः स्पष्टमुक्तेः, सुधायां तत्रैव "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्" इति श्रुत्यन्तरानुगुण्यं स्यादित्युक्तेरिति चोद्यं निरस्तं, अस्येव तस्य ब्रह्मणि विनियोजकवाक्याभावेन ब्रह्मपरत्वस्यास्पष्टत्वादिति ॥

केचित्तु ब्रह्मवल्ल्युक्तान्नमयादयः भृगुवल्लीस्थानात् ब्रह्मपरा उत

चन्द्रिका

अत्र च श्रुतिः स्वनिर्णये श्रुतित्वेनैव निर्णायिका । वाक्यादि त्वनुमानत्वेन । अत एव

"वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा ।

इत्यनुव्याख्याने, "समाख्यावाक्यप्रकरणस्थानानि चोपपत्तिविशेषाः" इति प्रमाणलक्षणे च वाक्यादीनामेव लिङ्गतोक्ता, न तु श्रुतेः । लिङ्गस्य त्वनुमानत्वमविप्रतिपन्नमिति न लिङ्गं तत्रोक्तम् । तत्र श्रुति-लिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वम्, यथाऽत्रैव सर्वदेवोपास्यरूपविप्रतिपन्नार्थनिष्ठवामनश्रुतेः, यथा च विप्रतिपन्नाकाशनिष्ठस्यानन्तत्वादिलिङ्गस्य, यथा च विप्रतिपन्नान्त

प्रकाशः

कोशसमाख्यानात्कोशपरा वेति सन्देहे समाख्यातः प्रबलाद्भृगुवल्लीस्था-नात् ब्रह्मपरा इत्यर्थ इत्याहुः । तच्चिन्त्यं, स्थानस्य स्वान्तर्गतवाक्यार्थ-निर्णायकत्वेन स्थानान्तरगतानिर्णायकत्वात् । अत एव प्राक् 'स्वा-न्तर्गत' इत्युक्तम् । अन्यथा स्थानद्वयानुसन्धानविलम्बाविशेषात् समाख्यातः प्राबल्यहानिः स्यात् । स्थानान्तरस्थनिर्णये बीजाभा-वाच्चेति । "श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्या-दित्वेनैव ज्ञापकत्वम्" इत्यादिटीकां विवरिष्यन् श्रुत्यादेर्वैलक्षण्य माह—**अत्र चेति** । **तत्रोक्तमिति** । अनुव्याख्यानादौ उक्तमित्यर्थः । इदानीं टीकां विवृणोति—**तत्रेति** । क्रमेण त्रयाणामुदाहरणमाह—**यथेति** । 'श्रुतेः' इत्यादेर्ज्ञापकत्वमिति योज्यम् ।

चन्द्रिका

र्यामिनिष्ठस्य "यं पृथवी न वेद" इत्यादिवाक्यस्य । श्रुत्यादेर्वि-प्रतिपन्नार्थनिष्ठत्वं विनोपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वं, यथा "वैश्वानरः" इत्यत्र "को न आत्मा किं ब्रह्म" इत्युपक्रमस्थब्रह्मश्रुत्यादेः, यथा च "प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः" इत्यत्र "इति तु पञ्चम्यामाहुतावापः पुरुष-वचसो भवन्ति" इति उपसंहारस्थाच्छ्रुत्यादेः ।

प्रकाशः

**इत्यादिवाक्यस्येति**। एतच्च, व्याप्यार्पकं पदं लिङ्गं, तदर्पकानि निरा-काङ्क्षाणि पदानि वाक्यमिति पक्षे । तेन तत्र टीकादौ लिङ्गत्वोक्तिविरोधो न शङ्क्यः, प्रागुक्तसमाधानादिति ध्येयम् । "उपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वम्" इति टीकावाक्यं सोदाहरणं व्यनक्ति—**श्रुत्यादेरिति** । उपक्रमनिश्चायकमुदाहरति—**यथेति** । "तथा दृष्ट्युपदेशादसंभवात्पुरुषविधमपि चैनमधीयते" इति गुण-सूत्रे "—"को न आत्मा किं ब्रह्म" इत्यारम्भाच्चान्येषामस म्भवात् विष्णुरेव वैश्वानरः" इति भाष्यादौ असम्भवशब्दव्या ख्यायां तथोक्तत्वादिति भावः । उपसंहारनिश्चायकमुदाहरति—**यथा चेति** । वैराग्यपादे पञ्चमेऽधिकरणे, भूतानि किं जीवेन सह गच्छन्ति न वेति सन्देहे, वाजसनेयेऽष्टमेऽध्याये "तस्मिन्नेत स्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इत्युक्त्वा तस्य श्रद्धयेष्टवतः श्रद्धा-सहितस्यैव द्युलोके प्रथमाग्नौ होमश्रवणात् भूतानामपि सह गतौ

चन्द्रिका

साक्षाद्विप्रतिपन्नार्थनिष्ठत्वं विनोपक्रमापसंहाराभ्यामन्यत्र श्रुतत्वे तु प्रकरणनिश्चायकतया, लिङ्गत्वम्, यथा "प्राणस्तथा" इत्यत्र "ब्रह्मेमं पुरुषं" इति ब्रह्मश्रुत्यादेः। उपक्रमोपसंहारावपि श्रुत्यादिनाऽर्थे निर्णीते तात्पर्यातिशयलिङ्गे, यथा "अता चराचर" इत्यत्रात्तुर्ब्रह्मत्वे सर्वात्तृत्वादिना निर्णीते "नैवेह किञ्चनाग्र असीत्" इत्युपक्रमः, यथा च "सर्वत्र प्रसिद्ध" इत्यत्र सर्वगतस्य ब्रह्मत्वे ब्रह्मशब्दादिना निर्णीते "स योऽतोऽश्रुतः" इत्याद्युपसंहारः।

प्रकाशः

तथोक्तिप्रसङ्गान्न सह गच्छन्तीति प्राप्ते, उपसंहारे "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यपां जीवेन सह गतिश्रवणात् तदनुसारेणोपक्रमे श्रद्धाशब्दस्याजहल्लक्षणया श्रद्धयाऽद्भिश्च युक्तो जीवोऽर्थ इति कल्पनोपपत्तेः सह गच्छन्तीति सिद्धान्तितमिति। तत्रोपसंहारस्याप्परत्वमप्श्रुत्या सिद्धमित्यर्थः। "अन्यत्र चेत् प्रकरणनिश्चायकत्वेन" इति टीकावाक्यं व्यनक्ति—**साक्षादिति**। **यथेति**। अत एव तत्र तच्छ्रुतिलिङ्गानामस्मिन् प्रकरणे बहुस्थलेष्वनुगमादित्यवादिष्मेति भावः। "उपक्रमोपसंहारावपि श्रुत्यादिना सत्यामर्थसिद्धौ तात्पर्यलिङ्गे, अन्यथा प्रकरणनिश्चायकौ" इति टीकां विवृणोति—**उपक्रमेति**। क्रमेण द्वयमप्युदाहरति—**यथेति**। व्यक्तमेतत्तत्रैव "प्रकरणाच्च" इति गुणसूत्रे। **यथा चेति**। व्यक्तमेतत् "विवक्षितगुणोपपत्तेश्च" इति गुणसूत्रे,

चन्द्रिका

अन्यथा तु प्रकरणनिश्चायकौ, यथा द्युभ्वाद्यधिकरणे "प्रकरणात्" इत्यत्र "द्वे विद्ये वेदितव्ये" इति परमेश्वरोपक्रमः "अन्यमीशं" इत्यत्रापि तस्यैव प्रकृतत्वनिश्चायकः, यथा चानुमानिकाधिकरणे "प्रकरणात्" इत्यत्र "तद्विष्णोः परमं पदम्" इत्युपसंहारः "अनाद्यनन्तं महतः परं" इत्यादेः विष्णुप्रकरणत्वनिश्चायकः। समाख्याऽपि साक्षाद्वि-प्रतिपन्नार्थनिष्ठा समाख्यात्वेनैव लिङ्गं, यथा "पुरुषविधमपि चैनं" इत्यत्र "शीर्ष्णो द्यौस्समवर्तत, चक्षोस्सूर्यो अजायत" इति पुरु-षसूक्तोक्तिसमानायाः साक्षाद्विप्रतिपन्नवैश्वानरनिष्ठायाः वैश्वानरस्य "मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः" इत्याद्युक्तेः । अन्यथा प्रकरण-निश्चायकत्वेन, यथा "परो दिवा पर एना पृथिव्यैतावती" इत्य-म्भ्रणीसूक्तोक्तिसमानायाः "अजस्य नाभौ" इति विप्रतिपन्नाजे

प्रकाशः

"विवक्षितत्वं वक्ष्यमाणत्वम्" इति स्वयं व्याख्यानात् । द्वयोरपि क्रमेणोदाहरणमाह—**यथा द्युभ्वादीति** । **अन्यमीशमिति**। "भेद-व्यपदेशात्" इति पूर्वसूत्रोदाहरण इत्यर्थः। अत एव तत्र टीकायां "नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते, न परमात्मनः" इति शङ्कानिरासकत्वेन "प्रकरणात्" इति सूत्रमवतारितमिति भावः। **यथा चेति** । वक्ष्यते चैतत्तत्रैव । "समाख्याऽपि साक्षाद्विप्रतिपन्नार्थ-निष्ठा समाख्यात्वेनैव लिङ्गमन्यथा प्रकरणानिश्चायकत्वेन" इति टीकां व्यनक्ति—**समाख्याऽपीति** ।

चन्द्रिका

साक्षादश्रुतायाः "परो दिवा पर एना पृथिव्या परो देवेभिः" इत्याद्युक्तेरिति। मीमांसकोक्तं श्रुत्यादिलक्षणं तद्बलाबलबीजं चान्यत्र निरस्तम् ॥

टीकाक्षरार्थस्तु—**कथनवैयर्थ्यादिति**। अङ्गुष्ठवद्व्यक्तिविशेष-निर्धारणं विना यत्किञ्चिदङ्गुष्ठमात्रत्वेनोपासनाया असम्भवात् कथनं व्यर्थमित्यर्थः। **असम्भवाच्चेति**। पिपीलिकाहृदयस्थे अङ्गुष्ठमात्रत्वसा-मान्यस्यैवासम्भवादित्यर्थः। पूर्वं सौत्रस्तुशब्दो "हृद्यवकाशापेक्षया" इतिभाष्यानुसारादेवार्थो व्याख्यातः। इदानीं "अङ्गुष्ठाभावेऽपि" इति भाष्यानुसारादप्यर्थतया व्याचष्टे—**तुशब्दोऽपिशब्दार्थ इति** ॥

प्रकाशः

**अन्यत्रेति**। तर्कताण्डवे द्वितीयपरिच्छेदान्ते। तथा च न तद्विरोधः शङ्क्यः, तस्य दुष्टत्वादिति भावः ॥

"हृदि" इति गुणसूत्रे टीकायां "अङ्गुष्ठमात्रत्वं किं तत्तदङ्गु-ष्ठमात्रत्वं वा यत्किञ्चिदङ्गुष्ठमात्रत्वं वा। न द्वितीयः, कथनवैय-र्थ्यात्, असम्भवाच्च" इत्युक्तम्। तद्दुर्गमत्वाद्व्यनक्ति—**कथनेति**। "तुशब्दः परिच्छिन्नतयाऽङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवार्थः" इत्यस्य, "तु शब्दोऽपिशब्दार्थ इत्यस्य च विरोधं परिहरति—**पूर्वमिति** ॥

॥ इति वामनाधिकरणम् ॥

## — अथ देवताधिकरणम् —

मनुष्याणामेव वेदविद्याधिकार इत्युक्तम्। तिर्यगाद्यपेक्षयैव

तत्त्वप्रकाशिका

अत्र देवानां ब्रह्मविद्याधिकारसमर्थनादस्ति शास्त्रसङ्गतिः। प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिर्गवेषणीया। श्रुत्यादिसङ्गतिं विषयसंशयतद्बीजानि सूचयति मनुष्याणामिति। "मनुष्याधिकारत्वात्" इति मनुष्याणामेव वेदविद्याधिकार इत्युक्तम्। स च यदि न देवानां स्यात्तदा "विश्वे देवा उपासते" इत्यादिश्रुत्यप्रामाण्यं प्रसज्येत इत्यवश्यं विचार्यः। स वेदविद्याधिकारो विषयः। देवानामस्ति न वेति सन्देहः। "मनुष्याणामेव" इत्युक्तिः "विश्वे देवा उपासते" इति श्रुतिश्च सन्देहबीजमिति भावः। न च श्रुत्युक्त्योरसाम्यादसन्देहबीजत्वम्, उक्तेरप्यङ्गुष्ठमात्रश्रुतिमूलत्वात्। न देवानां वेदविद्याधिकार इति पूर्वः पक्षः। तथा हि—किं देवा अनादिनित्या उत विद्यादिना पदप्राप्तिमुक्तिमन्तः। आद्ये न वेदविद्याधिकारः, अर्थी समर्थो विद्वानधिक्रियत इति न्यायात्, तेषां चार्थित्वाभावात्। न ह्यनादितः प्राप्तपदानां मोक्षशून्यानां च विद्याभिः प्रयोजनमस्ति, येनार्थिता स्यात्। न द्वितीयः, अमराणां मुक्त्याद्यङ्गीकारे कर्मादिविरोधापातात्। अतो देवानां वेदविद्याधिकाराभावान्न तदुपास्यत्वलिङ्गं विष्णोस्सम्भवति। अथ सन्देहबीजं विघटयन् सिद्धान्तयितुं सूत्रमवतारयति—तिर्यगादीति।

मनुष्यत्वविशेषणमुक्तं, न तु देवाद्यपेक्षयेत्याह—

**ओम्—तदुपर्यपि बादरायणस्सम्भवात्—ओम् ॥**

'तदुपरि' मनुष्याणां सतां देवादित्वप्राप्त्युपरि। सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावात्। तिर्यगादीनां तदभावादभावः। तेषामपि यत्र विशिष्टबुद्ध्यादिभावः, तत्राविरोधः,

तत्त्वप्रकाशिका

मनुष्यपदं विशिष्टबुद्ध्यादिरहिततिर्यगादिव्यावृत्त्यर्थं प्रयुक्तं, न तु देवतादिव्यावृत्त्यर्थमित्यभिप्रेत्य, देवानामधिकारमाहाचार्यो बादरायण इत्यर्थः। सूत्रं व्याचष्टे—**तदिति**। देवानामपि वेदविद्याधिकारो विद्यत एव, विशिष्टबुद्ध्यादेरधिकारोपयोगिनो देवेषु विद्यमानत्वेन तेषामधिकारसम्भवात्। न चोक्तप्रकारेण देवानामर्थित्वाभावात्सामर्थ्यविद्वत्तासत्त्वेऽप्यधिकाराभाव इति वाच्यम्, विद्याकर्मभ्यां योग्यमनुष्याणां देवादित्वप्राप्त्यभ्युपगमेन विद्याभिस्तेषां मोक्षसिद्धेरिति भगवान् बादरायणो मन्यत इत्यर्थः। विप्रतिपत्तिसूचनाय बादरायणपदम्। न देवा वेदविद्याधिकारिणोऽमनुष्यत्वात् तिर्यगादिवदित्यत आह—**तिर्यगादीनामिति**। न तिर्यगादीनाममनुष्यत्वप्रयुक्तोऽधिकाराभावोऽपितु विशिष्टबुद्ध्यादिराहित्यनिबन्धन एव। तथा च विशिष्टबुद्ध्यादिराहित्यं व्यावर्तमानं पक्षात्स्वव्याप्यमधिकाराभावं च व्यावर्तयतीति भावः। विशिष्टबुद्ध्यादिमतामपि तिरश्चां न वेदविद्याधिकार इति व्याप्तिविधुरोऽयमुपाधिरित्यत आह—**तेषामिति**।

निषेधाभावात् । दृश्यन्ते हि जरितार्यादयः ॥ २६ ॥

ओम्—विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्—ओम् ॥ २७ ॥

"मनुष्या एव देवादयो भवन्ति" इति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति, तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेत्, न,

तत्त्वप्रकाशिका

अविरोधः 'अधिकाराङ्गीकारेऽपि' इति शेषः । कथं तिरश्चां वेदविद्याधिकाराविरोध इति चेत्, किं निषेधात्तिरश्चामाधिकारायोगोऽदर्शनाद्वा । आद्यं दूषयति—निषेधेति । अनेन निषेधराहित्ये सति विशिष्टबुद्ध्यादिमत्त्वमधिकारे प्रयोजकमिति सूचितं भवति । तेन शूद्रादौ व्यभिचारपरिहारः । द्वितीयं निराह—दृश्यन्ते हीति । 'वेदाधिकरितया' इति शेषः । अनेनैव स्वप्रयुक्तानुमानस्य मनुष्यत्वोपाधिरप्यपोढो भवति ॥ २६ ॥

देवानां वेदविद्याधिकारमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे—विरोध इति । यदुक्तं देवानां वेदविद्याधिकारसिद्ध्यर्थं सादिविनाशित्वं, तदयुक्तम्, तथात्वे तेभ्यः पूर्वं देवताभावेन पूर्वकल्पे प्रयुक्तकर्मण्युद्देश्याभावाद्वैयर्थ्याख्यविरोधापत्तेः । अतः कर्मविरोधपरिहाराय देवानामनादिनित्यत्वमेवाभ्युपेयम् । तथा चार्थित्वाभावेनानाधिकार एवेत्यर्थः । परिहारांशं व्याचष्टे—नेति ।

अनेकेषां देवतापदप्राप्तेर्दर्शनात्,

ते ह नाकं महिमानस्सचन्ते यत्र पूर्वे साध्याःसन्ति देवाः।

इति ॥ २७ ॥

**ओम्–शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्–ओम् ॥ २८ ॥**

"वाचा विरूप नित्यया" इत्यादिश्रुतेराप्यनिश्चायानित्यत्वापेक्षत्वाच्च, मूलप्रमाणस्य स्वतः प्रामाण्यसिद्धेश्च, नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वात्पुनरन्यभावानियमाभावाच्च

तत्त्वप्रकाशिका

भवेदयं विरोधो यदि पूर्वं देवताभावः। न चासावस्ति, एतद्देवानां पूर्वमभावेऽपि देवान्तरसद्भावात्। न च तत्र प्रमाणाभावः, अनेकेषां योग्यमनुष्याणां पूर्वपूर्वं देवतापदप्राप्तेः श्रुत्युक्तत्वादित्यर्थः। 'देवाः' देवत्वयोग्या मनुष्याः, 'यज्ञेन' ज्ञानकर्मात्मकेन, 'यज्ञं' भगवन्तं अयजन्त। ततस्ते ज्ञानपूर्वकर्मणा स्वपदं प्राप्य मुख्यलोकधारका आसन्। ते पुनर्महात्मानो देवाः स्वाधिकारावसाने पूर्णसुखात्मकं मोक्षं प्राप्नुवन्। 'यत्र' मोक्षे पूर्वकल्पे मुक्ताः साध्या देवाः सन्तीति मन्त्रार्थः ॥ १७ ॥

पुनरुक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं विवृणोति—

शब्द इति। अत्रापि विरोधपदाकर्षणम्। यद्देवानामाधिकारासिद्ध्यर्थमाद्यन्तवत्त्वमुक्तम्, न तद्युक्तम्, देवानामाद्यन्तवत्त्वे वेदाप्रा-

तत्त्वप्रकाशिका

माण्याख्यविरोधापातात्, वेदस्य नित्यत्वादनित्यदेवानां तद्वाच्यत्वात्, वाच्यहीनाया वाचः प्रामाण्यासम्भवात्, यावता तदेव वाक्यस्या प्रामाण्यम् । वेदस्य नित्यत्वमेव कुत इति चेत्, "वाचा विरूप नित्यया" इत्यादिश्रुतेः । न च वाच्यमनित्य एव वेदो नित्य इत्युपचारमात्रमिति, वेदानित्यत्वे प्रामाण्याभावापत्तेः । आप्तिमूलत्वेन प्रामाण्यमिति चेन्न, कर्तृसार्वज्ञ्याद्यौ मानाभावेनाप्तत्वनिश्चयात् । विवादपदं कस्य चित्प्रत्यक्षं प्रमेयत्वादिति सार्वज्ञ्ये मानमिति चेन्न, प्रमेयत्वेन विप्रतिपन्नधर्मान्तरसाधनापातात् । किञ्चेदं प्रमेयत्वं न तावत्सामान्यम्, केवलान्वयिधर्मत्वात् । उपाधित्वेऽपि क्वचिदन्तर्भावस्यापेक्षितत्वात् । न तावद्द्रव्यम्, निर्गुणत्वादस्वतन्त्रत्वाच्च । नापिगुणकर्मणी, गुणादवपि वृत्तेः । न च समवायः, असंबन्धत्वात् । न च विशेषः, अनित्येऽपि वृत्तेः । न चाभावः, अप्रातियोगिसापेक्षत्वात् । प्रमेयस्य भाव एव प्रमेयत्वं, न तु ततोऽतिरिक्तमिति चेत्, सत्यं, भावभवित्रोर्भेदे पुनरुक्तानतिवृत्तेः । भावस्य भवितुः पृथगभावे तच्छब्दयोः पर्यायत्वापातात् । एवं परत्वापरत्वादिगुणानां च दत्तजलाञ्जलिता स्यात् । प्रमा तद्विषय तत्संबन्धेष्वन्तर्भावोऽस्तीति चेन्न, प्रमाप्रमेययोः संबन्धस्यैव दुर्निरूपत्वात् । न ह्यात्मगुणस्यान्येन समवायः संयोगो वा सम्भवति । विषयविषयिभाव इति चेन्न, तस्याप्यन्तर्भाव्यत्वात्, अन्तर्भावस्य चोक्तदोषलङ्घनाजङ्घालत्वात् ।

तत्त्वप्रकाशिका

एषैव दिगन्यसमये धर्मान्तरेऽपीति । प्रमेयत्वानिर्वचनान्न तेन सार्वज्ञ्यसिद्धिः ॥ विप्रतिपन्नं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन जगत्कर्तरि सिद्धे तस्य सार्वज्ञ्यादिसिद्धिरिति चेन्न, शरीरिजन्यत्वोपाधेः । शरीर्यजन्यत्वेन सत्प्रतिपक्षत्वाच्च । शरीरिविशेषणं व्यर्थमिति चेन्न, उपाधौ पक्षव्यावृत्त्यर्थत्वात् । प्रतिपक्षेऽसिद्धिपरिहारार्थत्वात् । पक्षव्यावृत्त्यर्थविशेषणवतोऽप्युपाधित्वे पक्षेतरत्वस्याप्यापद्यते तदिति चेत्का नो हानिः । पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेत्, अनुमानोपजीव्येन बाधाद्व्याप्तौ स्वयं दुष्टत्वात् । न चासिद्धिपरिहारार्थं विशेषणासम्भव इति राज्ञामाज्ञाऽस्ति, तथात्वे व्यभिचारानिवृत्त्यर्थमपि न प्रयोक्तव्यम्, व्याप्तिवत्पक्षधर्मताया आवश्यकत्वात् । सकर्तृकत्वे कार्यत्वमेव प्रयोजकं, शरीरमपि तत्र सन्निहितमित्युत्तरत्र निरासिष्यते । अस्तु वा सकर्तृकत्वं, कथं सार्वज्ञ्यसिद्धिः, बहुकर्तृकत्वेनाप्युपपत्तेः । लाघवादेकाङ्गीकार इति चेन्न, बह्वङ्गीकारस्य लोकानुकूल्येनागौरवात् । अतो न सार्वज्ञ्यसिद्धिः । अविप्रलम्भादि चातिदुरवगमम् । अस्तु वा आप्तिनिश्चयः, तन्मूलत्वं कुतो वेदस्य । वेदस्सार्वज्ञ्यादिमता प्रणीतो वेदत्वादिति व्यतिरेक्यनुमानादिति चेन्न, वेदत्वस्य पामरप्रणीतत्वादौ साम्यात् । असाधारण्यस्यापि साम्यात् । वेद आप्तप्रणीतः प्रमाणवाक्यत्वादिति चेन्न, वेदानित्यत्वे प्रामाण्यविवादात् । "तस्माद्यज्ञात्" इति

तत्त्वप्रकाशिका

सर्वज्ञेश्वरप्रणीतत्वं श्रूयत इति चेन्न, उक्तदोषात् । "ऋग्वेद एवाग्नेरजायत" इत्यसर्वज्ञप्रणीतत्वोक्तेश्च । सम्प्रदायप्रवर्तकतया तद्वाक्यमुपचरितमिति चेन्न, कारणाभावात् । ईश्वरविरचितत्ववाक्यादिति चेन्न, तद्वाक्यादस्य सम्प्रदायप्रवर्तकत्वाद्यर्थोपपत्तेः । तेषामसार्वज्ञ्यादेतदिति चेन्न, चक्रकापातात् । तस्मादाप्तितन्मूलत्वानिश्चयाद्वेदानित्यत्वे तत्प्रामाण्याभावापत्तेर्न नित्यत्वश्रुतेरुपचरितार्थत्वं वाच्यम् ॥ किञ्च वेदस्याप्तप्रणीतत्वे मूलप्रमाणेन भाव्यम्, पौरुषेयस्य मूलप्रमाणसापेक्षतानियमात् । न च तत्प्रत्यक्षम्, अदृष्टादौ तदप्रवेशात् । न च कस्य चित्प्रत्यक्षं तादृशम्, अत्र प्रमाणाभावात् । नाप्यनुमानम्, तस्य प्रतिपक्षादिदुष्टत्वात्, कथञ्चित्तेनादृष्टसम्भावनेऽपि तद्विशेषासिद्धेः । न हि लशुनगृञ्जनाद्यदनस्य पापहेतुत्वं, यज्ञादेः पुण्यसाधनत्वं वाऽनुमानेन शक्यसाधनम् । अतो वाक्यमेवेति वक्तव्यम् । तदपि न तावत्पौरुषेयम्, मूलान्तरान्वेषणेनानवस्थानात् । अतस्तन्नित्यमेवापेक्षितम् । तथा च किमनया कल्पनया, श्रुतिसिद्धं वेदनित्यत्वमेवाङ्गीक्रियताम् । ननु वेदस्य नित्यत्वेऽपि न प्रामाण्यम्, अप्तोक्तत्वाभावादिति, मैवम्, प्रामाण्यस्य स्वतस्त्वेन गुणानपेक्षणात् । प्रामाण्यं नाम यथार्थज्ञानकरणत्वम् । न च याथार्थ्यं ज्ञानकारणातिरिक्तकारणमपेक्षते, याथार्थ्यं ज्ञानकारणातिरिक्तकारणनिरपेक्षम्, अयथार्थतातिरिक्तत्वे सति ज्ञानधर्मत्वात् ज्ञानत्ववत्, याथार्थ्यं न गुणोत्पन्नं, ज्ञानधर्मत्वादप्रामाण्यवत्

तत्त्वप्रकाशिका

इत्याद्यनुमानात् । न च ज्ञानधर्मत्वेनायथार्थत्वस्यापि स्वतस्त्वं वाच्यम्, दोषाभावे तदभावनियमात् । प्रमा ज्ञानसामग्रीव्यतिरिक्तकारणजन्या, कार्यत्वादिति चेन्न, प्रमाया ज्ञानकारणातिरिक्तकारणजन्यत्वं नाम प्रमात्वस्यैवंविधत्वेन वा, ज्ञानस्य वा, तत्सम्बन्धस्य वा । नाद्यः, अजन्यत्वात् । न द्वितीयः, व्याहतेः । न तृतीयः, तस्य समवायत्वेनाजन्यत्वादेव । प्रमात्वयुक्तज्ञानस्यैवंविधत्वं साध्यत इति चेन्न, तादृशज्ञानस्यापि ज्ञानकारणातिरिक्तकारणजन्यत्वसाधने व्याघातानिस्तारात् । ज्ञानकारणतदतिरिक्तजन्यत्वं साध्यत इति चेन्न, ईशप्रमायां बाधात् । तदरिक्तप्रमापक्षीकारान्नैवमिति चेन्न, तथाऽपि घटादौ व्यभिचारात् । ज्ञानकारणमात्रजन्यत्वाभावस्साध्यत इति चेन्न, ज्ञाने व्यभिचारापरिहारात् । ज्ञानातिरिक्तत्वेन हेतुर्विशेष्यत इति चेन्न, ज्ञानेऽपि कार्यत्वेन तत्साधनसौलभ्यात् । विशिष्टाभावविकल्पेन व्याघातस्य समीकरणात् । प्रमा गुणजन्या, तदन्वयव्यतिरेकित्वादित्येतदपि प्रतिज्ञानिरासेन निरस्तम् । किञ्चेदं गुणान्वयव्यतिरेकित्वमन्यत्रानुपक्षीणं सामान्यं वा । न द्वितीयः, व्यभिचारात् । नाद्यः, दोषनिरासोपक्षीणत्वात् । न चोभयकारणत्वे कल्पकमस्ति । न चैवमप्रमाया अपि स्वतस्त्वम्, तत्र दोषान्वयव्यतिरेकनियमेन दोषाणामुभयकारणत्वकल्पनोपपत्तेः । न चैतत्समं प्रकृतेऽपि, यादृच्छिकायथार्थवाक्यज-

तत्त्वप्रकाशिका

नितप्रमायां व्यभिचारात् । गुणानां दोषनिरसनव्यापारत्वे दोषाभावोऽपि कारणतयाऽऽपन्न इति चेन्न, प्रदीपावरणनिवृत्त्यादीनामपि प्रकाशनादिकारणत्वापत्तेः । दोषाभावस्य कारणत्वे च नास्माकमनिष्टम्, तावता वेदापौरुषेयताऽव्याघातात् । प्रमा गुणजन्या प्रमात्वादिति चेन्न, ईशप्रमायां बाधात् । तदतिरिक्तप्रमाः पक्षीक्रियन्त इति चेन्न, तत्रैव व्यभिचारात् । जन्यप्रमात्वं हेतुरिति चेन्न, प्रमा गुणजन्या न भवति, प्रमात्वादीश्वरप्रमावदिति प्रतिपक्षसाधनात् । न चाजन्यत्वमुपाधिः, घटादौ व्यभिचारात् । अजन्यप्रमात्वमुपाधिरिति चेन्न, व्याप्त्यभावात् । अतः प्रमायाः ज्ञानकारणातिरिक्तकारणनिरपेक्षत्वेन वेदस्य कर्तृगुणनिरपेक्षस्यापि प्रामाण्यसिद्धेः युक्तमेव तन्नित्यत्वम् । तस्यैवं नित्यत्वात्तद्वाच्यदेवानां चानित्यत्वेऽप्रामाण्यमेव स्यात् । न च तद्युक्तम् । अतस्तत्सिद्ध्यर्थं देवानां नित्यत्वमेवाभ्युपेयम् । तथा च न तेषां वेदविद्याधिकारः । न च वाच्यम्, कर्मविरोधाभाववद्द्वयमपि विरोधः परिहर्तव्य इति, अतीतदेवताप्रवाहे प्रमाणसद्भावेनातीतकालीनविरोधस्यैव परिहर्तुं शक्यत्वात् । उत्तरकालेऽन्यदेवताभावनियमे प्रमाणाभावेन विरोधस्य कर्मण्यपि साम्यात् । न च भारतादिवदतीतविषयतया वेदस्य प्रामाण्योपपत्तिः, तस्य देवताह्वानादिरूपस्य वर्तमानाविषयतावश्यम्भावात् । अतो देवानां नानित्यत्वं युक्तमिति न तेषा

शब्दे विरोध इति चेत्, न, "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्"

यथैव नियमः काले सुरादिनियमस्तथा ।
तस्मान्नानीदृशं कापि विश्वमेतद्भविष्यति ॥

इत्यादेरत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात्,

तत्त्वप्रकाशिका

वेदाधिकार इति भावः । परिहारांशं व्याख्याति—नेति । यदुदितं वेदो नित्य इति, तत्सत्यमेव । तथाऽपि न तस्याप्रामाण्यं, तद्वाच्यानां देवतानां स्वरूपनित्यत्वाभावेऽपि प्रवाहरूपेण नित्यत्वात् । न च तत्र प्रमाणाभावः, "सूर्याचन्द्रमसौ" इति श्रुतेरेव । न चेयं श्रुतिरतीतविषयैव देवप्रभवनियमं न प्रमापयतीति वाच्यम्, प्रतिकल्पमपि श्रुत्या यथा विष्णुः पूर्वकल्पे सूर्याचन्द्रमसावकल्पयत्तथाऽस्मिन् कल्पेऽपीति कथने देवानां सर्वकल्पेषु सद्भावसिद्धेः । "यथैव" इति स्पष्टस्मृत्या च देवानां सर्वकल्पेषु प्रभवसिद्धेः । न च वाच्यं, श्रुतावुपचारेणाप्युक्तिस्सम्भवतीति न देवप्रभवनियम इति, अतीतानागतविदां महतां श्रुतिसंवादिनो देवप्रभवनियमग्राहकप्रत्यक्षस्य सत्त्वात् । न च परप्रत्यक्षस्याप्रत्यक्षत्वात्तदनिश्चयः,

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥

यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ॥२८॥

**ओम्—अत एव च नित्यत्वम्—ओम् ॥ २९ ॥**

'अत एव' शब्दस्य नियतत्वादेव च देवप्रवाहनित्यत्वं युक्तम् ॥ २९ ॥

तत्त्वप्रकाशिका

इति तद्वचनान्निश्चयोपपत्तेः। न चायोगिनां श्रुतिप्रत्यक्षयोरवि श्वासेनोक्तानिश्चयः, उपरितनकालो देववान्कालत्वात्संप्रतिपन्नकाल- वदिति श्रुतिसंवाद्यनुमानेन तेषां देवप्रभवानियमसिद्धेरिति भावः। न च वाच्यम्, प्रलयकाले कालत्वहेतोर्व्यभिचारोऽप्रलयकालत्वेहेतोः परं प्रति व्यर्थविशेषणत्वमिति, प्रलयस्य प्रमाणसिद्धत्वात् ॥ २८ ॥

युक्त्यन्तरेण देवप्रवाहानित्यतां साधयत्सूत्रं पठित्वा व्याचष्टे—**अत एवेति**। न देवप्रवाहनित्यत्वासिद्ध्यर्थं युक्त्यन्तरं गवेष- णीयं, किन्तु यत्परेण प्रतिपादितं वेदस्य नित्यत्वं तदन्यथानुपप- त्त्यैव तत्सिद्ध्यति। न हि वाच्यानित्यत्वे वाचो नित्यत्वमुपप- द्यत इति भावः। न चाप्रामाण्येनोपपत्तिः, तदभावादेव। नापि भारतादिवदतीतविषयत्वेन, अनुपपत्तेरुक्तत्वात्। न च तद्वाच्यदेवता स्वरूपस्यैव नित्यत्वेनान्यथोपपत्तिः, "सूर्याचन्द्रमसौ" इत्याद्युत्प- त्तिश्रुतेः, प्रलयश्रुतिबाहुल्याच्च। न च प्रलयश्रुतीनामयथार्थत्वम्, बाधकाभावात्। जातिसङ्केताद्यनुपपत्तेरिति चेन्न, ईश्वरविरचितत्वेनो- पपत्तेः। ब्राह्मणादेव ब्राह्मण इति नियमस्य क्वचिदन्यथात्वोप-

**ओम्—समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च—ओम् ॥ ३० ॥**

अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽवृत्तावप्यविरोधः, "यथा पूर्वं" इति दर्शनात् ।

तत्त्वप्रकाशिका

पञ्चेर्वृश्चिकतण्डुलीयकादिवदिति ॥ २९ ॥

न देवानां प्रवाहनित्यत्वेनापि वेदप्रामाण्योपपत्तिः । तथा हि— किं पूर्वकल्पे मुक्ता एव देवा उत्तरकल्पे पुनरावर्तन्ते, तदन्य एव वा । नाद्यः, मुक्तेरपुनरावृत्तित्वात् । अतस्तदन्य एवेति वाच्यम् । तथा च तेषां नानाविधनामरूपवतां वाचकवेदस्य कथं नाप्रामाण्यम् । तस्य प्रतिकल्पं पाठभेदाभावात्, तद्भावे नित्यत्वव्याघातादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—**समानेति**। सम्भवत्येव देवप्रवाहनित्यत्वेन वेदप्रामाण्यम्, प्राचीनानां प्राप्तमुक्तित्वेन पुनस्स्वपदेष्ववृत्तावपि तदन्येषां प्राचीनसमाननामरूपत्वात्तत्प्रतिपादकैकविधस्यापि वेदस्याप्रामाण्याप्राप्तेः । न च सर्वदेवानां समाननामरूपत्वे प्रमाणाभावः, "यथा पूर्वं" इति श्रुतेः । एतच्छ्रुतेस्तत्स्वरूपकल्पनानियमपरत्वमपि सम्भवतीति नानया तन्निश्चय इति चेत्, स्मृतिसंवादेन निश्चयोपपत्तेरिति भावः । ननु कथं देवप्रवाहनित्यत्वे समाननामरूपत्वे वा नित्यवेदप्रामाण्योपपत्तिः ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ।

इति स्मृतेश्च ॥ ३० ॥

## ओम्-मध्वादिष्वसम्भवादनधिकारं जैमिनिः-ओम्

तत्त्वप्रकाशिका.

तद्वाचित्वेनेति चेन्न, तस्यैवासम्भवात् । न ह्येतावत्कालमयं देवो मयोक्तोऽतः परमेनं वक्ष्यामीत्यपौरुषेयस्य विमृश्य वृत्तिस्सम्भवती-त्याशङ्काऽपि स्मृत्यैव परिहृता, 'स्वयम्भुवा' स्वतन्त्रेण विष्णुना या वेदवागुच्चारिता, तद्वेदगतशब्देभ्यो ब्रह्मादिविबुधानां नामानि निर्ममे, तान् शब्दांस्तेषु सङ्केतितवान्; याश्च तेषां वेदेषूक्ताः दृश्यन्त इति दृष्टयो रूपाणि, तानि च तथैव निर्ममे इति सर्वदेवानां समाननामरूपत्वस्य, अपौरुषेयवेदस्यापि स्वतन्त्रेण भगवता प्रतिकल्पं देवेषु सङ्केतितत्वस्य चोक्तेः । न च प्रलये वेदाप्रामाण्यं शङ्क्यम्, तदाऽतीतविषयत्वस्य भगवन्मात्रविषयत्वस्य चोपपत्तेः ॥ ३० ॥

अतो देवानामाद्यन्तवत्त्वेऽपि विरोधाभावाद्युक्तस्तेषां वेदाविद्याधिकार इति स्थिते, पुनस्तमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे—**मध्वादिष्विति ।** वेदविद्या द्विविधाः, मुक्तिफलार्थास्तदितरफलार्था इति । मोक्षेतरफ-लार्थाश्च द्विविधाः, ब्रह्मकर्मविद्याभेदात् । यथा मधुविद्या, यथा चाग्निष्टोमविद्या । तत्र न तावन्मोक्षेतरफलार्थद्विविधविद्यास्वाधिकारो

**"वसूनामेवैको भूत्वा" इत्यादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥ ३१ ॥**

तत्त्वप्रकाशिका

देवानां युज्यते, तत्रार्थित्वाभावात् । "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति, देवो भूत्वा देवानप्येति, स ऊर्जमुपगच्छति" इत्यादिना मध्वादिविद्यासु वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणात्, देवानां च प्राप्ततत्पदत्वात् । न हि प्राप्तेऽर्थिता सम्भवति । एवं कर्मविद्यास्वपि वस्वादिपदानां फलत्वोक्तेर्नार्थिता सम्भवति । न च द्वितीयाद्यमृतविद्यादिषु वस्वादीनामप्यधिकारस्सम्भवतीति वाच्यम्, तास्वपि रुद्रादिपदस्य फलत्वेन श्रवणात्, तत्र चायोग्यतयाऽर्थिताऽयोगात् । एवं कर्मविद्यास्वपि रुद्रादिपदफलाभिधात्रीषु वस्वादीनामधिकारायोगः । न चास्त्वेवं स्वस्वेतरपदफलाभिधात्रीषु ब्रह्मकर्मविद्यास्वनधिकारः, तथाऽपि मोक्षेतरसामान्यफलाभिधायकविद्यासु स्यादिति वाच्यम्, सामान्यफलानां च "प्रकाशवानास्मिन् लोके भवति" इत्यादीनां तत्फलेऽन्तर्भावात् । "न ह वा एवंविदि किञ्चनानन्नं भवति" इत्यादीनां सर्वायोग्यत्वात् । योग्यैश्च रुद्रादिभिः प्राप्तत्वाच्च । अतो मोक्षेतरफलार्थं विद्याविचारे देवानामर्थित्वाभावान्न तास्वधिकारः । किञ्चैवमाप्ततमो जैमिनिराचार्योऽपि मन्यत इत्यर्थः ॥ ३१ ॥

माऽस्तु मोक्षेतरफलार्थविद्यास्वधिकारो देवानाम्; "सत्यं ज्ञान

## ओम्–ज्योतिषि भावाच्च–ओम् ॥ ३२ ॥

'ज्योतिषि' सर्वज्ञत्वे 'भावाच्च' आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात्, नित्यसिद्धत्वाच्च विद्यानाम् ॥ ३२ ॥

## ओम्–भावं तु बादरायणोऽस्ति हि–ओम् ॥ ३३ ॥

फले विशेषाभावात्प्राप्तपदानामपि देवानां मध्वादिष्वपि

तत्त्वप्रकाशिका

मनन्तं ब्रह्म" इत्यादिमोक्षार्थविद्यासु भविष्यति, अर्थित्वसम्भवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—**ज्योतिषीति**। भावात् 'वस्तूनां' इति शेषः। कथं वस्तूनां ज्ञानेऽन्तर्भाव इत्यतः स्वपदे वर्णयति—**आदित्येति**। अभिप्रायं वक्ति—**नित्येति**। न मोक्षार्थविद्यास्वपि देवानामधिकारस्सम्भवति, तदुक्तोपासनेऽर्थिताभावात्। द्विविधा ह्यर्थिता विद्याविचारे भवति, ज्ञानाय फलाय चेति। तत्र देवानां मोक्षार्थित्वेऽपि न तत्साधने विद्यासाध्ये ज्ञानेऽर्थिताऽस्ति, तेषां सार्वज्ञ्येन सर्वविद्योक्तज्ञानित्वात्। न हि स्वर्गार्थिनोऽपि कृतयज्ञस्य पुनर्यज्ञविद्याविचारेऽर्थिताऽस्तीति भावः। अनेन प्राचीनपक्षे दोषान्तरं चोक्तं भवति। ॥ ३२ ॥

एवं देवैर्मोक्षेतरयोग्यफलानां प्राप्तत्वादयोग्यानां प्राप्तुमशक्यत्वान्मोक्षस्याप्यर्थतो लब्धत्वादर्थित्वाभावेन तेषां कास्वपि विद्यास्वधिकाराभावे जैमिनिमतावलम्बिना समर्थिते, पुनस्तं समर्थयत्सूत्रं पठित्वा व्याचष्टे—**भावमिति**। बादरायणस्तु भगवान् देवानामशेषविद्यासु

अधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः ।

यावत्सेवा परे तत्त्वे तावत्सुखविशेषता ।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥
तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च ॥

इति स्कान्दे । उक्तफलानधिकारमात्रं जैमिनिमतमतो न तन्मत-विरोधः ।

तत्त्वप्रकाशिका

अधिकारभावं मन्यते, मोक्षतदितरफलानां योग्यानां प्राप्तत्वेऽयोग्यानां प्राप्तुमशक्यत्वेऽपि, विद्योक्तोपासनकर्मकरणाभ्यां योग्यस्य ज्ञानमात्रेणासाध्यस्य मोक्षफलेऽतिशयस्य सिद्ध्याऽर्थित्वसम्भवात् । न च विद्यानां नित्यसिद्धत्वात्तद्विचारेऽर्थित्वाभावः, भगवदितरेषां निरुपचरितसार्वज्ञ्याभावाद्विद्याविचारेण ज्ञानविशेषसम्भवादित्यर्थः । ननु तत्तद्विद्योक्तानुष्ठानेन तत्रोक्तादन्यदपि फलं प्रकाविशेषश्च भवतीत्येतत्कुत इत्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिं दर्शयति—**यावदिति**। नन्वस्त्येवमुक्तयुक्तिपराभवः, तथाऽपि देवानामधिकाराभ्युगतावाप्तमजैमिनिमतविरोध इत्यत आह—**उक्तेति** । न देवाधिकाराभ्युपगमे जैमिनिमतविरोधः, तत्तद्विद्यासूक्तफलार्थं प्रागाप्तज्ञानार्थं च जैमिनिना देवाधिकारस्य निरस्तत्वात्सूत्रकारेण च तदुक्तमङ्गीकृत्य प्रयो-

सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यते ॥

इति ब्राह्मे ॥ ३३ ॥

तत्त्वप्रकाशिका

जनान्तराय तस्य समर्थितत्वादित्यर्थः । किमनयोर्मतयोर्विषयवैलक्षण्य-कल्पनेन, विरोध एव किं न स्यादित्यत आह—**सर्वज्ञस्येति** । अतो देवानां सर्वविद्याधिकारित्वात्तदुपास्यत्वं हरेर्युक्तमिति सिद्धम् ॥

चन्द्रिका

## ओम्—तदुपर्यपि बादरायणस्सम्भवात्—ओम्.

यद्यपि तृतीयेऽध्याये "असार्वत्रिकी" इत्यादावधिकाराचिन्ताऽस्ति, तथाऽपि पूर्वाधिकरणस्थमनुष्यग्रहणस्य विशिष्टबुद्ध्यादिहीनं तिर्यगाद्येव व्यावर्त्यं, न तु देवादीत्यनेन रूपेणेयं चिन्ता न तृतीये सङ्गता, किन्त्वत्रैव, यथा पश्वेकत्वादिशेषत्वचिन्ता शेषत्वरूपेण तृतीये सङ्गताऽपि औपादानिकत्वरूपेण चतुर्थ एव

प्रकाशः

ओम्—तदुपर्यपि बादरायणस्सम्भवात्—ओम् ॥ ननु कथमस्याधिकारचिन्तापरस्य समन्वयाध्यायादौ सङ्गतिः । न च "प्रासङ्गित्वान्नाध्यायादिसङ्गतिर्गवेषणीया" इति टीकोक्तेः प्रासङ्गिकीति वाच्यं, तथात्वे ज्ञानपादे "असार्वत्रिकी" इति द्वितीयाधिकरणे **ब्रह्म**ज्ञाने सर्वेषामाधिकारोऽस्ति न वेति सन्देहे, ज्ञानफले मोक्षे सर्वेषामार्थित्वादेरधिकारप्रयोजकस्य सत्त्वेनास्त्यधिकार इति प्राप्तेऽर्थित्वादिमात्रस्याधिकाराप्रयोजकतया विष्णुभक्त्यादिपूर्वाध्ययनादिवत्त्वस्यापि प्रयोजकतया सर्वेषां तथात्वायोगेन न सर्वेषामधिकार इति वक्ष्यमाणत्वेन तत्रैव निवेशप्रसङ्गात्, तथात्वे साक्षात्सङ्गतिसंभवाच्चेत्याशङ्क्य प्रसङ्गकोक्तिपूर्वं अत्रैव निवेशं साधयति—**यद्यपीति । विशिष्टेति** । हिताहितप्राप्तिपरिहारोपायविषयेत्यर्थः । तत्र पूर्वोत्तरमीमांसासिद्धे उदाहरणे आह—**यथेति** । पश्वेकत्वाधिकरणमुक्तं प्राक् छन्दोधिकरणे । यथा गुरुमते चतुर्थे उपादानाख्यप्रमाण-

चन्द्रिका

सङ्गता, यथा च "भोक्त्रापत्तेः" इति मुक्तेशयोर्भेदसमर्थनं फलविचाररूपेण चतुर्थे सङ्गतमपि युक्तिविरोधपरिहाररूपेण द्वितीये सङ्गतं, तद्वत् ।

प्रकाशः

विचारात् औपादानिकस्य पश्वेकत्वादिशेषत्वस्य शेषत्वरूपेण तृतीये सङ्गतस्यापि चतुर्थे सङ्गतिस्तथेत्यर्थः। गुरुमते हि श्रुत्यादिप्रमाणषट्कसिद्धशेषत्वचिन्ता तृतीये, औपादनिकशेषत्वचिन्ता चतुर्थे । विधिव्यापारमुपादानाभिधानं सप्तमं विनियोजकं प्रमाणमिति हि गुरुमतम्। तदुक्तं नयविवेकवरदराजीये "औपादानिकक्रतुशेषत्वचिन्तारूपतयाऽध्याये पेटिकायां च पूर्वत्रोपादानतो विधिकल्पनेवात्रापि तस्य कल्पना युक्तेत्युक्तेरवान्तरसङ्गतिः" इति। यथा चेति । युक्तिपादे "भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" इति पञ्चमेऽधिकरणे विष्णोर्विश्वकर्तृत्वं युक्तं न वेति सन्देहे "परेऽव्यये सर्व एकीभवन्ति" इति श्रुत्या मुक्तावीश्वरस्य जीवैक्योक्त्या संसारेऽप्यैक्यस्याऽऽवश्यकत्वात् जीवाभिन्नस्य विश्वकर्तृत्वायोगात् न युक्तमिति प्राप्ते, 'एकीभवन्ति' इत्यस्य स्थानैक्यादिनोपपत्तौ मुक्तौ जीवैक्यस्यैवासिद्ध्या प्रागपि तदभावेन जीवभिन्नस्य विष्णोर्युक्तं जगत्कर्तृत्वमिति वक्ष्यमाणतया, तस्य यथा जीवाभिन्नत्वादियुक्तिविरोधपरिहाररूपेण सङ्गतिस्तद्वदित्यर्थः । उक्तं च तत्र भाष्ये "फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम्" इति । यदपि तृतीये निवेशे साक्षात्सङ्गतिरिति,

चन्द्रिका

न चेह तृतीयेऽधिकारः प्रतिपाद्यः, येन साक्षादध्यायसङ्गतिला-भादियं चिन्ता तत्र स्यात्, किन्त्वत्र समन्वय इव तत्रापि साध-नमेव प्रतिपाद्यमिति प्रसङ्गादिहैव युक्ता। अवान्तरसङ्गतिस्तु, पूर्वो-क्तस्य मनुष्यपदस्येह व्यावर्त्योक्तेर्वा, सर्वदेवोपास्यत्वस्याऽऽक्षेपेण पूर्वपक्षोत्थापनाद्वा। ननु देवादीनामधिकारोक्तिस्तावन्नास्मदादीनां प्रवृ-त्तावुपयुक्ता। नापि देवादीनां, तैः स्वगतस्य विग्रहादिमत्त्वस्य तत्प्रयुक्तस्य सामर्थ्यादिरूपाधिकारिविशेषणस्य च सिद्धान्तन्याय-निरपेक्षमेव निश्चितत्वात्। तस्मादफलेयं चिन्तेति चेत्, सत्यं, देवादीनां विग्रहाद्यभावादनधिकार इति पूर्वपक्षयतां परेषामयं दोषः।

प्रकाशः

तदपि नेत्याह—**न चेति**। 'इह' इति पूर्वतन्त्रव्युदासाय। अध्या-यपादान्तर्भावं टीकोक्तं प्रासङ्गिकमुपपाद्यानन्तरसङ्गतिमाह—**अवान्तरेति**। आद्या "मनुष्यपदं तिर्यगादिव्यावृत्त्यर्थं प्रयुक्तम्" इति टीकया सूचिता, द्वितीया तु "स च यदि न देवानां स्यात्, तदा 'विश्वे देवा उपासते' इत्यादिश्रुत्यप्रामाण्यं प्रसज्येत" इति टीकयेति भावः। ननु प्रासङ्गिकमपि फले सत्येव चिन्त-नीयम्, अन्यथाऽतिप्रसङ्गात्। इह च फलं नास्तीत्याक्षिपति—**नन्वि-ति**। **नास्मदिति**। तदज्ञानेऽपि स्वगतार्थित्वादिज्ञानेनैव प्रवृत्त्यु-पपत्तेरिति भावः। **निश्चितत्वादिति**। प्रत्यक्षेणैवेति भावः। **परे-षामिति**। एतेन यदुक्तं कल्पतरौ "अधिकारचिन्तेयं यद्यपि न

चन्द्रिका

अस्माकं तु देवादिपदानां नित्यत्वात् तेषां मुमुक्षा न युक्तेति पूर्वपक्षयतां न दोषः, पूर्वपक्षन्यायेन देवानां स्वपदनित्यत्वाशङ्कया मुमुक्षाभावोपपत्तेः। अस्मदादीनां सर्वदेवोपास्यत्वप्रकारेण ब्रह्मज्ञानाभावापाताच्च। "विश्वे देवा उपासते" इति श्रुत्यप्रामाण्यापातस्य टीकायामेवोक्तत्वाच्च। न चाप्रामाण्येन पूर्वपक्षो द्वितीयाध्याय एव युक्त इति वाच्यं, विश्वजिदधिकरणपूर्वपक्षस्याप्रामाण्यपर्यन्तस्यापि षष्ठ इवास्य विचारस्यावान्तरसङ्गतिलाभेन अत्रापि युक्तत्वात् ॥

प्रकाशः

देवादिप्रवृत्त्यर्था, तथाऽपि क्रममुक्तिफलोपास्तिषु भोगद्वारा मोक्षकाममनुष्यप्रवृत्त्यर्था" इति, तन्निरस्तं, उपास्तीनां क्रममुक्तिफलकत्वं नाम देवतापदप्राप्तिद्वारा मुक्तिपर्यन्तत्वम्। तच्च विग्रहादिमच्चेतनरूपदेवतासद्भावसमर्थनमात्रेण सिध्यतीत्यधिकारसद्भावपर्यन्तचिन्तायाः व्यर्थत्वात्। एतेनैव देवतानां सिद्धावन्तरादित्यादिविद्यादिष्वादित्यदेवतान्तर्वर्तित्वेन ब्रह्मोपासनं, न तु ज्योतिर्मण्डलाद्यन्तर्वर्तित्वेनेत्यादिप्रयोजनं परिमलग्रन्थोक्तमपि प्रत्युक्तं ध्येयं, अधिकारपर्यन्तचिन्तायाः कृत्याभावात्। अभिमानिसूत्र एव विग्रहादिमद्देवतायास्सिद्धत्वाच्च। देवादीनां प्रवृत्ता उपयुक्तेयमधिकारचिन्तेति भावेनाह— पूर्वपक्षन्यायेनेति। टीकोक्तपूर्वपक्षफलेऽनुपपत्तिमाशङ्क्य समाधत्ते— न चेति। विश्वजिदिति। उक्तमधिकरणशरीरं प्राग्जिज्ञासाधिकरणे। तस्य पूर्वपक्षे पुरुषार्थभाव्यकत्वानङ्गीकाराद्विध्यानर्थक्येन शास्त्रा-

प्रकाशः

प्रामाण्यमुक्तम्। तथा च तस्याद्याध्याये निवेश्यत्वेऽपि अन्यत्र निवेशस्तथाऽत्रापीत्यर्थः। ननु विश्वजिद्वाक्यं चतुर्थे "चोदनायां फलाश्रुतेः कर्ममात्रं प्रतीयेत न ह्यशब्दं प्रतीयते" इति तृतीयपादीयपञ्चमाधिकरणे विचारितमित्यवादि। तथा च कथं 'षष्ठे' इत्युक्तिः, सत्यं, अनेकोदाहरणसूचनायैवमुक्तिः। तथा हि 'विश्वजित्' इत्युक्त्या तस्य यथा चतुर्थे निवेश इति लभ्यते, 'षष्ठे' इत्युक्त्या स्वर्गकामाधिकरणस्य तादृशस्यापीति लभ्यते। यद्वा—षष्ठगतस्वर्गकामाधिकरणे चतुर्थाध्यायोक्तन्यायसिद्धस्वर्गपदोपेतस्य विश्वजिदादेरप्युदाहरणत्वात्तदभिप्रायेण 'विश्वजित्' इत्युक्तमिति। गुरुपादास्तु—'चतुर्थे' इति वक्तव्ये 'षष्ठे' इति पाठो लेखकदोषमूल इत्याहुः। अवान्तरेति। "पयोव्रतं ब्राह्मणस्य" इत्यस्य फलाश्रवणादपुरुषार्थत्वमिति पूर्वाधिकरणोक्तरीत्या विश्वजिदादीनामपि फलाश्रवणादपुरुषार्थत्वमित्यादिरूपावान्तरसङ्गतिलाभेन फले सत्येव विधेः प्रयोजकत्वं नान्यथेति प्रयोजकत्वौपयिकत्वरूपावान्तरसङ्गतिलाभाद्वा यथा प्रयुक्त्यध्यायादौ निवेशस्तथेहाप्युक्तसङ्गतिलाभेनात्र निवेश इत्यर्थः। उक्तंच तन्त्ररत्ने—

> यथाऽश्रुतफलत्वेन व्रतस्यापुरुषार्थता।
> तथा विश्वजिदादीनां न ह्येष्वपि फलं श्रुतम्॥
> न च क्रत्वर्थता तेषामथ श्रुत्याद्यभावतः।

चन्द्रिका

अत्र देवानां किं ब्रह्मविद्याधिकारो नास्ति उतास्तीति चिन्ता। तदर्थं तेषां किं मोक्षेऽर्थिता नास्ति उतास्तीति। तदर्थं तत्तत्पद-विशिष्टा देवाः किमनादिनित्याः किं वाऽऽद्यन्तवन्त इति। तदर्थं किमाद्यन्तवत्त्वे कर्मशब्दौ विरुध्येते न वेति॥

प्रकाशः

अतो निष्फलता यातेत्येवं प्रकृतसङ्गतिः॥
विधेः प्रयोजकत्वं च फले सत्येव कल्प्यते।
फलं चैतेषु नास्तीति स्पष्टैवाध्यायसङ्गतिः॥

इति॥

विषयसंशयटीकां व्यनक्ति—**अत्रेति**। **मोक्षइति**। विद्या-साध्यतया तत्फलरूपे मोक्ष इत्यर्थः। **अर्थितेति**। अर्थी सम-र्थो विद्वानधिक्रियते इति न्यायेन फलेऽर्थितादेस्तद्धेतुविद्याधि-कारप्रयोजकत्वेनोक्तेरिति भावः। **अनादीति**। स्वपदानामनादिनि-त्यत्वे आत्मनो मोक्षाभावनिश्चयेन तत्रार्थित्वादेरयोगादिति भावः। स्व-रूपेऽविवादात् 'तत्तत्पद' इत्युक्तम्। इयं चिन्ता "तदुपर्यपि" इत्यनेन सूचिता। **कर्मेति**। इन्द्रादिपदप्राप्तेः पूर्वं पश्चाच्चेन्द्रादिदेव-ताभावेन तदुद्देशेन द्रव्यत्यागात्मकयागायोगरूपकर्मविरोधः, अना-देश्शब्दस्य सार्थसम्बन्धायोगरूपशब्दविरोध इत्यर्थः। इयं द्विती-यादिसूत्रत्रयसूचिता। तथा तदर्थमिन्द्रादिदेवव्यक्तयः किमेकैका उता-नेकाः, अनेकत्वेऽपि ताः नानानामरूपाः उत समाननामरूपा

चन्द्रिका

पूर्वपक्षस्तु—देवादीनां न ब्रह्मोपासनाधिकारः । तथा हि—तत्तत्पदविशिष्टा देवाः किमुत्पत्तिविनाशवन्तः किं वाऽनादिनित्याः । नाद्यः, इन्द्रादिपदप्राप्तेः पूर्वं पश्चाच्चेन्द्रादिदेवताभावेन तदुद्देशेन द्रव्यत्यागात्मकयागादिरूपकर्मविरोधात् । न चेन्द्रादिपदोपलक्षित आत्मोद्देश्यः, स च पूर्वं पश्चाच्चास्तीति युक्तं, भविष्यदिन्द्रादिप-

प्रकाशः

इति चिन्ता समानसूत्रसूचिता स्पष्टत्वान्नोक्ता । यदि वक्ष्यमाणदिशा कर्मशब्दौ विरुध्येते, तदा तन्निरासाय ते अनादिनित्या एवोपेया इति तेषां तादृशानां मोक्षे वक्ष्यमाणदिशा अर्थितादेरयोगान्नास्ति ब्रह्मविद्यायामधिकार इति पूर्वपक्षे फलं, यदा तु इन्द्रादिव्यक्तीनामाद्यन्तवत्त्वेऽपि तत्प्रवाहस्यानादिनित्यतया कर्मशब्दविरोधो नास्ति, तदा बाधकाभावेन तेषामाद्यन्तवत्त्वयोगेन नित्यफले मोक्षे अर्थितादेस्सम्भवेनास्ति तद्धेतुब्रह्मविद्यायामधिकार इति सिद्धान्ते फलमिति स्पष्टत्वात्फलफलिभावो नोक्तः ॥

उत्तरोत्तरपूर्वपक्षकोटेः पूर्वपूर्वकोटिहेतुतां व्यञ्जयिष्यन् अन्त्योपान्त्ययोस्तां तावद्व्यञ्जयन्, "तथा हि" इत्यादिटीकां विवृणोति—**तत्तत्पदेति । इन्द्रादीति** । एतेन "अमराणां" इत्यादिटीकार्थ उक्तः । **द्रव्यत्यागात्मकेति** । "यजतिचोदनाद्रव्यदेवताक्रियम्" इति चतुर्थे जैमिनिसूत्रोक्तेः, "यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः" इति नवमे गीताभाष्योक्तेश्चेति भावः । 'आत्मा' चेतनः । इष्टापत्तिमाश-

चन्द्रिका

दानां मनुष्यादिशरीराणामप्युद्देश्यत्वापातात् । ऐन्द्रादियागशेषार्थवादे तन्मन्त्रे च तत्तत्पदतत्तद्विग्रहादिविशिष्टस्यैवेन्द्रादेस्तत्तद्यागादिना प्रीत्याद्युक्तेश्च । न च चतुर्थ्यन्तः शब्द एव देवता, स चानादिनित्य इति वाच्यं, मन्त्रार्थवादेतिहासपुराणादिना विग्रहादिमद्देवतासिद्धेरभिमान्यधिकरणे वक्ष्यमाणत्वात् । शब्दस्याचेतनत्वेन सुतरामनधिकाराच्च । न चेन्द्रादीनामनित्यत्वेऽपि सर्वकर्मसु ब्रह्मैवोद्देश्यमिति युक्तं, मनुष्यादिभिरिन्द्राद्यधिष्ठानस्यैव ब्रह्मण उद्देष्टव्यत्वात् । अन्यथा बहुविप्लवापातात् । नन्वेतदिन्द्रोत्पत्तेः पूर्वमिन्द्रान्तरसत्त्वेन तदुद्देश इति चेत्, मैवं, द्वितीयसूत्राशङ्कितकर्मविरोधोद्धारेऽपि तृतीयसूत्राशङ्कितशब्दविरोधानुद्धारात् । अत एव

प्रकाशः

ङ्क्याह—**ऐन्द्रेति**। "यदनेन हविषाशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधन्तां वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति" इत्याद्यर्थवाद इत्यर्थः । मीमांसकमतमपाकरोति—**न च चतुर्थ्यन्त इति** । **मन्त्रेति** । "वज्रहस्तः पुरन्दरः तेनेन्द्रो वज्रमुदयच्छत्" इत्यादिनेत्यर्थः । एतेन भामत्याद्युक्तजडदेवतापूर्वपक्षः प्रत्यूढः। सिद्धान्तमाशङ्क्याह—**न चेति**। ब्रह्म चानादिनित्यमिति भावः। **बहुविप्लवेति** । साक्षात्तस्यैवोद्देश्यत्वे सर्वस्य वैष्णवत्वेन ऐन्द्राग्नेयादिकर्मव्यवस्था न स्यादित्यर्थः। उक्तदोषपरिहारमाशङ्क्य दोषान्तरमाह—**नन्विति** । **शब्देति** । अनादेः शब्दस्याद्यन्तवदर्थसम्बन्धेऽ-

चन्द्रिका

टीकायां 'कर्मादिविरोधात्' इत्यादिशब्दः। ननु द्वितीयोक्तेन देवता-प्रवाहस्यानादित्वेनैव कर्मविरोधवच्छब्दविरोधोऽप्युद्धृत एव, अनादेः शब्दस्य साद्यर्थसम्बन्धविरोधेऽपि अनाद्यर्थसम्बन्धाविरोधात्। तथा च तृतीये पुनः शब्दविरोधाशङ्का न युक्ता। न च द्वितीये प्रवाहस्यानादित्वमेवोक्तं, न त्वनन्तत्वं, तस्य तृतीये वक्ष्य-माणत्वात्। तथा चानन्तस्य शब्दस्यान्तवदर्थसम्बन्धो विरुद्ध इति शङ्का तृतीये युक्ता। अत एव भाष्ये द्वितीयसूत्रे "तत्पूर्वं देवताभा-

प्रकाशः

प्रामाण्याख्यविरोध इत्यर्थः। "नचवाच्यं कर्मविरोधाभाववद-यमपिपरिहर्तव्य इति" इति टीकां विवरीतुं शब्दविरोधस्य पुनरुत्था-नमाक्षिप्य समाधिमाह—**नन्वित्यादिना द्वेधा विरोधशङ्कासमा-धाने युक्ते इत्यन्तेन**। युक्ततां हतुभेदोपन्यासेना शङ्क्य नि-राह—**न चेति**। 'इति वाच्यं' इत्यन्वयः। तृतीये सूत्रे "अतः प्रभवात्" इत्यंशेनेत्यर्थः। सूत्रार्थस्त्वग्रे स्पष्टः। अस्त्वेवं, ततः किमित्यत आह—**तथा चेति**। द्वितीयसूत्रे इन्द्रादिदेवव्यक्ति-सादित्वप्रयुक्तकर्मविरोधपरिहारेऽपि तेषामनित्यत्वेनोत्तरकाले देवानाम-भावेन नित्यस्य शब्दस्य तत्संबन्धो विरुद्ध इति शङ्का युक्तेत्यर्थः। हेतुभेदज्ञापकमाह—**अत एवेति**। **परिहारेणेति**। अन्यथा शब्दे देवसादित्वप्रयुक्तस्य कर्मणि देवानित्यत्वप्रयुक्तस्य विरोधस्यान्यत्रापरि-हृततयाऽनुद्धृतत्वापातात्, अत्रोद्धारन्यायस्योभयत्र साम्याच्चेति भावः।

चन्द्रिका

वात्" इति, तृतीयसूत्रे तु "देवानामनित्यत्वात्" इत्युक्तमिति वाच्यं, द्वितीयेऽपि सादित्वप्रयुक्तकर्मविरोधवत्तत्प्रयुक्तशब्दविरोधस्यापि, तृतीये सान्तत्वप्रयुक्तशब्दविरोधस्येव तत्प्रयुक्तकर्मविरोधस्यापि परिहारेण द्वितीये कर्मपदस्य तृतीये शब्दपदस्य चा योगादिति चेन्न, उभयत्र उभयविरोधपरिहारेऽपि आद्यसूत्रे मनुष्याणां सतां कर्मादिना देवादित्वमिति "तदुपरि" इत्यनेनोक्ते, तर्हि येन कर्मणा देवादित्वं साध्यं तस्मिन् कर्मण्येव विरोधः, ततः पूर्वं साधनावस्थायां देवताभावादिति शङ्किते कर्मविरोधे द्वितीयसूत्रेण पूर्वपूर्वदेवताप्रवाहस्यानादित्वप्रतिपादकशब्दान्निरस्ते, तर्हि तस्मिन् शब्द एव विरोध इति शङ्कितस्य शब्दविरोधस्य तृतीयेन निरासात्, द्वितीये कर्मशब्दस्य तृतीये शब्दशब्दस्य चोपपत्तेः। एतेनानादित्वश्रुतिवत् "यथैव

प्रकाशः

भाष्यं तूपलक्षणतया कथंचिन्नेयमिति शङ्कितुर्भावः। अत एव "शब्दइति चेत्" इति सूत्रांशविवरणटीकायां "न च वाच्यं कर्मविरोधाभाववदयमपि विरोधः परिहर्तव्य इति, अतीतदेवताप्रवाहे प्रमाणसम्भवेनातीतकालीनविरोधस्यैव परिहर्तुं शक्यत्वात्। उत्तरकाले अन्यदेवताभावनियमे प्रमाणाभावेन विरोधस्य कर्मण्यपि साम्यात्" इत्युक्तमिति हृदयम्। उभयोरुभयत्र परिहारं टीकाभिमतमुक्त्वा, तत्र यत्सूत्रविन्यासायोगः शङ्कितः, तमुद्धरति—**उभयत्रेति। कर्मादिनेति**। विद्ययेत्यादिशब्दार्थः। **शब्दादिति**। "ते ह

चन्द्रिका

नियमः काले" इति भाष्योदाहृतानन्तत्वश्रुतिरपि द्वितीयसूत्रस्थेन "दर्शनात्" इत्यनेन विवक्षितुं शक्येति पुनस्तृतीये सान्तत्वनिमित्ताऽपि शब्दविरोधाशङ्का निर्बीजेति निरस्तं, उक्तरीत्याऽऽकाङ्क्षाक्रमेण द्वितीये अनादित्वस्यैव वक्तव्यत्वेन "दर्शनात्" इत्यनेन तत्रैव शब्दोपन्यासात्। यद्वा—यथा हि कर्माणि प्रवाहेणानाद्यनन्तानि तथा देवता अपि, यथा च तास्स्वरूपेणानित्यास्तथा तान्यपीति देवताप्रवाहस्यानाद्यनन्तत्वेन अतीतानागतकर्मविरोध एव परिहृतः, न तु शब्दविरोधः, वेदरूपस्य शब्दस्य भाष्योक्तरीत्या स्वरूपेणैव नित्यत्वात्, प्रवाहनित्यतायाः पुराणादावपि सत्त्वात्। स्वरूपेण नित्यं चन्द्रादिसूक्तं न प्रतिनियतैकेन्द्रादिपरं, एकस्येन्द्रादेः सदाऽभावात्। इन्द्राद्यन्तरस्यासिद्ध्यापाताच्च।

प्रकाशः

नाकं महिमानस्सचन्त" इत्यादिशब्दादित्यर्थः। **तत्रैवेति**। अनादित्व एवेत्यर्थः। अयं च परिहारः "अतीतदेवता" इत्यादिटीकासूचितः। "अतीतदेवता" इत्यादिटीकारीत्यैकं समाधिमुक्त्वा "ननु कथं देवताप्रवाहनित्यत्वे समाननामरूपत्वे नित्यवेदप्रामाण्योपपत्तिः। तद्वाचित्वेनेति चेन्न, तस्यैवासम्भवात्" इत्यादिटीकोक्तरीत्या पक्षान्तरमाह—**यद्वेति**। सूक्तादिकं किमेकेन्द्रपरं उतानेकेन्द्रपरम्। नाद्य इत्याह—**न प्रतिनियतेति**। **एकस्येति**। "सूर्याचन्द्रमसौ" इत्याद्युत्पत्तिश्रुतिविरोधादिति भावः। द्वितीयमाश-

चन्द्रिका

न च यदा य इन्द्रस्तदा तदुद्देशवत्, यदा य इन्द्रस्तदा तत्परमिति वाच्यं, कालभेदेन सूक्तादेः तात्पर्यभेदायोगादिति कर्माविरोधमङ्गीकृत्यैवं शब्दविरोधशङ्कोदयः। अत एव शङ्कानुसारेण तृतीयसूत्रस्थपरिहारभागस्यायं भावः—इन्द्रादिसूक्तस्येन्द्रादिपदस्थे तात्पर्यम्। पदस्थत्वोपाधिश्च अमात्यत्वादिवदतीतानागतेषु एक एवेति नानेकेषु तात्पर्यापात इति। तस्माद्द्वितीयसूत्रे कर्माविरोधे परिहृतेऽपि तृतीये शब्दविरोधाशङ्कासमाधाने युक्ते। समाहितेऽपि शब्दविरोधे न देवानामानित्यता। तथा हि—न तावत्पौरस्त्यानां पाश्चात्यानां चेन्द्रादीनां नामरूपाभ्यां साम्यं, लोके अमात्यान्तरस्य पूर्वामात्येन नामादिसाम्यनियमादर्शनात्, मानाभावाच्च। "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" इत्यादिवाक्यं तु तामेवसूर्यादिव्यक्तिं पूर्वप्रकारेणाकल्पयदित्येवं सूर्यादिव्यक्तचैक्यपरम्। न चैवं सूर्यादिसृष्टिवाक्यविरोधः, तस्यानित्यसंयोगद्वारा स्वाप्रामाण्यापादक-

प्रकाशः

ङ्क्याह—**न चेति**। टीका तु अभ्युपेत्यवादेन नेयेति भावः। ननु नैवं शङ्का युक्ता, एतत्समाधानस्य भाष्यादावनुपलब्धेरित्यत आह—**अत एवेति**। पञ्चमसूत्रव्यावर्त्यशङ्कामाह—**समाहितेऽपीति**। किं नामरूपादेस्साम्यमुतासाम्यमिति कल्पौ हृदि कृत्वा आद्ये आह—**नेति**। मानमाशङ्क्य "एतच्छ्रुतेस्तत्स्वरूपकल्पनानियमपरत्वमपि सम्भवति" इति टीकां विवृण्वन् तस्यान्यथासिद्धिमाह—**सूर्येति**।

चन्द्रिका

देवतोत्पत्तिपरत्वासम्भवेनान्यपरत्वात् । नाप्यसाम्यं, इन्द्रादिसूक्तस्थानामिन्द्रादिनाम्नां सहस्राक्षत्ववज्रबाहुत्वादिरूपाणां च विरोधात् । तस्मात्तत्तत्पदादिविशिष्टा देवा अनादिनित्या इति द्वितीय एवाङ्गीकार्यः । तथा च न देवानामधिकारः, स्वपदेभ्यो मोक्षस्यातिशयितत्वेऽपि स्वपदानां नित्यत्वेन स्वेषां मोक्षाभावनिश्चयेन तत्रार्थित्वायोगात् । किञ्च न तावत् देवानां सर्वविद्याधिकारः, वसुत्वादिफलकासु मधुविद्यादिषु वस्वादीनामधिकारायोगात् । नापि मोक्षफलकासु,

नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः ।

प्रकाशः

'अन्यपरत्वात्' अभिव्यक्तिपरत्वादित्यर्थः । न ह्यनुपपन्ने तात्पर्यमस्तीति भावः । द्वितीयं निराह—**नापीति** । देवा उत्पत्तिविनाशवन्तः उतानादिनित्या इति विकल्पे आद्यमियता निराकृत्य द्वितीये पर्यवसाययति—**तस्मादिति** । नामादिभेदेन शब्दकर्मविरोधादित्यर्थः । अर्थित्वाभावे तस्य हेतुतां दर्शयति—**स्वपदेति** । मध्वादिसूत्राभिप्रेतपूर्वपक्षटीकां व्यनक्ति—**किञ्चेति** । द्विविधा हि वेदविद्याः—मुक्तिफलकास्तदितरफलका इति । तत्र न क्वाप्यधिकार इत्याह—**न तावदित्यादिना** । "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेव दृष्ट्वा तृप्यति" इत्यादिना मध्वादिविद्यासु वस्वादिपदानां उपासनाप्राप्यफलत्वश्रवणादिति भावः ।

चन्द्रिका

इत्यादिवाक्यैः देवानां ब्रह्मज्ञानित्वात् तज्ज्ञानार्थं विचारेऽनधिकारादिति ॥

सिद्धान्तस्तु—

न देवानामसामर्थ्यं विद्यते तिर्यगादिवत् ।
न चापि प्रतिषेधोऽस्ति शूद्रादेरिव कुत्रचित् ॥
स्वपदानामनित्यत्वान्मुक्तावस्त्यर्थिताऽपि च ।

प्रकाशः

अधिकारप्रयोजकमर्थित्वादिकं देवेषु समर्थयमानः, तत्प्रयोजके देवानामाद्यन्तवत्त्वे परोक्तकर्मविरोधादिबाधकं च परिहरन्, आद्यादिसूत्रभाष्यटीकोक्तं प्रमेयं सङ्गृह्याह—न **देवानामिति** । अयं च "सम्भवात्" इति सूत्रांशभाष्याद्यर्थसङ्ग्रहः । **तिर्यगादिवादिति** । इदानींतनपशुपक्ष्यादेरिवेत्यर्थः । नन्वेतच्छूद्रे व्यभिचारीत्यतः सूत्रांशतात्पर्यं भाष्याद्युक्तमाह—न **चापीति** । 'कुत्र चिदपि' इत्यपेरन्वयः । श्रुतौ स्मृतौ चेत्यर्थः । प्रतिषेधश्चेति चार्थः । **शूद्रादेरिति** । ब्रह्मबन्धुवर्णबाह्यादिरादिपदार्थः । शूद्रादौ निषेधोऽग्रे स्पष्टः । ननु न सामर्थ्यमात्रं प्रयोजकं, मुमुक्षोर्वात्स्यायनादावनधिकारात् । किन्तु यो यज्जन्यफलार्थी स तत्राधिकारीत्यर्थिताऽपि । सा च न नित्यपदानां युक्तेत्युक्तमित्यतः "तदुपरि" इति सूत्रांशभाष्याद्युक्तं हेतूकृत्य, "सम्भवात्" इत्यंशोपात्तमर्थित्वं साधयति—**स्वपदानामिति** । चोऽवधारणे । अनित्यत्वादेवेत्यर्थः । ननूक्तं तथात्वे कर्मा-

चन्द्रिका

प्रवाहानादिनित्याश्च तुल्यरूपादियोगिनः ॥
देवा न तेन देवानामधिकारेऽस्ति बाधकम् ।
श्रूयते चाधिकारोऽपि देवानां श्रुतिषु स्फुटम् ॥

अतीतानागतानां देवानां समाननामरूपत्वं "यथापूर्व" इत्यादि-भाष्योदाहृतश्रुत्यादिसिद्धम् । न च तद्देवताव्यक्त्यैक्यपरं, तत्सृष्टि-

प्रकाशः

दिविरोध इत्यतो "विरोधः कर्मणि" इति सूत्रभाष्याद्युक्तमाह—प्रवाहेति । ननूक्तमत्रैकरूपवेदप्रामाण्यविरोध इत्यतः समानसूत्र-भाष्यटीकोक्तार्थमाह—तुल्येति । "न देवानामधिकारेऽस्ति बाधकम्" इत्युक्त्या सूत्रादिकं देवानामधिकारे बाधकनिरासपरमित्युक्तम् । तेन, देवा वेदविद्याधिकारिणः अनिषिद्धत्वे सति सामर्थ्यादिमत्त्वात् सम्मतवत् इत्यनुमानमुक्तं भवति । तत्र मूलभूतश्रुतिरूपसूत्राद्यभि-प्रेतं प्रमाणं चाह—श्रूयते चेति । श्रुतिष्विति । ताश्चाग्रे व्यक्ताः । ननूक्तं तुल्यरूपादियोगित्वे मानाभाव इति, तत्राह—अतीतेति ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवासौ निर्ममे स महेश्वरः ॥

इति स्मृत्यादिरादिपदार्थः । ननूक्तश्रुतिरन्यथासिद्धेत्यतष्टीकायां "अ-नादिनिधना" इति स्मृत्यैवान्यथासिद्धिनिरासेन युक्त्यनुक्तेः स्वयं युक्त्याऽप्यन्यथासिद्धिं निराह—न चेति । तत्सृष्टीति । "चक्षोः

चन्द्रिका

वाक्यविरोधात् । तासां प्रवाहतोऽनादिनित्यतायाः समाननामरूपतायाश्चाङ्गीकारे सृष्टिवाक्यस्य स्वार्थपरत्वेऽपि नानित्यसंयोगाद्यापातः । अन्यथा "यथापूर्वं" इत्यादेर्व्यक्त्यैक्यपरत्वे सिद्धे देवतानां प्रवाहानादित्वसमाननामरूपत्वयोरभावः, तत्सिद्धौ चानित्यसंयोगापत्त्या सृष्टिवाक्यस्य स्वार्थपरत्वाभावः, तत्सिद्धौ च सृष्टिवाक्यविरोधाभावात् "यथापूर्वं" इत्यादेर्व्यक्त्यैक्यपरत्वासिद्धिरिति चक्रकाश्रयः स्यात् । "एकशतं हवै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास" इत्यादिश्रुतिसिद्धश्च देवनामधिकारः । यद्यपि मधुविद्यादिफलं वसुत्वादिकं ब्रह्मज्ञानं च वस्वादीनामस्ति, तथाऽपि ज्ञाने मोक्षे चातिशयार्थमुपासना युक्तेति ॥

प्रकाशः

सूर्यो अजायत" इत्यादिवाक्यविरोधादित्यर्थः । न च तदन्यपरमिति वाच्यं, बाधकाभावादिति भावेन प्रागुक्तं बाधकमुद्धरति—**तासामिति** । सूर्यादिव्यक्तीनामित्यर्थः । 'श्रूयते च' इत्यर्धं व्यनक्ति—**एकशतमिति** । एतद्वाक्यं छान्दोग्याष्टमाध्यायगतम् । किञ्चेत्यादिनोक्तं "भावन्तु" इति सूत्रभाष्याद्युक्तसमाधानेन निराह—**यद्यपीति** । **अतिशयेति** ।

यावत्सेवा परे तत्त्वे तावत्सुखविशेषता ।

इत्यादेरिति भावः ॥

भाष्याद्युक्तमर्थं सूत्रपदारूढं लेशतो दर्शयन्, सूत्राणां क्रम-

चन्द्रिका

अत्र चाऽऽद्ये सूत्रे न तावद्देवताजीवानां कदाऽप्यनधिकारः, तेषामेव पदप्राप्तेः पूर्वं मनुष्यशरीरत्वदशायामधिकारादिति "तदुपरि" इत्यनेन सूचयित्वा, नापि पदप्राप्त्यनन्तरमनधिकारः, विशि

प्रकाशः

माह—अत्र चाद्य इति । "तदुपर्यपि बादरायणस्सम्भवात्" इत्यत्र तच्छब्देन पूर्वप्रकृतयोग्यमनुष्यत्वं परामृश्यते । तस्मादुपरि तस्योपरीति वा विद्याकर्मभ्यां योग्यमनुष्याणां देवत्वप्राप्त्यनन्तरमपि अधिकारोऽस्तीति विभागविपरिणामाभ्यां पूर्वप्रकृताधिकारपदान्वयः, तेषामप्यधिकारोपयोगिनो विशिष्टबुद्ध्यादेः सम्भवादित्यर्थः । "बादरायणपदं विप्रतिपत्तिसूचनाय" इति टीकोक्तिः । "देवानामधिकारे सन्देहाभावज्ञापनाय" इति तत्त्वप्रदीपोक्तिः । अत्र 'देवानां' इति वक्तव्ये "तदुपरि" इत्युक्तिरयुक्ता, अपिपदं च व्यर्थमित्यत आह—न तावदिति । प्रधानहेतूक्तिपरत्वादाद्यत्वमिति भावः । ननु "तदुपरि" इति कथं, "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इत्यव्ययेन समासनिषेधात् । न चाव्ययशब्देनोपरिशब्दो न ग्राह्यः, वृत्तावनुदाहृतत्वादिति वाच्यं, अग्रहणे ज्ञापकस्य वाच्यत्वात् । तत्रैव मञ्जर्यां '—"व्रजस्योपरि"* इत्यप्युदाहर्तव्यम्' इत्युक्तेश्च । मैवं, तत्र प्रकृतषष्ठीसमासस्यैव निषेधात् । इह च "पञ्चमी भयेन" इत्यत्र योगविभागेन पञ्चमीसमासाश्रयणात् । पञ्चमी च "अत ऊर्ध्वं प्रवक्ष्यामि" इत्या-

---

* "वृक्षस्योपरि" इति बहुपुस्तकपाठः.

चन्द्रिका

ष्टबुद्ध्यादिभावादिति 'सम्भवात्' इत्यनेनोक्तम्। द्वितीये "तदुपरि" इत्यनेनोक्तदेवतापदस्य सादित्वे कर्मविरोधः शब्देन परि-

प्रकाशः

दाविव अवधित्वमात्रविवक्षया युक्ता। अत एव तत्त्वप्रदीपे "मनुष्यत्वादुपरि" इत्युक्तम्। षष्ठीसमासपक्षेऽपि "पूरणगुण" इति सूत्रेऽव्ययशब्देनोपरीत्यस्याग्रहणेन दोषाभावात्। उक्तं च दुर्घटवृत्तौ "सतातव्येन च कृता पूर्वत्रोत्तरत्र च साहचर्यात्कृदन्ताव्ययस्यैव तत्र ग्रहणं, न त्वन्यस्य। तथा च 'तदुपरि' इत्यादिरपि साधुः" इति। काश्चित्तु 'तत्' इति भिन्नं पदं, षष्ठ्यर्थेऽव्ययं वा, अविभक्तिकं वा, लुप्तविभक्तिकं वेत्याह। एतेन 'तत्' ब्रह्मोपासनं 'उपरि' देवादिष्वपि सम्भवतीत्यर्थं वदता केन चिद्रामानुजीयेन षष्ठ्यन्ततच्छब्दस्याव्ययेन समासायोग इत्युक्तं दूषणं निरस्तं ध्येयम्। 'द्वितीये' "विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" इत्यत्र। येन कर्मणा देवपदं प्राप्तं, तस्मिन्नेव पूर्वकल्पे प्रवृत्तकर्मणि पूर्वं देवताभावेन उद्देश्याभावाद्वैयर्थ्याख्यविविरोधापत्तेरिति चेन्न, एतद्देवानां पूर्वमभावेऽप्यनेकेषां योग्यमनुष्याणां देवतापदप्राप्तेः "ते ह नाकं महिमानस्सचन्त" इत्यादौ दर्शनादित्यर्थः। तथा चान्तरङ्गबाधकनिरासात् द्वितीयताऽस्येति भावः। यदत्र केन चिदुक्तं, मनुष्यप्रवाहस्यानादिनित्यत्वे विवादाभावेन शङ्काया अनुत्थानात् दर्शनशब्दस्य स्वार्थे सम्भवति, तद्विषयश्रुतिपरत्वमस्वरसमिति, तन्निरस्तं, देवतापदं प्राप्तानामेव प्रवाहस्यानादि-

चन्द्रिका

द्धतः। तृतीये तस्मिन्नेव शब्दे विरोधो देवताप्रवाहनित्यत्वेनोद्धृतः।

प्रकाशः

त्वोक्त्या मनुष्यप्रवाहानादित्वानुक्तेः। तदुक्तं टीकायां "एतद्देवानां पूर्वमभावेऽपि देवतान्तरसद्भावात्" इति। दर्शनपदं चाग्रे "दर्शनात्स्मृतेश्च" इत्यत्रेव श्रुतौ स्वरसम्। 'दृश्यते हि सौभरिप्रभृतीनां युगपदनेकशरीरप्राप्तिः,

आत्मनो वै शरीराणि बहूनि मनुजेश्वर।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वां महीं चरेत्।

इति भारतवचनात्' इति त्वदुक्तरीत्या ममापि श्रुतौ दर्शनादित्यर्थोपपत्तेश्च। "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" इति तृतीये येन वेदरूपशब्देन देवानामादिमत्त्वेऽपि प्रवाहानादित्वमुपेत्य कर्मविरोधो निरस्तः, तस्मिन्नेव वेदरूपे शब्दे "वाचा विरूप नित्यया" इत्यादिना नित्ये अनित्यदेवार्थसम्बन्धायोगरूपविरोध इति चेन्न, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत"

यथैव नियमः काले सुरादिनियमस्तथा।

इत्यादिरूपात् 'अतः' अस्माच्छब्दरूपप्रमाणाद्देवानां प्रतिकल्पं 'प्रभवात्' प्रभवनियमावगमात्, महतां प्रत्यक्षात्, यथेदानीं तथोपर्यपि देवा भविष्यन्तीति इतरेषामनुमानाच्चेति स्वरूपनित्यत्वाभावेऽपि प्रवाहरूपेण नित्यत्वमुपेत्योद्धृतः। तथा चाकाङ्क्षाक्रमात्क्रम इत्यर्थः। अत्र 'नित्यत्वात्' इति वाच्ये 'प्रभवात्'

चन्द्रिका

तत्र च प्रभवशब्दः प्रभवनियमपर इति भाष्य एवोक्तम्। चतुर्थे देवताप्रवाहनित्यत्वं तद्वाचकवेदनित्यत्वेन साधितम्।

प्रकाशः

इत्युक्तिः देवप्रवाहनित्यत्वद्योतनाय। नन्वत्र 'अतः' इत्युक्तशब्दरूपमानेनैवालं, किं प्रत्यक्षाद्युपन्यासेनेति चेत्, श्रुता उपचारेणाप्युक्तिरिति शङ्कानिरासार्थत्वात्। तर्हि 'शब्दप्रत्यक्षानुमानेभ्यः प्रभवात्' इति सूत्रणीयं, किं विभागेनेति चेन्न, शब्दस्यान्यानपेक्षप्रमाणत्वेन प्रधानत्वेनादौ पृथङ्निर्देशात्। महतां प्रत्यक्षमस्तीति ज्ञानस्य तत्प्रामाण्यज्ञानस्य च शब्दमूलत्वादनुमानस्याऽपि शब्दसंवादित्वेनैव प्रामाण्यात्तयोस्समासेन निर्देश इति। एतेन 'प्रत्यक्षानुमानाभ्यां च' इति स्यादिति निरस्तम्, उत्तरसूत्रे युक्त्यन्तरसमुच्चायकचशब्दोक्तेश्च। एतेनैव, प्रत्यक्षं नोपन्यासार्हं, विप्रतिपत्तेरिति केनचिदुक्तं निरस्तं बोध्यम्। 'चतुर्थे' "अत एव च नित्यत्वम्" इत्यत्र। परोक्तशब्दनित्यत्वादेव वाच्यार्थस्य देवस्य प्रवाहतो नित्यत्वं सिध्यति। न हि वाच्यानित्यत्वे वाचो नित्यत्वं सिध्यतीत्यर्थापत्त्या देवप्रवाहनित्यत्वमत्र साध्यते। पूर्वोक्तश्रुत्या अर्थापत्तेः समुच्चयार्थश्चशब्दः। पूर्वं शब्दात्प्रभवनियमोक्तिरत्र नित्यत्वरूपतद्धर्मात्तदुक्तिरिति योगविभागः। ननु पूर्वत्र प्रभवशब्दस्य प्रभवनियमपरतया निसत्वार्थकस्येहानुवृत्त्या 'अत एव च प्रभवः' इत्यन्वये सत्यत एव च नित्यत्वमित्यर्थस्य लाभात् 'नि-

चन्द्रिका

ननु न वाचकस्य नित्यत्वेन वाच्यनित्यत्वसिद्धिः, शब्दगतशक्तिविषयस्य वाच्यस्य नाशेऽपि शक्तेस्तदाश्रयस्य शब्दस्य चानाशोपपत्तेः। न हि शक्यनाशे शक्तितदाश्रययोर्नाशनियमः, प्रलये वाच्यस्य देवतादेरभावेऽपि वाचकावस्थानाच्च। तदा भारतादिवदतीतविषयत्वे चान्यदाऽपि तथाऽस्त्विति, मैवं, प्रतिकल्पं वेदोक्तकर्माननुष्ठाने प्रतिकल्पं वेदोपदेशधारणादेर्वैयर्थ्यापातात्। अनुष्ठाने च कर्मकालप्रयुक्तानां "इन्द्रागच्छ" इत्यादीनां देवताह्वानाद्यर्थत्वात्तदा तदभावे चाह्वानाद्ययोगात्। प्रतिकल्पं कर्मानुष्ठानकाले च देवतास-

प्रकाशः

त्यत्वं' इत्यवक्तुं शक्यं, मैवं, तस्य पञ्चम्यन्तत्वेनेह प्रथमान्ततयाऽनुवृत्तेर्दुर्बोधत्वात्। प्रभवशब्दस्य नित्यत्वार्थकत्वस्यास्फुटत्वाच्च। 'अत एव च' इत्यस्य प्राक्प्रकृतशब्दनित्यत्वपरामर्शद्योतनाय च 'नित्यत्वं' इति पृथगुपादानाच्चेति। "नापि भारतादिवदतीतविषयत्वेनोपपत्तिः, अनुपपत्तेरुक्तत्वात्" इति टीकां विवृण्वन् अर्थापत्तेरन्यथोपपत्तिमाशङ्क्य समाधत्ते—नन्विति। अर्थापत्तेरनुमानत्वेऽपि तद्विशेषत्वात्पृथगुक्तिः। ननु तद्वाच्यदेवतास्वरूपस्य नित्यत्वेन सर्वमुपपन्नमिति चेन्न, "सूर्याचन्द्रमसौ" इत्याद्युत्पत्तिविरोधात्। "अग्नौ सर्वे देवा विलीयन्ते" इति लयश्रुतिबाहुल्याच्च। 'न च श्रुतीनामयथार्थत्वं, बाधकाभावात्' इत्या-

चन्द्रिका

त्त्वस्य तत्प्रवाहानादिनित्यत्वं विनाऽयोगादिति दिक् ॥ पञ्चमे धर्मिभूतदेवानित्यत्वहेतुकविरोधाभावेऽपि धर्मभूतरूपादिवैचित्र्यनिमित्तकविरोधशङ्काया उद्धारः। तत्र च "आवृत्तौ" इत्यस्य प्राचीनानां पदस्थानां मुक्तावन्येषां तत्पदप्राप्तिः, पुनस्तेषामपि मुक्तिरित्येवं मुक्तेरावृत्तावपीति वा, प्राचीनानां मुक्तत्वेन स्वस्वपदादावृत्तावपीति वा, स्वस्वपदेष्ववृत्तावपीति वाऽर्थः। एवं "मुक्त्यावृत्तावपि" इति भाष्यमपि त्रेधा व्याख्येयम्। "स्वस्वपदेष्ववृत्तावपि" इति टीकायां तु तत्प्रकारद्वयं स्फुटत्वान्नोक्तम्। षष्ठे मध्वाद्युपासनाविशेषफलस्य

प्रकाशः

दिटीकोक्तं मनसि निधायाह—दिगिति। 'पञ्चमे' "समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च" इत्यत्र। नियतैकपाठस्य वेदस्य नानाविधनामरूपवद्देवतावाचित्वेऽप्रामाण्यमाशङ्क्य प्राचां देवानां प्राप्तमुक्तित्वेन पुनस्तदन्येषां "यथापूर्वं" इति श्रुत्या "अनादिनिधना नित्या" इत्यादिस्मृत्या च प्राचीनसमाननामरूपत्वात्तत्प्रतिपादकैकविधस्याऽपि प्रामाण्योपपत्तिरित्युद्धारः कृत इत्यर्थः। एवञ्चावसरक्रम इति भावः। अपिरत्र, यद्यप्यवृत्तिस्तथाऽप्यविरोध इति शङ्काद्योतकः। टीकोक्तमुपलक्षणमिति भावेनाह—तत्र चेति। आद्योऽर्थः स्वयमुत्प्रेक्षितः। द्वितीयस्तत्त्वप्रदीपोक्तः। तृतीयस्तु तत्र टीकायां चोक्त इति ध्येयम्। 'षष्ठे' "मध्वादिष्वसम्भवादनधिकारं जैमिनिः" इत्यत्र। "वसूनामेवैको

चन्द्रिका

वसुत्वादेर्वस्वादिभिः प्राप्तत्वान्न तेषां तत्राधिकार इति शङ्का। सप्तमे तु उपासनामात्रफलस्य ज्ञानस्य सर्वैरपि देवैः प्राप्तत्वान्न तेषां तत्राधिकार इति शङ्का। तत्र च, ज्योतिश्शब्दो ज्ञानपरः, ज्ञानस्य चाश्रयापेक्षायां 'तदुपरि' इति प्रस्तुतदेवतान्वयः, 'ज्योतिषि' इति सप्तमी च 'चैत्रस्य बुद्धौ शास्त्रार्थः' इतिवत्। तथा च देवताज्ञाने सर्वस्य भावादिति सूत्राक्षरार्थः। अष्टमे तु तदुद्धार इति सूत्रक्रमः॥

यत्तूक्तमुभाभ्यां—मन्त्रार्थवादादेरनुष्ठेयप्रकाशनस्तुत्यादिपरत्वेन देव-

प्रकाशः

भूत्वा" इत्यादिना मध्वादिविद्यासु वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणाद्देवानां च प्राप्ततत्पदत्वेनार्थित्वासम्भवात्तत्रानधिकारं जैमिनिर्मन्यत इत्युक्तेः। 'सप्तमे' "ज्योतिषि भावाच्च" इत्यत्र। 'ज्योतिषि' सर्वज्ञत्वे सर्ववस्तूनां भावादन्तर्भावाद्देवानां सर्वज्ञतया सर्वविद्याज्ञानितया मोक्षहेतुज्ञानार्थमपि न तत्राधिकार इत्युक्तत्वाच्छङ्काद्वयं सूत्रद्वये कृतमित्यर्थः। विवक्षितार्थलाभप्रकारमाह—तत्र चेति। 'अष्टमे' "भावं तु बादरायणोऽस्ति हि" इत्यत्र। सर्वविद्यासु देवानामधिकारभावं बादरायणो मन्यते, अस्ति ह्यतिशयः, इत्युक्ततया ज्ञाने मोक्षे चातिशयाधायकतयाऽनधिकारशङ्काद्वयोद्धारः कृत इत्यर्थः॥

मन्त्रेति। मन्त्रस्यानुष्ठेयद्रव्यदेवताप्रकाशनपरत्वेनार्थवादस्यानुष्ठेयस्तुतिपरत्वेनाऽऽदिपदोक्तस्य विधेर्विधेयार्थविधानपरत्वेन देवतावि-

चन्द्रिका

तानां विग्रहादिराहित्येन अर्थावच्छिन्नशब्दरूपतया शब्दावच्छिन्नार्थरूपतया वा जडत्वेनासामर्थ्यादनधिकार इति प्राप्ते, मन्त्रादिभिस्तासां विग्रहादिमच्चेतनत्वादस्त्यधिकार इति आद्यसूत्रेण सिद्धान्त इति, तन्न, पूर्वसूत्रस्थमनुष्यपदेनेह तत्सजातीयचेतनान्तर एवानधिकारशङ्कोदयेनाचेतनानधिकारपूर्वपक्षस्यासङ्गतेः । अस्मद्रीत्या "अभिमानि" इति सूत्रोक्तन्यायेन मन्त्रादेस्स्वार्थपरत्वेन विग्रहाद्यङ्गीकारेण पूर्वपक्षसंभवे तदनङ्गीकारेण तस्य जघन्यत्वाच्च । किञ्च पूर्वपक्षे स्वार्थे मन्त्रादेरप्रामाण्येऽपि उपनिषदामपि स्वार्थे प्रामाण्यं नास्ति चेद्ब्रह्मैव च न सिध्येत् । अस्ति चेत्, "ता एता देवताः सृष्टा अस्मि

प्रकाशः

ग्रहादौ तात्पर्याभावादतात्पर्यविषयस्यासिद्धेरित्यर्थः । देवताभावे यागासिद्धिरित्यतो भामत्युक्तमाह—**अर्थेति** । चतुर्थ्यन्तशब्दप्रतीतःमात्रश्शब्दावाच्छिन्नः तादृगर्थनियमितः शब्दो वा देवतेत्यर्थः । **मन्त्रेति** । "वज्रहस्तः पुरन्दरः, तेनेन्द्रो वज्रमुदयच्छत्" इत्यादिभिरित्यर्थः । न च मन्त्रादीनामन्यपरत्वमुक्तमिति वाच्यं, प्रकाशनस्तुत्यादिपरत्वेऽपि मानान्तराविरुद्धे स्वार्थेऽपि तात्पर्यात् । अन्यथा गुणिनिष्ठगुणाभिधानरूपस्तुत्यादेरनुन्मेषादिति भावः । गत्यन्तराभावादेवमाश्रीयत इत्यत आह—**अस्मदिति** । 'तस्य' जडानधिकारपूर्वपक्षस्य । असिद्धं च विग्रहादिराहित्यमित्याह—**किञ्चेति** । "ता एताः" इत्यैतरेयवाक्यम् ।

चन्द्रिका

न्महत्यर्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत्ता एनमब्रुवन् ” इति, “तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः” इत्याद्युपनिषद्भिरेव विग्रहादिसिद्धिः। न हि ताः स्रष्टरि प्रमाणं, सृज्ये तु नेति युक्तम्। किञ्च—

देवताविग्रहादिश्चेच्छ्रुतितात्पर्यगोचरः।
बाध्यो न स्यान्न चेन्न स्याद्व्यावहारिकसन्नपि॥
अन्यथा चितिमात्रं च बाध्येतैव कदाचन।
यजमानप्रस्तरत्वमपि स्याद्व्यावहारिकम्॥

समर्थितं चैतत्प्राक्॥

प्रकाशः

“तत एते” इत्यदृश्यत्वनये भाष्योक्तश्रुतिरियम्। **न हीति**। नियामकाभावेन स्रष्टृसृज्यसापेक्षतया तत्राप्रामाण्ये स्रष्टर्यपि तथा स्यादित्यर्थः। एवं मतद्वये पूर्वपक्षं साधारणदोषेण निरस्याद्वैतमते सिद्धान्तोऽप्ययुक्त इत्याह—**किंचेति**। **न स्यादिति**। ‘ब्रह्मवत्’ इति शेषः। न चेत् ‘श्रुतितात्पर्यगोचरः’ इत्यनुषङ्गः। ‘सन्नपि विग्रहादिः’ इत्यन्वयः। यजमानप्रस्तरत्ववदिति भावः। विपक्षे बाधकाभावाद्व्याप्तिहीनौ द्वावपि तर्कावित्यत उभयत्र विपक्षे बाधकमाह—**अन्यथेति**। तात्पर्यगोचरस्यापि बाध्यत्व इत्यर्थः। **यजमानेति**। ‘अन्यथा’ इत्यनुषङ्गः। तात्पर्यगोचरस्यापि व्यावहारिकसत्त्व इत्यर्थः। **प्रागिति**। जिज्ञासाधिकरणे।

चन्द्रिका

यच्चोक्तं परैः, देवतानां देवतान्तराभावेन तदुद्देशेन हविस्त्यागायोगात्, ऋषीणां च भृग्वादीनां भृग्वाद्यन्तराभावेन तद्वरणायोगात् यज्ञादिकर्मसु अनधिकारेऽपि, ब्रह्मविद्यासु सोऽस्तीति, तन्न, देवतानामपि "यज्ञेन यज्ञमयजन्त देवाः" इति, "देवा वै सत्रमासत" इति, "देवा यज्ञमतन्वत" इति,

प्रकाशः

अद्वैत्युक्तमन्यदपि निराह—यच्चेति। पूर्वतन्त्रे हि षष्ठस्याद्यपादे "फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात्" इति द्वितीयेऽधिकरणे देवर्ष्यादीनामधिकारोऽस्ति न वेति विशये, फलार्थित्वादिनाऽधिकारोऽस्तीति प्राप्ते, देवानां देवतान्तराभावेन तदुद्देशेन हविस्त्यागायोगात्, भृगुप्रभुत्यृषीणां भृग्वाद्यन्तराभावेनार्षेयवरणायोगादनधिकारः कर्मणि देवर्ष्यादीनामिति सिद्धान्तितम्। तदुक्तन्यायेन कर्मण्यनधिकारेऽपीत्यर्थः। प्राचां वस्वादिदेवानां भृग्वाद्यृषीणां च क्षीणाधिकारत्वेनेदानीं देवत्वऋषित्वयोरभावादिति भावः। सोऽस्तीति। तथेह बाधकाभावादिति भावः। 'यज्ञं' विष्णुं, "यज्ञो वै विष्णुः" इति श्रुतेः। 'अयजन्त' आराधितवन्तः। एतत्पुरुषसूक्तगतं वाक्यम्। "देवा वै सत्रमासत ऋद्धिपरिमितं यशस्कामाः" इति तैत्तिरीयद्वितीयकाण्डे तृतीयप्रश्नादावारण्यके च वाक्यम्। "देवा यज्ञमतन्वत" इत्यपि पुरुषसूक्तस्थं वाक्यम्।

चन्द्रिका

"देवा वै चतुर्होतृभिर्यज्ञमतन्वत" इति, "यद्विश्वे देवास्समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति, "प्रजापतिर्वा एतेनाग्रेऽयजत" इति, "इन्द्रोऽश्वमेधान् शतमिष्ट्वा" इति, "देवा वै वरुणमयाजयन्" इत्यादिश्रुतिभिः,

ततस्तु देवतास्सर्वा ब्रह्मा चैव महर्षयः ।
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ॥

इत्यादिभारतादिवचनैश्च देवानामपि यज्ञादिसद्भावात् ।

प्रकाशः

"देवा वै चतुर्होतृभिः" इति पराते द्वितीयकाण्डे द्वितीयप्रश्ने वाक्यम् । 'चतुर्होतृभिः' चतुर्होतृनामकैः "अग्निर्होता" इत्यादिमन्त्रैरित्यर्थः । "यद्विश्वेदेवाः" इत्येतदपि पराते प्रथमकाण्डे चतुर्थप्रश्ने वाक्यम् । "प्रजापतिर्वा इति । एतेन "प्रजापतिर्वाव ज्येष्ठः सह्येतेनाग्रेऽयजत" इति सप्तमकाण्डस्थं वाक्यमुपात्तमित्याहुः । अन्ये तु शाखान्तरस्थमिति । "इन्द्रोऽश्वमेधान्" इति तृतीये "श्रुत्यादिबलीयस्त्वाच्च न बाधः" इत्यत्र भाष्योक्तश्रुतिः । "देवा वै" इति पराते द्वितीयकाण्डे द्वितीयप्रश्ने श्रुतम् । अत्र वाक्ये आद्यन्तयोः श्रुतषष्ठ्यन्तपदयोः 'देवतानामपि देवानां' इति विशेषणविशेष्यभावेनान्वयः । 'देवतानामपि' इत्यस्य "साऽस्य देवता" इत्यादाविव सम्प्रदानभूतस्वामिवाचित्वाद्देवतापदस्य यज्ञेष्वाराध्यानामपीत्यर्थः । तेन न पौनरुक्त्यदोषः । 'देवानामपि' इ-

चन्द्रिका

शूद्रवच्च तेषामधिकारनिषेधाभावात् । देवताकर्तृकयज्ञेषु च

यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ।
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ॥

प्रकाशः

त्यपिशब्दो न केवलं मनुष्याणामिति समुच्चयार्थः । अर्थवादानां स्वार्थे तात्पर्यस्य परेषामपि अनुमतत्वात्, अन्यथा देवतातद्विग्रहाद्यसिद्ध्यापत्तेरित्यग्रे वक्ष्याम इति भावः । नन्वबाधे स्वार्थे तात्पर्यमिह च बाधकान्न स्वार्थे तात्पर्यमस्तीति चेत्, तत्किं शूद्रादिवन्निषेधः उत देवतान्तराभावादिरूपः प्रागुक्तः । आद्य आह—**शूद्रेति** ।

नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः ।

इति, "न च वर्णावरस्याप्यधिकारः" इत्यादिवत् न देवानामधिकार इति निषेधस्याश्रवणादिति भावः । द्वितीय आह—**देवतेति** । 'वेदसूत्रे' वेदार्थनिर्णायकसूत्रे । 'वज्रिणं' वज्रिशब्दवाच्यं, मां, वज्रयन्तर्यामिणमिति वा । 'शक्रः' प्रसिद्धेन्द्रः 'यजतां' इति द्वितीयार्थे षष्ठी, यजतः व्यत्ययात् । अथवा—

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।
वयं हनाम द्विषतः ............ ........ ॥

इत्यादाविव 'यजतां' इति लोडात्मनेपदम् * । अत्र विष्णुविषयत्वा-

---

* 'अथवा' इत्यारभ्य एतदन्तग्रन्थः केषुचित्पुस्तकेषु न दृश्यते ।

चन्द्रिका

इति भारते देवादीन् प्रति भगवद्वचनादिभिः अग्नीन्द्रादि-शब्दमुख्यार्थो भगवानेवोद्देश्यः। अत एव "इन्द्रो वा अकामयत ज्यैष्ठ्यं देवानामभिजयेयम्" इति, "स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपत्" इत्याद्याः श्रुतयः। भृग्वादि-वरणं च मनुष्यविषयम्। यद्वाऽनादौ संसारे पूर्वपूर्वभृग्वादिवरण-मुत्तरोत्तरेषां युक्तम्। ननु "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति, "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे

प्रकाशः

प्रतीतेराह—**भगवद्वचनादिभिरिति**। **अत एवेति**। भगवत एवो-द्देश्यत्वादित्यर्थः। 'अभिजयेयं' प्राप्नुयामित्यर्थः। 'इन्द्राय' इन्द्र-शब्दवाच्याय विष्णवे। इयं च श्रुतिः पराते प्रथमकाण्डे प्रथम-प्रश्ने श्रूयते। एवं देवानामधिकारं समर्थ्य ऋषीणामाह—**भृग्विति**। अनेकमानविरोधेन सङ्कोचोऽन्याय्य इति भावः। **पूर्वपूर्वेति**। यदत्रोक्तं भामत्यां—प्राचां भृग्वादीनां क्षीणाधिकारत्वेनेदानीं ऋषि-त्वाभावादिति, तन्न, भृग्वादित्वानपायात्। उक्तं च तन्त्ररत्ने "न च भृग्वादयो भृग्वदिसगोत्रा इति भाष्यमयुक्तं, कुतः, अनादिर्हि का-लोऽस्माकम्। भृगोरपि पूर्वं भृग्वन्तरसम्भवात्, ततः पूर्वमप्येव-मेवेति सम्भवत्येव भृगोर्भार्गवत्वमित्यस्त्येव ऋषीणामधिकारः" इति। 'ऋष्युदाहरणमनादरणीयं' इति शास्त्रदीपिकायामपि ऋष्युदाहरणाना-दरणमुक्तम्। देवानामधिकारे बाधकान्तरमाशङ्क्य निराह—**नन्विति**।

चन्द्रिका

राजन्यं, शरदि वैश्यम्" इति च त्रैवर्णिकानामेवाऽऽधानोपनयने श्रुते इति अत्रैवर्णिकानां देवानां तदभावात् तत्साध्याग्निविद्ययोरभावात् न धर्माधिकार इति चेन्न, "देवा वै भद्रास्सन्तोऽग्निमाधित्सन्त" इत्युपक्रम्य "ते पुनर्वस्वोरादधत" इति, "देवा वै अग्निमादधत" इत्यादौ देवतानामप्याधानादिश्रवणात् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति ब्रह्मणः, "ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं सामवेदमाथर्वणं" इत्यादौ देवर्षीणां नारदादीनां चाध्ययनश्रवणाच्च ।

त्वत्प्रसादेन भगवन् स्वाध्यायतपसोर्मम ।
कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा ॥

इति मोक्षधर्मे चतुर्मुखं प्रति रुद्रवचनाच्च ।

प्रकाशः

**तत्साध्येति** । आधानोपनयनसाध्ययोरग्निविद्ययोरित्यर्थः । 'अग्निः' आहवनीयादिः, 'विद्या' तु अध्ययनसाध्यार्थज्ञानम् । 'आधित्सन्त' आधातुमैच्छन् । "देवा वै भद्रास्सन्तोऽग्निमाधित्सन्त । तेषामनाहितोऽग्निरासीत् । अथैभ्यो वामं वस्वपाक्रामत् । तेन पुनर्वस्वोः" इत्यादिश्रवणात्तैत्तिरीयशाखायामित्यर्थः । तच्छब्दपरामर्शद्योतनाय 'इत्युपक्रम्य' इत्युक्तम् । अध्ययनमप्यस्तीत्याह—**य इति** । 'प्रहिणोति' उपदिशति, 'भगवः' भगवन्, "मतुवसोरुस्सम्बुद्धौ छन्दसि" इति रुः । ननूपनयनससंस्काराभावात्

चन्द्रिका

देवानां त्वन्मते कर्मानधिकारेऽपि वैदिकज्ञानाधिकारवदुपनयनाभावेऽप्यध्ययनोपपत्तेश्च। अध्ययनाभावेऽपि देवानां स्वयंप्रतिभातवेदत्वाच्च। "अथ पुमर्थसाधनान्यर्थौ धर्मो ज्ञानमित्युत्तरोत्तरं, तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्" इत्यादिश्रुतिसिद्धस्य देवानां कर्माधिकारस्यात्रैवर्णिकत्वादिनाऽपलापे तत एव तेषां ब्रह्मविद्यानधिकारापाताच्च। "देवा एव ब्रह्मचारिणः" इति प्रक्रम्य "सर्वे वर्णाः सर्वाश्रमिणः सर्वे ह्येते कर्म कुर्वते" इत्यादिश्रुतेर्देवानाम-

प्रकाशः

नोक्तिरुपचरितार्थेत्यत आह—देवानामिति। "विविदिषन्ति यज्ञेन दानेन तपसा" इत्यादिश्रुत्या, "यज्ञादिश्रुतेरश्ववत्" इति सूत्रेण च कर्मणोऽपि विद्याङ्गत्वादिति भावः। उपनयनसाध्याध्ययनाभावेऽपि विद्यासम्पत्तिमाह—अध्ययनेति। ननु बाधकात् कर्मानधिकारेऽपि "मघवान् प्रजापतौ ब्रह्मचर्यमुवास" इत्यादिश्रुतिसिद्धत्वात् ब्रह्मविद्यायां सोऽङ्गीकार्य इति चेत्, तुल्यं कर्मण्यपि। अन्यथा तत्रापि न स्यादिति श्रुत्युदाहरणपूर्वकमाह—अथ पुमर्थेति। श्रुतीति। ज्ञानपादे "न वा विशेषात्" इत्यत्र भाष्योक्तश्रुतिसिद्धस्येत्यर्थः। 'तत एव' अत्रैवर्णिकत्वादेवेत्यर्थः। तदधिकारस्यापि उपनयनसापेक्षत्वादिति भावः। अत्रैवर्णिकत्वमभ्युपेत्योक्तं, वस्तुतस्तु तदेव नेत्याह—देवा इति। श्रुतेरिति। ज्ञानपादे "मौनवदितरेषामप्युपदेशात्" इति सूत्रे "देवा एव ब्रह्मचा-

चन्द्रिका

त्रैवर्णिकत्वाभावाच्च । "एतया निषादस्थपतिं याजयेत्" इत्यादिवचनादत्रैवर्णिकत्वेनानाहिताग्नीनामपि निषादस्थपत्यादीनां लौकिकाग्नौ वैदिककर्माधिकाराङ्गीकाराच्च ।

प्रकाशः

रिणो देवा एव गृहस्थाः देवा एव वनस्थाः यथैवेते मुनय एवं सर्ववर्णाः" इति भाष्योक्त कौण्ठरव्यश्रुतेरित्यर्थः । एवं देवानां अग्निविद्ये, तत्प्रयोजकत्रैवर्णिकत्वं च प्रसाध्येदानीमग्नेरभावेऽप्यधिकारं न्यायेनोपपादयति—एतयेति । षष्ठस्याद्यपादे "स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्" इत्यन्तिमेऽधिकरणे "वास्तुमयं चरुं निर्वपेत्" इति प्रकृत्य, "एतया निषादस्थपतिं याजयेत्" इति श्रुतम् । तत्र यो द्विजातिरेव निषादानामाधिपत्यं करोति तस्याधिकार उत यो निषाद एव स्थपतिः तस्येति संशये, पक्षद्वयेऽपि शब्दस्य यौगिकत्वात्, षष्ठीसमासाश्रयणे अग्निविद्यावतामेवाधिकारलाभात्, द्विजानामेवाधिकार इति प्राप्ते, षष्ठीसमासाश्रयणे निषादपदस्य तत्सम्बन्धिनि लक्षणापत्तेः कर्मधारये तदभावात् श्रुत्यर्थलाभाय विदुषो निषादस्यैवाधिकार इति सिद्धान्तितम् । तथा च सिद्धेऽधिकारे "स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्" इति अष्टमपादीयतृतीयाधिकरणे "एतया" इति श्रुतस्थपतीष्टिः किमाहवनीयादिषु स्यात् उत लौकिकेऽग्नाविति संशये, प्रकृतित आहवनीयादिप्राप्तेस्तस्य चाधानाधीनत्वात् असत्यपि स्थपतेराधान-

चन्द्रिका

"देवा वै सत्रमासत" इत्याद्यर्थवादानां मानान्तरप्राप्तिविरोधयोरभावेन देवताविग्रहाद्यर्थवादानामिव त्वन्मते स्वार्थे प्रामाण्याच्च। देवानामुपासनाङ्गकर्मानधिकारे उपासनानाधिकारापाताच्च ॥

प्रकाशः

विधाविष्टिरेवेयमाधानं प्रयोजयेदिति प्राप्ते, वसन्तादिवाक्यविहिताधानजन्याग्निगतसंस्कारवाचित्वादाहवनीयादिशब्दस्य स्थपतिकृतेन चाधानेनाविहितेन संस्कारासिद्धेः नाधानाक्षेप इति लौकिकेऽग्नावेवेष्टिस्स्यादित्युक्तम्। तद्वद्देवानामपि स्यादित्यर्थः। ननु विषमोऽयमुपन्यासः, स्थपतेरिष्टिविधिबलेन एतस्य सर्वस्य कल्पनेऽपि प्रकृतेऽपि देवानां विशिष्य कर्मविध्यभावात् प्रागुदाहृतवचनानां चार्थवादत्वेन सत्रादिप्रशंसापरत्वेन स्वार्थे तात्पर्याभावात्। अन्यथा "वायुर्वै क्षेपिष्ठा देवता, अग्निर्हिमस्य भेषजं, को हि तद्वेद यद्यमुष्मिन् लोके अस्ति वा न वेति, आदित्यो यूपो भवति" इत्यादेरपि स्वार्थपरता स्यादित्यत, आह—**देवा वै इति**। मीमांसकमते तथात्वेऽपि न त्वन्मते तथात्वं युक्तं, अन्यथा देवताविग्रहाद्यसिद्ध्या एतदधिकरणसिद्धान्तानुन्मेषः स्यादित्यर्थः। तदुक्तं भामत्यां "मन्त्रादिपदसमन्वयात् प्रतीयमानोऽर्थः प्रमाणान्तराविरोधे सत्यभ्युपेतव्यः न तु विरोधे" इति। **उपासनाङ्गेति**। यद्यपि नित्ये कर्मण्यङ्गानाधिकारेऽपि प्रधानेऽधिकारश्शक्याङ्गोपसंहारेण समर्थितः "सर्वशक्तौ प्रवृत्तिस्स्यात् तथाभूतोपदेशात्" इति षष्ठे तृतीयाद्यनये। तथाऽप्युपासनायाः फलार्थतया

चन्द्रिका

यच्चोक्तमुभाभ्यां—तिर्यगादीनामसामर्थ्यात् कर्मब्रह्मविद्ययोरनधिकार इति, तन्न,

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यत्तच्छृणु नराधिप ॥

इत्यादिना भारते जरितारि-सारिसृक्क-स्तम्बमित्र-द्रोणाख्यानां चतुर्णां पक्षिणां "अयमग्ने जरिता" इत्याग्नेयसूक्तेनाग्निस्तावकत्वोक्तेः । तत्रैव

स्तम्बमित्रस्तपः कुर्यात् द्रोणो ब्रह्मविदुत्तमः ।

इति द्रोणादेः ब्रह्मवित्त्वाद्युक्तेश्च । "ऋषीनस्मान् बालकान् पालयस्व" इति ऋषिशब्देन चतुर्णामपि मन्त्रद्रष्टृत्वोक्तेश्च ।

ऋषिः द्रोण त्वमपि वै ब्रह्मैतद्व्याहृतं त्वया ।

प्रकाशः

विधानेन काम्यत्वाद्वा कर्मणां शक्यत्वेन वा तद्वैषम्यं ध्येयम् । एतेन कर्माङ्गविद्याधानानधिकारिणोऽपि स्थपतेः कर्माधिकारोऽस्तीति प्रत्युक्तम् ।

नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः ।

इति स्थपतेस्तत्राधिकारनिषेधस्येव देवानां कर्माधिकारनिषेधाभावात् ॥

एवं देवादीनामधिकारं समर्थ्य तिरश्चामपि केषाञ्चित्साधयितुं परोक्तमनूद्यापाकरोति—**यच्चेति** ॥ तिरश्चामनधिकारः किमश्रुतत्वात्किं वा शूद्रस्येव निषिद्धत्वाद्विशिष्टबुद्ध्याद्यभावाद्वा । आद्यं प्रत्याह—**एवमुक्तइति** । 'भारते' आदिपर्वणि खाण्डवदाहसमये । 'द्रोणादेः' पक्षिण इत्यर्थः । हे द्रोण त्वमपि ऋषिर्वै, यतस्त्वया 'एतद्ब्रह्म'

चन्द्रिका

इति द्रोणस्य वेदव्याहर्तृत्वोक्तेश्च। "अयमष्टौ द्व्यृचाः शार्ङ्ग-जरिता-द्रोण-सारिसृक्क-स्तम्बमित्राश्च" इत्यनुक्रमणिकायां "अयमग्ने जरिता" इत्यादिसूक्ते द्रोणादीनां पक्षिणां ऋषित्वोक्तेश्च। रामायणादौ हनुमदादीनां वेदविस्त्वाद्युक्तेश्च। शूद्रादिवत्तिर्यगादीनामधिकारनिषेधाभावाच्च। अर्वाचीनानां तिर्यगादीनां अस्मदादिभिरप्यधिकारानङ्गीकाराच्च। अर्वाचीनदृष्टान्तेनेतरेषामप्यसामर्थ्यानुमानेऽतिप्रसङ्गाच्च।

प्रकाशः

वेदरूपं व्याहृतमिति योजना। **हनुमदिति**। तस्य कपित्वेन तिर्यक्त्वमिति भावः। एतेन तृतीयोऽपि निरस्तो बोद्धव्यः। द्वितीयं निरस्यति—**शूद्रेति**। ननु किं तिरश्चामद्यतनानामधिकारोऽथ केषां चिद्विशिष्टानाम्। नाद्यः, बाधात्। नान्त्यः, विमतास्तिर्यञ्चो नाधिकरणः, तिर्यक्त्वादर्वाचीनतिर्यग्वदित्यनुमानविरोधादित्यतो द्वयं क्रमेण निराह—**अर्वाचीनेति**। **अतिप्रसङ्गादिति**। अद्यतनपुरुषेषु सामर्थ्यादर्शनेन देवानामपि विश्वधारणादिसामर्थ्याभावानुमानं स्यात, श्रुत्यादिबाधस्तूभयत्र सम इति भावः। एतेन "तिर्यगाद्यपेक्षया मनुष्यत्वविशेषणमुक्तम्" इति भाष्यादिकं त्वर्वाचीनतिर्यगाद्यपेक्षयेति व्याख्येयमित्युक्तं भवति। एतेन "तेषामपि "अयमग्ने जरिता" इत्यादावधिकारदर्शनात्" इत्युत्तरनयस्थटीकावाक्यं विवृतं ध्येयम्। एवं विद्याधिकारसमर्थनादेव तदङ्गकर्माधिकारोऽपि सिद्ध इति स पृथङ्न समार्थित इति ध्येयम्॥

चन्द्रिका

यच्चोक्तमुभाभ्यां— इन्द्रादीनां विग्रहवत्त्वे ऋत्विगादिवत् सन्निधानेन कर्माङ्गत्वं स्यात् । तच्च विरुद्धं, बहुषु यागेषु युगपदेकस्येन्द्रादेस्सन्निधानायोगादिति चेन्न, एकस्या अपि देवताया अनेकशरीरप्रतिपत्तेरिति द्वितीयार्थ इति, तन्न, देवताया विग्रहवत्त्वेऽपि स्वस्थानस्थिताया एकस्या एव बहुभिरुद्देष्टुं शक्यत्वेन कर्मणि विरोधशङ्कानुदयात् । ब्रह्मविद्याधिकारे हि सामर्थ्याद्यर्थं विग्रहादिकमेवापेक्षितं, न तु ऋत्विगादिवत् सन्निधानमपि । ननु "इन्द्रागच्छ हरिव आगच्छ" इत्यादिनाऽऽह्वानात् सन्निधानासिद्धेर्विरोधशङ्कोदय इति चेत्, यद्याह्वानमागमनार्थं तर्हि सिद्धं विग्रहवत्त्वं, यदि त्वदृष्टार्थं न तर्हि सन्निधानसिद्धिः । एतेन "कस्य वा देवा यज्ञमागच्छन्ति" इति वाक्यात् सन्निधानसिद्धेः शङ्कोदय

प्रकाशः

एवं मतद्वयेऽपि आद्यसूत्राभिप्रेतं सिद्धान्तं निरस्य द्वितीयसूत्रार्थमप्यनूद्य निराह—यच्चेति । "इन्द्र आगच्छ, हरिव आगच्छ" इत्यादिना आहूतस्य सन्निधानानुपपत्तेरिति रामानुजभाष्योक्तमाशङ्कते—इन्द्रेति । तर्हि सिद्धमिति । एवञ्च विरोधशङ्कया विग्रहाद्यभावापादनं व्याहतमित्यर्थः । रामानुजभाष्योक्तमेवान्यदपि शङ्काबीजमाशङ्क्याह—एतेनेति ॥ "कस्य वा देवा यज्ञमागच्छन्ति, कस्य वा न बहूनां यजमानानां, यो वै देवताः पूर्वः प्रतिगृह्णाति स एनाश्श्वोभूते यजते" इत्यादिनाऽग्न्यादेस्तत्रतत्रा-

चन्द्रिका

इति निरस्तम्, अनेन वाक्येन देवतानामागमनसिद्धौ तत एव विग्रहवत्त्वसिद्धेः, असिद्धौ च कर्मणि विरोधशङ्कानुदयात् । एवं सूत्रान्तरेऽप्यनुपपत्तिरूह्या ॥

प्रकाशः

गमनसिद्धेरित्यर्थः । एतच्छब्दार्थं व्यनक्ति—**अनेनेति** । **एवमिति** । तथा हि—विग्रहादिमत्त्वेऽङ्गीक्रियमाणे कर्मणि विरोधाभावेऽपि, वैदिकेन्द्रादिशब्देऽनित्यार्थसंयोगरूपविरोधस्स्यादेव, विग्रहवत्त्वे जनिमृतियोगेन जनेः पूर्वं, नाशात् ऊर्ध्वमिन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादिति चेन्न, 'अतः' वैदिकेन्द्रादिशब्दादिन्द्रादेः 'प्रभवात्' उत्पत्तेरिति तृतीयसूत्रार्थमुभावप्याहतुः । स न युक्तः, इन्द्रादिजगद्धेतुत्वस्योपादानत्वरूपस्य ब्रह्मधर्मत्वेन शब्दे अभावात्, दण्डचक्रादिवन्निमित्तत्वरूपस्य चायोगात् । अथ मतं, इन्द्रादिशब्दस्य न साक्षादिन्द्रादिजगदुत्पत्तौ हेतुत्वं, किंतु यथा कुलालो घटादिशब्दान् मनसि निधाय वर्तमानात्तदाकारं स्मृत्वा घटादिकं तद्वाच्यं सृजति, तथा पूर्वस्मिन् इन्द्रादौ नष्टे वैदिकादिन्द्रादिशब्दात् ब्रह्मा पूर्वेन्द्राद्याकातिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजतीति बुद्धिस्थितार्थस्मारकतयेति । तन्न, सर्वज्ञस्य शब्दाधीनार्थस्मरणेन सृष्ट्ययोगेन शब्दादित्यर्थकस्य 'अतः' इत्यस्य व्यर्थत्वात् । चतुर्मुखस्य मुख्यसृष्टृत्वाभावेन "धाता यथापूर्वं" इत्यादेः परब्रह्मपरत्वात् । योऽपि 'प्रत्यक्षानुमानाभ्यां' इत्यस्य घटादिनिर्माणस्य शब्दपूर्वकत्वस्य

प्रकाशः

प्रत्यक्षसिद्धत्वात् जगत्सृष्टावप्येवमेवानुमानादिति परैरर्थ उक्तः, स न युक्तः, तथा सति तयोस्समुच्चित्य हेतुत्वासिद्धेः*। जगत्सृष्टेः शब्दपूर्वकत्वे अनुमानस्यैव साक्षात्प्रवृत्तेः, प्रत्यक्षस्य व्याप्तिग्रहौपयिकत्वेन तच्छेषत्वात्प्रत्यक्षानुमानाभ्यामिति द्विवचनस्य क्लिष्टत्वात्, 'दण्डपरशुभ्यां वृक्षश्छिद्यते' इति व्यपदेशाभावात् ॥ कैश्चित् श्रुतिस्मृतिभ्यामित्यर्थ उक्तः। सोऽपि न साधुः, रूढ्यर्थत्यागापत्तेः। 'अतः' इत्यनेनैव श्रुतिस्मृतिरूपस्य ग्रहणसम्भवेन तस्य वैयर्थ्याच्च ॥ यच्चोक्तं परैः, इन्द्रादिजगतः इन्द्रादिवेदशब्दजन्यत्वादेव वेदस्य नित्यत्वमिति चतुर्थस्यार्थ इति, तन्न, तत्समर्थनस्य प्रकृतानुपयोगाच्च शब्दानुपपत्तेश्चेत्यादिरूपेण ध्येयम् † ग्रन्थगौरवभयादुपरम्यते ॥

यत्तु कश्चिदाह—"ततो देवा रुद्रं नापश्यन्, ते देवा रुद्रं ध्यायन्ति" इत्यत्र उक्तो देवानामुपासनाधिकारो न युक्तोऽथ युक्त इति विशये, पूर्वोक्तरीत्या विग्रहाभावेन सामर्थ्याभावात्, "देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन् "इति देवलोकस्य परब्रह्मपदस्य चैकार्थत्वावगमेनार्थित्वायोगादुपनयनाभावेन वैदुष्यायोगाज्जडत्वेनानधिकार इति प्राप्ते, विग्रहलोकभेदस्वयंप्रतिभातवेदत्वाभ्युपगमेनास्त्वधिकार इति सिद्धान्त इति, तदेतेनैव निरस्तम्, प्रागुक्तदोषात्। देवलोकपरब्रह्मलोकयोर्भेदस्य "कर्मचितो लोकः क्षीयते, अक्षय्यं पदं" इत्याद्यनेक-

* 'हेतुत्वानुपपत्तेः' इति क्वचित्पाठः।

† 'निरूपणेन विधेयम्' इति च पाठः।

चन्द्रिका

टीकाक्षरार्थस्तु—**नाध्यायादिसङ्गतिर्गवेषणीयेति**। मुखतो व्युत्पाद्ये अधिकारे न साक्षादध्यायसङ्गतिर्गवेषणीयेत्यर्थः। प्रासङ्गि·

प्रकाशः

प्रमाणप्रमितत्वेनास्मद्रीत्यैवार्थित्वाभावस्योपपादनीयत्वाच्च। "ताभिरेनं रुद्रोऽन्वायत्तः" इति, "रुद्रेणैव मुखेन" इति, "तद्रुद्रा उपजीवन्ति" इत्यादिना रुद्रस्याप्युपासनाधिकारिवर्गप्रविष्टत्वेन तस्योपास्यकोटिप्रवे· शायोगाच्च॥ यच्चाद्यसूत्रे 'तत्' इति भिन्नं पदं लुप्तषष्ठीकं, "पूरण· गुण" इति समासनिषेधादिति, तन्न, निर्वाहस्योक्तत्वात्। द्वितीया- दिसूत्रार्थोऽपि प्राग्वन्निरसनीयः॥

यदत्रोक्तं शिवार्कमणिदीपिकायां पूर्वसूत्रे "तदुपरि" इत्यनेने- न्द्रादेर्हविर्भोक्तृत्वमर्थादुक्तम्, तन्न सम्भवति, युगपदनुष्ठीयमानाने- कक्रतुषु सन्निधानेन भोक्तृत्वायोगादिति विरोधशङ्कोदय इति, तन्न, ब्रह्मविद्याधिकारोपयोगिविग्रहादावेव विरोधशङ्कासमाधानौचि- त्येन तदनुपयुक्तभोक्तृत्वे विरोधशङ्कादेरसङ्गतत्वात्। अग्नौ प्रक्षि· प्तस्य तदैव भस्मसाज्जातस्यानेककायधारणेनापि तद्भोक्तृत्वस्य बाधाच्च। तद्द्वारा भोक्तृत्वेन च स्वस्थाने स्थितस्याग्निनाऽऽनीत- हविर्भोक्तृत्वसम्भवात्। अत एवाग्नेः देवदूतत्वप्रसिद्धिरपीत्यास्ताम्॥

"प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिर्गवेषणीया" इति टीका न युक्तै- व, प्रसङ्गसंगतेरेवाभिधानाद्व्याहत्यापत्तेरित्यत आह—**मुखतइति**। **सङ्गतिरिति**। ब्रह्मण्युभयत्रप्रसिद्धलिङ्गादिसमन्वयरूपेत्यर्थः।

चन्द्रिका

कसङ्गतेस्तत्रापि सत्त्वात् । फलिते देवतोपास्यत्वलिङ्गसमन्वये साक्षात्सङ्गतेरपि सत्वाच्च । पर्वतेतरत्वादीनामपि व्याप्तिरस्ति न वा । आद्यं निरस्यति—**का नो हानिः पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेदिति** । द्वितीयं प्रत्याह—**अनुमानोपजीव्येन बाधादव्याप्ताविति । चक्रकापातादिति** । ईश्वरस्य सर्वज्ञत्वे सिद्धे "तस्मा-

प्रकाशः

'तत्रापि' अधिकारि व्युत्पाद्येऽपीत्यर्थः । **फलितइति** । यथा वैश्वानरनाम्नि समन्विते पाचकत्वादिलिङ्गसमन्वयस्य फलितत्वात्तस्य द्वितीये निवेशस्तथाऽत्रापि देवानामधिकारे सिद्धे "विश्वे देवा उपासते" इत्युक्तलिङ्गसमन्वयः फलिष्यतीत्यर्थः । तृतीयसूत्रे कार्यत्वानुमाने शरीरजन्यत्वस्योपाधित्वमुक्त्वा तत्र व्यर्थविशेषणत्वमाशङ्क्य पक्षव्यावृत्त्यर्थत्वेन सार्थक्येऽभिहिते सति "पक्षव्यावृत्त्यर्थविशेषणवतोऽप्युपाधित्वे पक्षेतरत्वस्याप्यापद्यते तदिति चेत्, का नो हानिः पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेत् । अनुमानोपजीव्येन बाधादव्याप्तौ स्वयं दुष्टत्वात्" इति वाक्यं दुर्गमत्वाद्व्यनक्ति—**पर्वतेति । अनुमानेति** ।

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥

इत्युक्तदिशेत्यर्थः । चक्रकमस्पष्टत्वाद्दर्शयति—**ईश्वरस्येति** । प्रमाज्ञानसामग्रीव्यतिरिक्तकारणजन्या, कार्यत्वादित्यनुमाने विकल्पेन

चन्द्रिका

द्यज्ञात्'' इत्यादिना वेदस्य सर्वज्ञप्रणीतत्वसिद्धिः, तत्सिद्धौ च वेदस्य प्रामाण्यसिद्धिः, तत्सिद्धौ वेदेनेश्वरस्य सार्वज्ञ्यसिद्धि-रिति चक्रकापातादित्यर्थः। किं ज्ञानकारणातिरिक्तमात्रजन्यत्वं साध्यं, किं वा ज्ञानत्वप्रयोजककारणजन्यत्वे सत्यतिरिक्तजन्य-त्वम्। आद्ये प्रमात्वयुक्तज्ञानस्यापि ज्ञानत्वात् व्याघात इत्या-ह—**तादृशज्ञानस्यापीति**। द्वितीयं शङ्कते—**ज्ञानकारणतदति-रिक्तजन्यत्वमिति**। **विशिष्टाभावविकल्पेन व्याघातस्य समी-करणादिति**। यथा प्रमायां ज्ञानकारणातिरिक्तकारणमात्रज-न्यत्वस्य व्याहतत्वेऽपि ज्ञानकारणमात्राजन्यत्वरूपविशिष्टाभावो न व्याहतः, तस्य जन्यत्वाभावेन वा जन्यत्वेऽपि ज्ञानकारणा-

प्रकाशः

व्याहत्यादिना दूषिते सति, "प्रमात्वयुक्तज्ञानस्यैवंविधत्वं साध्यत इति चेत्" इत्याशङ्क्य "तादृशज्ञानस्यापि ज्ञानकारणातिरि-क्तकारणजन्यत्वसाधने व्याघातानिस्तारात्। ज्ञानकारणतदतिरिक्त-जन्यत्वं साध्यत इति चेन्न, ईशप्रमायां बाधात्" इत्युक्तम्। तद्दुर्गमत्वाद्विकल्पेन घटयति—**किं ज्ञानेति**। "ज्ञानेऽपि कार्यत्वेन तत्साधनसौलभ्यात्" इति पूर्ववाक्ये ज्ञानं ज्ञानकरणमात्रजन्यं न कार्यत्वादित्यपि स्यादिति प्रतिबन्द्युक्ता। तर्हि व्याघातः स्यादि-त्याशङ्क्योक्तं—'**विशिष्ट**' इत्यादि। तदप्रतीतेर्व्यनक्ति—**यथेति**। ननु प्रमात्वस्य ज्ञानत्वन्यूनवर्तिनस्तथात्वेऽपि न ज्ञानकारणजन्यकृ-त्स्नज्ञानवर्तिनो ज्ञानत्वस्य तथात्वं, ज्ञानहेतुं विना क्वापि तस्या-

चन्द्रिका

तिरिक्तजन्यत्वेन वोपपत्तेः, तथा ज्ञानेऽपि यादृच्छिकसंवादस्थलेऽतिरिक्तकारणं विनाऽपि दृष्टायाः भ्रमस्यापि अधिष्ठानांशे प्रमात्वेन प्रमात्वरहितज्ञानव्यक्तेरभावेन ज्ञानवदनुवृत्तत्वेन दृष्टायाश्च प्रमाया अतिरिक्तकारणजन्यत्वे, ज्ञानस्यापि तज्जन्यत्वप्रसङ्गादित्यर्थः । 'व्याघातः' इत्युपलक्षणं, ईशज्ञानस्य पक्षत्वेऽपि तत्र जन्यत्वाभावेन साध्यसम्भवात्तदंशे बाधोऽपि नेति भावः । **प्रतिज्ञानिरासेनैव निर**

प्रकाशः

**दृष्टेरित्यत** आह—**यादृच्छिकेति** । ननु तत्रापि विषयबाध एवातिरिक्तं कारणमिति चेन्न, विषयसत्त्वस्य प्रामाण्यशरीरत्वेन प्रामाण्यं प्रति हेतुत्वाभावात्, स्वतस्त्ववादिना विषयसत्त्वस्य स्वीकृतत्वेन सिद्धसाधनापत्त्या ततोऽन्यस्यैव कस्य चिद्वक्तव्यत्वेन तस्य तत्राभावात् । विस्तरस्तु तर्कताण्डवे प्रथमपरिच्छेदे द्रष्टव्य इति भावः । ननु ज्ञानमात्रं पक्षीकृत्य ज्ञानकारणमात्रजन्यत्वाभावे साध्यमाने तत्फलस्यातिरिक्तजन्यत्वस्येशज्ञाने बाध इत्यत *आह—**व्याघात इत्युपलक्षणमिति** । यद्यपि व्याघातस्येति वक्तव्यं, तथाऽपि व्याघातो नेति फलितत्वात्तदभिप्रायेणैवमुक्तिः । यद्यपि कार्यत्वेनेत्युक्त्या तदतिरिक्तं ज्ञानं पक्ष इति लभ्यते, अन्यथा भागासिद्ध्यापत्तेः । तथाऽपि पूर्वं प्रमापक्षकपरोक्तानुमाने भागासिद्धिमवधार्य तथैवोद्भावनादिहापि तत्पक्षीकारेण दोषोद्धारः कृत इति बोध्यम् । "प्रमा गुणजन्या तदन्वय-

*'बाधादित्यतः' इति बहुपुस्तकपाठः.

चन्द्रिका

स्तमिति। परतस्त्ववादिनाऽपि गुणत्वजातेरनङ्गीकारेण गुणशब्देन ज्ञानकारणातिरिक्तकारणस्यैव विवक्षणीयत्वेन पूर्वोक्तव्याघाताद्यापत्तेरित्यर्थः। **अजन्यप्रमात्वमिति**। जन्यप्रमात्वाभाव इत्यर्थः। **व्याप्त्यभावादिति**। यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां साध्ये सत्यप्युपाध्यभावादित्यर्थः। **तदभावादेवेति**। प्रामाण्यस्य साधितत्वेनाप्रामाण्यस्याभावादेवेत्यर्थः। **वृश्चिकताण्डुलीयकादिवदिति**। यथा गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकत्वताण्डुलीयकत्वादिजातिः, तथैव ब्राह्मणाज्जातस्यापि सर्गादिकालीनस्य ब्राह्मणत्व-

प्रकाशः

व्यतिरेकित्वादित्येतदपि प्रतिज्ञानिरासेन निरस्तम्" इति वाक्यार्थमप्रतीतेराह—**परतस्त्वेति**। आदिपदेनेशप्रमायां बाधादिर्ध्येयः। प्रमा गुणजन्या न प्रमात्वादित्यत्र परेणाजन्यप्रमात्वमुपाधिराशङ्कितः। स न युक्तः, घटादौ साध्याव्यापकत्वस्य स्पष्टत्वात् इत्यत आह-**जन्यप्रमात्वाभाव इति**। तर्हि व्याप्त्यभावादिति दूषणं न लगतीत्यत आह—**यादृच्छिकेति**। दुष्टेति साध्यसत्त्वोपपादनम्। तत्रापि गुणजन्यत्वमस्तीति प्रत्युक्तम्। "अत एव च" इति सूत्रे "न चाप्रामाण्येनोपपत्तिः, तदभावादेव" इत्युक्तं, तत्र, वाङ्मात्रेण परिहारायोगादित्यतस्तं व्यनक्ति—**प्रामाण्यस्येति**। तत्रैव "ब्राह्मणादेव ब्राह्मण इति नियमस्य क्वचिदन्यथात्वोपपत्तेः वृश्चिकताण्डुलीयकादिवत्" इत्युक्तम्। तत्र दृष्टान्तांशमप्रतीतेर्विवृणोति—**यथेति**। "समान" इति सूत्रे 'ब्रह्मादिविबुधानां नामानि निर्ममे'

चन्द्रिका

जातिरित्यर्थः। **संयोजितवानिति**। अयं शब्दोऽत्र शक्त इति ज्ञापितवानित्यर्थः। **न च द्वितीयाद्यमृतविद्यादिष्विति**। "तद्यत्प्रथममममृतं तद्वसव उपजीवन्ति" इत्युक्तप्रथमामृतविद्याया वसुत्वफलकत्वेन तत्र वसूनां अनधिकारेऽपि, "अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्ति" इत्यादिनोक्तद्वितीयाद्यमृतविद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्त्विति न वाच्यमित्यर्थः। **प्रकाशवानस्मिन् लोके भवतीत्यादीनामिति**। "प्रकाशवानस्मिन् लोके भवति प्रकाशवतो ह लोकान् जयति" इत्यादिनोक्तानां "एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम" इत्यादिविद्याफलानाम-

प्रकाशः

तान् शब्दांस्तेषु संयोजितवान्" इति वाक्यमयुक्तमिव, तथात्वे शब्दार्थसम्बन्धस्यौत्पत्तिकत्वानापत्तेः। अत आह—**अयं शब्द इति**। क्वचित् "सङ्केतितवान्" इति टीकापाठः। तत्राप्ययमेवार्थो ध्येयः। "संयोजितवान्" इति प्रतीकं तु बाहुल्याभिप्रायेण। यद्वा—एतदनुरोधेन पाठान्तरं लेखकदोषमूलमिति कल्प्यम्। "मध्वादिषु" इति सूत्रे "न च द्वितीयाद्यमृतविद्यादिषु वस्वादीनामधिकारः सम्भवतीति वाच्यं" इति शङ्कावाक्यं व्यनक्ति—**तद्यदिति**। तत्रैव "सामान्यफलानां "प्रकाशवानस्मिन् लोके भवति" इत्यादीनां तत्फलेऽन्तर्भावात्, "न ह वा एवंविदि किञ्चनानन्नं भवति" इत्यादीनां सर्वायोग्यत्वात्" इति वाक्यद्वयं क्रमेण व्यनक्ति—**प्रकाशवानिति**।

चन्द्रिका

स्मिन् लोके प्रकाशवत्त्वादीनां मधुविद्यादिफलभूतवसुत्वादावन्तर्भा-वादित्यर्थः । **"न ह वा एवंविदि किञ्चनानन्नं भवति" इत्या-दीनां सर्वायोग्यत्वादिति** । "न ह वा एवंविदि" इत्या-दिनोक्तेषु सर्वभोक्तृत्वादिरूपेषु "ते ह प्राणा अहंश्रेयसि व्यूदिरे" इत्यादिप्राणविद्याफलेषु रुद्रादेरेव योग्यत्वादित्यर्थः । **प्राचीनपक्षे दोषान्तरं चोक्तं भवतीति** । न केवलमाद्यपक्षे पूर्वोक्तो वस्वादीनां मधुविद्यादिफले वसुत्वादावधिकाराभावदोषः, किन्तु विद्यासाध्ये वसुत्वादिसाधने ज्ञानेऽर्थित्वाभावदोषो वस्वादीनां सिद्धज्ञानत्वादित्यर्थः ॥

प्रकाशः

"ज्योतिषि" इति सूत्रे टीकास्थवाक्यं व्यनक्ति—**न केवलमिति** । शिष्टं स्पष्टं उपन्यासमुखेनेति भावः ॥

इति देवताऽधिकरणम्.

# अथ अपशूद्राधिकरणम्.

"मनुष्याधिकारत्वात्" इत्युक्ते अविशेषाच्छूद्रस्यापि "अह हारेत्वा शूद्र" इति पौत्रायणोक्तेरधिकार इति,

तत्त्वप्रकाशिका

अत्र त्रिवर्णेतरस्य वेदोक्तब्रह्मविद्याधिकारनिरासादस्ति शास्त्रसङ्गतिः। प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिरन्वेष्टव्या। श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति—मनुष्येति। वेदविद्यासु मनुष्याणामधिकृतत्वात्तेषां चाङ्गुष्ठसद्भावाद्युक्तं तान् प्रति विष्णोरङ्गुष्ठमात्रत्वाभिधानमित्युक्तम्। स च वेदविद्याधिकारो यदि शूद्रादीनां स्यात्तदा श्रुत्यादिविरोधादसौ निषेध्य एव। न चोक्ते विरोधाभावादसङ्गतिः, स्वन्यायेन श्रुत्यादिविरोधप्राप्तेः। स एव ह्युक्ते विरोधो नाम, यदुक्तं प्रमाणबाधितं स्यात्। स वेदविद्याधिकारो विषयः। शूद्रस्यास्ति न वेति सन्देहः। मनुष्यत्वमदर्शनं च सन्देहबीजम्। अस्ति शूद्रस्यापि वेदविद्याधिकार इति पूर्वः पक्षः, "मनुष्याधिकारत्वात्" इति मनुष्याणामधिकारस्योक्तत्वात्, मनुष्यत्वे च शूद्रस्य द्विजातिभ्यो विशेषाभावात्। न मनुष्यत्वं वेदविद्याधिकारोपयोगि, किन्तु विशिष्टबुद्ध्यादिमत्त्वमेवेति चेत्, तथाऽपि शूद्राधिकारसिद्धिः, विशिष्टबुद्ध्यादिमत्त्वेऽपि शूद्रस्यान्येभ्योऽविशेषात्। न च वाच्यं शूद्रस्य वेदविचारादर्शनादनधिकार इति, छन्दोगोपनिषादि

अत आह—

**ओम्––शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि–ओम् ॥ ३४ ॥**

नासौ पौत्रायणः शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वं,

तत्त्वप्रकाशिका

पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनदर्शनात् । तस्य शूद्रत्वमेव कुत इति चेन्न, "तमु ह परः प्रत्युवाच अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" इति पौत्रायणं प्रति रैक्वोक्तेरेव । न चाधिकाराभावेऽपि पौत्रायणो विद्यां विचारयामासेति किं न स्यादिति वाच्यम्, अनधिकारिणं प्रति मुनेरुपदेशासम्भवात् । न हि तस्यापरोक्षज्ञानिनो गवाद्याशयाऽप्यन्याय्या प्रवृत्तिस्सम्भाविता । अतो युक्त्या लिङ्गदर्शनेन च शूद्रस्य वेदाधिकारसिद्धिरिति भावः । 'उक्ते' इति सप्तमी पञ्चम्यर्थे । अधिकारोपयोगितयोक्ते मनुष्यत्वेऽविशेषादिति वा । 'अह' इति संबोधनम् । हारो रथश्च गोभिः सह तवैवास्त्वित्यर्थः । 'हारेत्वा' इति "सेदुराजा" इत्यादिवद्विसर्गलोपेन भवति । हारेत्वानाविति वा । तथात्वे पृथगन्वयः । सिद्धान्तयत्सूत्रमवतार्य तत्फलितार्थं तावदाह—अत इति । यदुक्तं शूद्रस्यापि पौत्रायणस्य वेदविचारदर्शनादस्ति शूद्रस्य वेदविद्याधिकार इति, तद्भवेद्यदि पौत्रायणश्शूद्रो भवेन्न तु तदस्तीत्यर्थः । शूद्रेति सम्बोधितत्वात्कथमसौ न शूद्र इत्यतः 'तदाद्रवणात्' इति सूत्रांशं व्याचष्टे—शुचेति । शोकेनाद्रवणं शूद्रशब्दप्रवृत्ति-

**"कम्वर एनमेतसन्तं" इत्यनादरश्रवणात् । "स ह संजिहान एव क्षत्तारमुवाच" इति सूच्यते हि ॥३४ ॥**

तत्त्वप्रकाशिका

निमित्तम् । अतः शुचाऽऽद्रवणादेव शूद्रेतिसम्बोधितो न तु वर्णावरत्वाभिप्रयेणेति नानेन पौत्रायणस्य शूद्रत्वसिद्धिरित्यर्थः । पौत्रायणस्य शुगेव किंनिमित्तेत्यतः "शुगस्य तदनादरश्रवणात्" इति सूत्रांशं व्याचष्टे—**कम्बिति** । 'अरे' हंसैतद्वचनं कमेनमुद्दिश्यात्थ सन्तं सयुग्वानं रैक्वमिवेति हंसकृतानादरश्रवणादस्य पौत्रायणस्य शुगित्यर्थः । 'तत्' इति श्रुत्युक्तपरामर्शः । श्रुतानादरस्यापि तस्य कुतः शोकोत्पत्तिर्ज्ञायते, परबुद्धेरप्रत्यक्षत्वात्, कारणस्य च कार्याविनाभावाभावादित्यतः सूत्रशेषं व्याचष्टे—**स हेति** । 'सः' श्रुतानादरः पौत्रायणः शयनादुत्तिष्ठन्नेव क्षत्तारं रैक्वगवेषणायोवाचेत्युक्ततद्वचग्रतया शोको ज्ञायते । अतोऽनादरश्रवणात्पौत्रायणस्य शुगासीत्तया शुचाऽऽद्रवणाच्छूद्रेति सम्बोधितो न तु वर्णावरत्वाभिप्रायेणेति नेदं शूद्राधिकारे लिङ्गमिति भावः । शोकेनाद्रवणपरिज्ञानं च मुनेस्सार्वज्ञ्यादुपपद्यते । तदुक्तं—

> राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः ।
> प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान् ॥

इति । दीर्घस्वरार्थत्वेनाद्रावणादित्युक्तम् । शुद्र एव शूद्रो रुद्र एव रुद्र इतिवत् ॥ ३४ ॥

**ओम्–क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्–ओम् ॥ ३५ ॥**

"अयमश्वतरीरथः" इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।

रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते ।

इति ब्राह्मे ।

यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः ।

इति च ब्रह्मवैवर्ते ॥ ३८ ॥

तत्त्वप्रकाशिका

ननु शूद्रशब्दोऽयं कुतो यौगिकोऽङ्गीक्रियते, रूढार्थ एव किं न स्यात्, योगरूढ्यो रूढेरेव प्राबल्यात् । तथा च पौत्रायणनिदर्शनेन शूद्रस्य वेदविद्याधिकारासिद्धिरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—क्षत्रियत्वेति । "अयमश्वतरीरथः" इति पौत्रायणस्याद्रवणाच्छूद्रशब्देन सम्बोधनाद्वोत्तरत्र चित्ररथसम्बन्धित्वलिङ्गं श्रूयते । तेन च लिङ्गेन तस्य क्षत्रियत्वमवगम्यते । अतो रूढेरेव प्राबल्येऽपि बाधकाद्योगाङ्गीकारो युक्त इति भावः । श्रुतावश्वतरीरथश्रवणात्कथं चित्ररथत्वमसूत्रयदित्यत आह—रथ इति । न च वाच्यम्, पौत्रायणेन दीयमानरथोत्रोऽच्यते, न तु तस्य तदीयत्वमिति, बाधकाभावे तदीयत्वस्यैव प्राप्तत्वात् । ननु चित्ररथत्वेऽपि पौत्रायणस्य वर्णावरत्वं किं न स्यादित्यत आह—यत्रेति । न च वर्णावरत्वे पौत्रायणस्य रथित्वं सम्भवति, रथस्य वेदाविनाभा-

**ओम्—संस्कारपरामर्शात्तदभावाभिलापाच्च—ओम् ॥ ३६ ॥**

**"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्यध्ययनार्थं संस्कारपरामर्शात्। "नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य" इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च।**

तत्त्वप्रकाशिका

वाच्छूद्रे च वेदाभावादिति भावः। नन्वेवं वैदिकमात्रे विद्यमानं रथित्वं कथं क्षत्रियत्वे लिङ्गम्, क्षत्रियस्य स्वाभाविकत्वात्, अन्येषां कादाचित्कत्वात्, स्वाभाविकस्य नैमित्तिकादाधिक्यात्। अपलायनं च शूद्रस्य विप्ररक्षार्थमित्येतदपि पदातितयेति गमयितव्यम् ॥ ३५ ॥

यदुक्तं रथित्वलिङ्गेन पौत्रायणस्य क्षत्रियत्वावगमान्न तल्लिङ्गेन शूद्रस्य वेदाधिकारसिद्धिरिति, तदयुक्तं, शूद्रस्यापि रथित्वसम्भवात्। तस्य वेदाविनाभावान्नेति चेन्न, शूद्रेऽपि वेदाधिकाराङ्गीकारादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—**संस्कारेति**। न परेणाङ्गीकृतोऽपि शूद्रस्य वेदाधिकारस्सम्भवति, वेदाध्ययनादेरुपनयनादिसंस्कारसापेक्षत्वात्, "अष्टवर्षं ब्राह्मणमुपनयीत" इति संस्कारमुक्त्वा, 'तं' उपनीतमध्यापयीतेत्यध्ययनार्थमुपनयनपरामर्शात्।

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना।

इति स्मृतेश्च। अस्तु तर्हि शूद्रस्यापि संस्कारः, मैवम्, "नाग्निर्न यज्ञः" इति शूद्रस्य संस्काराभावाभिधानात्। अतः शूद्रस्य संस्काराभावेन वेदानधिकारान्न तस्य वेदाविनाभूतरथित्वमिति भावः। नन्वेवं

**उत्तमस्त्रीणां तु न शूद्रवत्, "सपत्नीं मे पराधम" इत्या-दिष्वधिकारदर्शनात् । संस्काराभावेनाभावस्तु सामान्येन । अस्ति च तासां संस्कारः,**

**स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा ॥**

**इति स्मृतेः ॥ ३६ ॥**

तत्त्वप्रकाशिका

संस्काराभावेन वेदानधिकारश्चेदुत्तमस्त्रीणामनधिकारप्रसङ्गः, संस्कारा-भावेऽपि तासामधिकारे शूद्रस्यापि तत्प्राप्तिरित्यत आह—**उत्तमेति** । नोत्तमस्त्रीणां शूद्रवत्संस्काराभावेन वेदविद्याधिकाराभावो वक्तव्यः, "सपत्नीं मे पराधम" इत्यादिविद्यासु शच्यादीनां तद्द्रष्टृत्वेनाधि-कारदर्शनादित्यर्थः । तर्ह्युक्तन्यायभङ्ग इत्यत आह—**संस्कारेति** । संस्काराभावेन वेदाधिकाराभावः सामान्यन्यायेनोक्तो न तु निय मेन । अतस्तस्य विशेषेणापवादे न दोष इति भावः । अनेनैव शूद्रप्रतिबन्दी विमोचिता भवति, सामान्यस्य बाधकापोद्यत्वात् । एवं स्त्रीणामुपनयनाभावेऽपि पूर्वन्यायस्य सामान्यतयाऽपवादसम्भवा-दस्ति वेदाधिकार इत्युक्तम् । अथोपनयनप्रतिनिधिसद्भावाच्चास्त्य-धिकार इत्याह—**अस्ति चेति** । यथा पुंसामुपनयनादिसंस्कारस्तथा स्त्रीणां प्रदानकर्मैव संस्कार इत्यर्थः । अत्रापवादोक्तिः प्रदाना-दिशून्यतिर्यगादीनामपि सङ्ग्रहार्था, तेषामपि "अयमग्ने जरिता" इत्यादावधिकारदर्शनात् ॥ ३६ ॥

**ओम्–तदभावनिर्धारणे च प्रवृत्तेः–ओम् ॥ ३७॥**

"नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि" इति सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य "नैतदब्राह्मणो विवक्तुमर्हति" इति तत्संस्कारे प्रवृत्तेश्च ॥ ३७ ॥

**ओम्–श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च–ओम् ॥ ३८ ॥**

तत्त्वप्रकाशिका

यदुक्तमध्ययनस्य संस्कारसापेक्षत्वान्न शूद्रस्य वेदविद्याधिकार इति, न तद्युक्तम्, शूद्रस्यापि संस्कारसम्भवात् । न च वाच्यम्, तदसम्भवोऽप्युक्त इति, संस्काराभावस्यैवोक्तेर्निषेधाभावात, निषेधाभावेऽप्यभावोक्तिसम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—**तदभावेति** । न शूद्रस्योपनयननिषेधाभावः, "नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि" इति वचनेन सत्यकामस्यार्जवं ज्ञात्वा "नैतदब्राह्मणो विवक्तुमर्हति" इति शूद्रत्वाभावनिर्णय एव तदुपनयने गौतमस्य प्रवृत्तत्वात्, शूद्रोपनयननिषेधाभावे कथं तदभावनिर्धारण एव प्रवर्तेतेति भावः । ननु श्रुतावब्राह्मणमात्रस्यानुपनयनाभिप्रायप्रतीतेः कथं शूद्रत्वाभावस्य सूत्रयदभाषत च, ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेः ॥ ३७ ॥

शूद्रो वेदविद्याधिकारी विशिष्टबुद्ध्यादिमत्वात् द्विजवत् । अन्यथा विशिष्टबुद्ध्यादिमत्त्वेन देवताधिकारसिद्धिर्न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—**श्रवणेति** । न विशिष्टबुद्ध्यादिम-

"श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणम्" इति प्रतिषेधात् ।

नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते ॥

इति स्मृतेश्च । विदुरादीनां तूत्पन्नज्ञानत्वात्कश्चिद्विशेषः ॥ ३८ ॥

तत्त्वप्रकाशिका

त्वेन शूद्रस्य वेदाधिकारो वाच्यः, अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वस्याधिकारप्रयोजकत्वेन केवलविशिष्टबुद्ध्यादिमत्त्वस्याधिकारासाधकत्वात् । शूद्रस्य वेदश्रवणाध्ययनार्थावधारणानां श्रुतौ प्रतिषिद्धत्वात् । श्रुतौ शूद्रशब्दाश्रवणाद्वर्णबाह्यविषयोऽसाविति न वाच्यम्, "नाग्निर्नयज्ञः शूद्रस्य" इति स्मृतौ शूद्रस्यैव स्पष्टनिषेधाच्छ्रुतेरपि तदर्थत्वोपपत्तेः । अतोऽनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वं व्यावर्तमानं शूद्रात्स्वव्याप्यं वेदाधिकारं च व्यावर्तयतीति भावः । ननु शूद्रस्य वेदार्थावधारणादेर्निषिद्धत्वे कथं विदुरधर्मव्याधादीनां वैदिकार्थावधारणमस्ति । संस्काराभावेनानधिकारे च कथं कर्णोऽक्षत्रसंस्कारयुतोऽखिलाश्श्रुतीरधिजगौ । न च वाच्यं, असावपवादविषय इति, अविहितोपनयनानामेव वेदाधिकारिणामपवादविषयत्वसम्भावादित्यत आह—**विदुरादीनामिति** । तेषां पूर्वजन्मन्युत्पन्नापरोक्षज्ञानत्वेनेतरशूद्रादिभ्यो विशिष्टत्वाद्वेदार्थावधारणादि न निषिद्धमितिभावः । अतो हरिः शूद्राद्यैर्वेदविद्याविज्ञेयो न भवतीति सिद्धम् ॥ ३८ ॥

चन्द्रिका

## ओम्--शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि--ओम् ॥ ३८ ॥

अत्र पूर्वाधिकरणसिद्धान्तरीत्या पूर्वपक्षोत्थानादनन्तरसङ्गतिः । फलं तु "न चोक्ते विरोधाभावात्" इत्यादिटीकायामेवोक्तम् । अयं हि टीकार्थः—शूद्रस्याधिकारेऽपि उक्ते मनुष्याधिकारे विरोधो न, शूद्रस्यापि मनुष्यत्वात् । तथा चोक्ताक्षेपाभावेन अस्य विचारस्य निष्फलत्वादसङ्गतिरिति न च वाच्यं, शूद्रस्याधिकारवदनधिकारेऽपि श्रुत्यादेस्सत्त्वेनाधिकारोपपादकपूर्वपक्षन्यायेनानधिकारस्यापि प्राप्तेः ।

प्रकाशः

ओम्—शुगस्य तदनादरश्रवणात् तदाद्रवणात्सूच्यते हि—ओम् ॥ "मनुष्याधिकारत्वादित्युक्ते" इति भाष्यदिशा तदानन्तर्यप्राप्तेस्तस्य फलपरत्वमभिप्रेत्यास्य पूर्वानन्तर्ये बीजमाह—**अत्रेति** । "सम्भवात्" इति हेतूक्तविशिष्टबुद्ध्यादिमत्त्वेन देवानां यथाऽधिकारस्तथा शूद्राणामपीत्युत्थानादापवादिकी सङ्गतिरित्यग्रे स्पष्टम् । इयं च "स्वन्यायेन" इति टीकासूचिता । व्यर्थेयं चिंतेत्यत आह—**फलं त्विति** । "न चोक्ते विरोधाभावादसङ्गतिः, स्वन्यायेन श्रुत्यादिविरोधप्राप्तेः" इति टीकायामित्यर्थः । तदप्रतीतेर्व्याचष्टे—**अयं हीति** । शूद्रस्याधिकारेऽङ्गीकृतेऽपि "मनुष्याधिकारत्वात्" इत्यनेनोक्ते मनुष्याधिकारे विरोधो नास्तीत्यर्थः । 'स्वन्यायेन' इत्यस्यार्थमाह—**अधिकारेति** । मनुष्यत्वविशिष्टबुद्ध्यादिरूपन्यायेनेत्यर्थः । 'अधिकारवत्'

चन्द्रिका

तथा च सामान्येन मनुष्याधिकारोक्तिः प्रमाणविरुद्धा। अनधिकारे तु सामान्येनोक्तेः शूद्रेतरविषयत्वान्न विरोध इति। यद्यप्यत्राद्य-सूत्रस्थाथशब्दसूचितस्य त्रैवर्णिकाधिकारस्येहाक्षेपादपि फलं सुवचम्, तथाऽपि टीकायां सन्निकृष्टत्वान्मनुष्याधिकार एवाक्षिप्तः॥ यद्वा— अत्रत्यसिद्धान्तेन त्रैवर्णिकाधिकारे सिद्धेऽथशब्देन तत्सूचनम्, पूर्वपक्षे तु नेति न तदाक्षेपः शक्यः॥

अत्र शूद्रादेः किं ब्रह्मविद्याधिकारोऽस्ति उत नेति चिन्ता। तदर्थं

प्रकाशः

इत्यन्वयः। निषेधश्रुत्यादिनाऽनधिकारस्यापि प्राप्तेरित्यर्थः। टीकोक्तं फलमाक्षिप्य समाधत्ते—यद्यपीति। इह पूर्वपक्षे पूर्वन्यायेनाधिकारे सिद्धे "अथातो ब्रह्मजिज्ञासा" इत्यत्र अथशब्दोक्तत्रैवर्णिकाधि-कारो न युक्त इत्याक्षेपसम्भवादित्यर्थः। ननु प्रागुक्तमनुष्याधि-काराक्षेपस्य हृद्यपेक्षयाऽङ्गुष्ठमात्रत्वं विष्णौ युक्तमित्यस्याक्षेपद्वारा जिज्ञास्यत्वाक्षेपपर्यन्तत्वेन व्यवहिताक्षेपः प्राशस्त्यविशिष्ट इति चेन्न, साक्षाद्व्यवहिताक्षेपापेक्षया सन्निकृष्टाक्षेपस्य उचितत्वादित्याशयात्। यद्वेतदनुशयेनाह—यद्वेति॥

विषयसंशयटीकां व्यनक्ति—अत्रेति। 'शूद्रादेः' इत्या-दिपदेन त्रैवर्णिकेतरजातेः, त्रैवर्णिकमध्येऽपि भक्तिशमदमादिरहि-तस्य च परिग्रहः। टीकायां "तदाद्रवणात्" इति सूत्रभाष्या-नुरोधेन 'शूद्रस्य' इत्युक्तावपि "उपनयनसंस्कराभावात्" इत्युक्तेः

चन्द्रिका

"अह हारेत्वा शूद्र" इति श्रुतः शूद्रशब्दः किं रूढः किं वा

प्रकाशः

अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि.................... ।

इत्यादिनिषेधस्य च तुल्यतया समानन्यायविषयाणां टीकोपलक्षण-मित्यभिप्रेत्यादिपदं प्रयुक्तम् । इति श्रुत इति । छान्दोग्ये चतुर्थेऽध्याये संवर्गविद्यायां "तमु ह परः प्रत्युवाच । अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" इति पौत्रायणं प्रति रैक्वोक्ते वाक्ये श्रुतस्सम्बुद्ध्यन्तश्शूद्रशब्द इत्यर्थः । 'अह' इति सम्बुद्धिः । 'हार' इति लुप्तविभक्तिकः । 'इत्वा' रथः ॥

यदत्र केनचिदुक्तं, "अह हारेत्वा शूद्र" इति दक्षिणाप्रत्याख्यानवाक्ये 'शूद्र' इत्यामन्त्रणं शूद्रवत् ब्रह्मविद्यागौरवमजानानः स्वल्पां दक्षिणामाहरसीति कोपेन शूद्रेत्यामन्त्रणमिति अन्यथा सिद्धिर्वक्तुं शक्या । तथाऽपि—"आजहारेमाः शूद्रानेनैव मुखेन आलापयिष्यथा३" इत्युत्तरवाक्यस्थशूद्रशब्दात्सन्देह इति, तन्न, तथात्वे अग्रेऽपि 'शूद्र' इत्युक्त्यनुपपत्तेः, प्रक्रमस्थशूद्रशब्दे अन्यथासिद्धिशङ्कायामुपरितनेऽपि तथात्वशङ्कानपायात्, एकप्रकरणस्थत्वात् । विषयकामुकवृषलवत् कामिन्यादिमुखेन आलापयिष्यथ इति वा, त्रैवर्णिकवच्छुश्रूषया विना शूद्रवत् हारादिद्रव्यमुखेन विद्यां प्राप्तुमि-

चन्द्रिका

यौगिक इति। तदर्थं किं रूढिबाधकं नास्ति उतास्तीति। तदर्थं "अयमश्वतरीरथः" इति श्रुतो रथः किं शूद्रे युक्त उत न युक्त इति॥

प्रकाशः

च्छसीति वा, तदानीतकन्यापरिग्रहेण तस्य शूद्रत्वशङ्कया 'शूद्र' इत्युक्तेर्वर्णावरत्वान्यनिमित्तकत्वमिति वा आशङ्कोदयस्य तत्रापि सम्भवाच्च। किञ्च क्षत्रियत्वनिर्णायकद्वितीयसूत्रोक्तरथसम्बन्धित्वस्य "अह हारेत्वा" इति वाक्यइवोत्तरवाक्ये अभावात् तदनादरश्रवण—तदाद्रवण—तत्सूचनानामाद्यसूत्रोपात्तानां भाष्योक्तवाक्यस्थशूद्रशब्द एव सन्निधानेन तन्निर्णयाधीननिर्णयत्वात् उत्तरशूद्रशब्दस्य। किञ्च दक्षिणाप्रत्याख्यानं शूद्रजातित्वादेव 'शूद्र' इति सम्बोध्य कृतं, शूद्रप्रतिग्रहस्य निन्दनात्, न त्वल्पत्वेनेति विरक्तस्य मुनेः स्वल्पत्वेन प्रत्याख्यानायोगादिति, जातिवाचित्वशङ्काया एवोदयेनान्यथासिद्धिशङ्कानुदयाच्च। न च तथात्वे अग्रेतनवाक्ये दक्षिणापरिग्रहश्रवणविरोध इति शङ्क्यं, त्वत्पक्षेऽप्यग्रे शूद्रपदश्रवणविरोधस्य तुल्यत्वात्। पुनरागते तस्मिन् दयया तद्दत्तस्वीकरणं मुनेरित्युपपत्तेश्च। तस्माद्भाष्याद्युक्तं "अह हारेत्वा" इति वाक्यमेवोदाहरणं युक्तम्। आद्यसूत्रसूचितं चिन्ताद्वयमुक्त्वा द्वितीयसूचितं चिन्ताद्वयमाह—रूढिबाधकमिति। यदि वक्ष्यमाणादिशा शूद्रे वेदाध्ययनादेः सम्भवेन

यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः।

चन्द्रिका

पूर्वपक्षस्तु—विशिष्टबुद्ध्यादिमत्त्वाद्देववच्छूद्रादिरपि वेदविद्याधिकारी। ननु शूद्र उपनयनाभावादध्ययनरहितः, तद्रहितश्च नाधि-

प्रकाशः

इति स्मृतेर्वेदाविनाभूतोऽपि रथो युक्तः, तदा बाधकाभावेन रूढित्यागायोगात् शूद्रादेरप्यधिकारस्सिध्यति। यदा तु सिद्धान्ते वक्ष्यमाणदिशा शूद्रे वेदाभावेन तदविनाभूतो रथोऽयुक्तः, तदा बाधकसत्त्वेन रूढित्यागाद्यौगिकार्थस्य अशूद्रेऽपि सम्भवात् नास्त्यधिकार इति सिध्यतीति फलफलिभावः स्पष्टः। नन्वत्र तदर्थं रथव्यापकमध्ययनं शूद्रे युक्तं न वेति तृतीयसूत्रादिसूचितचिन्तान्तरं कुतो न प्रदर्शितमिति चेत्, द्वितीयसूत्रे 'चैत्ररथेन' इति तद्धितप्रत्ययसूचितं स्वाभाविकत्वं रथसम्बन्धस्य प्रतिपादयितुम्। तथा प्रदर्शने हि रथो वेदानुमानद्वारा अशूद्रत्वज्ञापकः स्यात्, न साक्षादिति साक्षादपि लिङ्गत्वसिद्ध्यर्थमेतावत्येव चिन्ता दर्शिता। एवञ्चास्मिन् पक्षे रथस्यास्वाभाविकत्वेन शूद्रे युक्तत्वादस्त्यधिकार इति पूर्वपक्षे फलं, सिद्धान्ते तु तस्यात्र स्वाभाविकस्यैव श्रवणात् तस्य च शूद्रे अयोगान्नास्त्यधिकार इत्येवं ध्येयम्॥

"विशिष्टबुद्ध्यादिमत्त्वेऽपि शूद्रस्य अन्येभ्योऽविशेषात्" इति टीकां विवृण्वन् पूर्वसिद्धान्तन्यायेन पूर्वपक्षं व्यनक्ति—**विशिष्टेति**। एतच्च 'सम्भवात्' इति पूर्वहेत्वर्थकथनम्। ननु पूर्वन्याये अविशिष्टेऽपि बाधकादपवादः स्यादिति शङ्कते—**नन्विति**। "अष्टवर्षं ब्राह्म-

चन्द्रिका

कारीति "अध्ययनमात्रवतः" इत्यत्र वक्ष्यते इति चेन्न, वैदिकसंवर्गविद्याश्रोतारं पौत्रायणं प्रति "अह हारेत्वा शूद्र" इति रैक्कस्य सम्बोधनरूपेण, शूद्रस्यापि विदुरादेर्वेदार्थावधारणादिरू-

प्रकाशः

णमुपनयीत तमध्यापयीत" इति त्रैवर्णिकानेवाधिकृत्योपनयनविधानात् उपनीतस्यैवाध्ययनविधेरिति भावः। अध्ययनेति। ज्ञानपादे "असार्वत्रिकी" इत्येतदधिकरणे गुणसूत्रे अर्थित्वादेस्सर्वेषां सत्त्वेन ज्ञाने अधिकारः सर्वेषाम्, अन्यथा कस्यापि न स्यात्, अर्थित्वादेः सर्वत्र साम्येऽपि केषांचिदेवाधिकारो नान्येषामित्यत्र अर्थित्वाद्यन्यविशेषाभावादित्याशङ्क्य, यथाशक्ति अखिलवेदाध्ययनवत्त्वरूपविशेषणान्तरयुक्तस्यैवाधिकारो न सर्वेषां, तादृग्विशेषणस्य विष्णुभक्त्यादिहीने वर्णावरादौ च अयोगादिति वक्ष्यत इत्यर्थः। एतेन "शूद्रस्य वेदविद्याधिकारादर्शनात्" इति टीकोक्तिरुपलक्षणम्, अधिकारप्रयोजकाध्ययनाभावाच्चेत्यपि ग्राह्यमिति सूचितम्। **विद्याश्रोतारमिति**। एतेन अनधिकारेऽपि पौत्रायणो विद्यां विचारयामासेति निरस्तं, अनधिकारिणं प्रति मुनेरुपदेशायोगादिति। एतेन "पौत्रायणस्य" इत्यादिटीका विवृता। **विदुरादेरिति**। धर्मव्याधादिरादिपदार्थः। प्रसिद्धमेतत्पुराणादाविति भावः। एतेन "युक्त्या लिङ्गदर्शनेन च" इति टीकायां 'लिङ्गदर्शनेन' इत्यस्य 'शूद्र' इति सम्बोधनरूपलिङ्गदर्शनेन, विदुरादेर्वेदार्थावधारणरूपलिङ्गदर्शनेन चेत्यर्थ

चन्द्रिका

पेण च लिङ्गेन शूद्रेऽप्युपनयनाध्ययनयोः सत्त्वात् । यद्वा—शूद्रस्यानुपनीतस्यैवाध्ययनमस्तु । अथ वा—अनधीयानस्यैव शूद्रस्य श्रुताल्लिखितनिरीक्षताद्वा वेदादर्थज्ञानमस्तु । न चात्र शूद्रशब्दः शोकिनाद्रवणाद्यौगिकः, रूढेर्बलवत्त्वात् । अन्यथा—"वर्षासु रथकार आदधीत" इत्यत्र रथकारशब्दस्यापि योगेन त्रैवर्णिकपरत्वापातादिति ॥

प्रकाशः

उक्तो भवति । उपनयनेति । "अष्टवर्षं ब्राह्मणं" इत्यत्र ब्राह्मणशब्दस्य ब्रह्माणनयोग्यत्वेन यथा त्रैवर्णिकपरत्वं, तथा चतुर्वर्णपरत्वमपि स्यादिति विधिबलाद्वा विध्यभावेऽपि शूद्रे विद्यासम्बन्धान्यथानुपपत्त्यैव तदङ्गोपनयनादेराक्षेपलब्धत्वाद्वा सत्त्वादित्यर्थः । इयं च संस्कारसूत्रनिरस्या शङ्का । नन्वेवं स्थपत्यादेरप्यग्न्याधानादिसिद्धिः स्यात् । न चेष्टापत्तिः, षष्ठे तदभावस्योक्तत्वादित्यत आह—शूद्रस्येति । कल्पकं तु निरवकाशलिङ्गदर्शनमेवेति भावः । इयं च "श्रवणाध्ययनार्थ" इति पञ्चमसूत्रव्यावर्त्या शङ्केति ज्ञेयम् । एवञ्च तदविनाभूतो रथोऽपि शूद्रे युक्त इति भावः । द्वितीयसूत्रव्यावर्त्यं शङ्कापूर्वमाह—न चेति । अन्यथेति । रथकाराधिकरणमुक्तं जन्मादिसूत्रे । निषेधश्रुत्यादेस्तूपचरितार्थत्वादिना समाधानं कार्यमिति भावः ॥

द्वितीयसूत्रभाष्याद्युक्तबाधकात् श्रौतशूद्रशब्दस्य रूढित्यागेनाऽऽ-

चन्द्रिका

सिद्धान्तस्तु—

शूद्रशब्दस्य रूढत्वे रथवत्त्वादि बाधकम् ।
रथकारादिशब्दे तु रूढेर्नैवास्ति बाधकम् ॥

अस्ति ह्यत्र "अयमश्वतरीरथः" इति वाक्यशेषस्थं पौत्रायणस्य रथवत्त्वं रूढेर्बाधकं, भाष्योक्तस्मृत्या शूद्रे रथायोगात् । यद्यपि

प्रकाशः

द्यसूत्रभाष्याद्युक्तदिशा यौगिकत्वावश्यम्भावात् कल्पकाभावेन संस्कारादिसूत्राद्युक्तोपनयनाद्यभावश्रुतिलिङ्गदर्शनादिनाऽधिकारप्रयोजकाध्ययनादिरयोगात् नाधिकार इति भावेन द्वितीयसूत्रभाष्याद्युक्तं प्रमेयं तावत्सङ्गृह्याह—शूद्रशब्दस्येति । आदिपदेन वक्ष्यमाणग्रामेशत्वादिपरिग्रहः । अतिप्रसङ्गं निराह—रथकारेति । पूर्वार्धं व्यनक्ति—अस्ति हीति । "रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जाया अयं ग्रामो यस्मिन्नास्से" इति वाक्यशेषस्थमित्यर्थः । 'वाक्यशेष' इत्युक्त्या रथवत्त्वस्य पक्षधर्मतोक्ता रूढे शूद्रशब्दे । टीकायां भाष्यदिशा शूद्रे वेदाभावेन तदविनाभूतरथाभावमुपपाद्य "क्षत्रियस्य स्वाभाविकत्वादन्येषामागन्तुकत्वात् स्वाभाविकस्य नैमित्तिकादाधिक्यात् *" इति रथस्य क्षत्रिये स्वाभाविकत्वमुपपादितम् । तत्र भाष्योक्तं समाधिं संस्कारसूत्रावतरणपरटीकोक्तरीत्याऽऽक्षिप्य टीकोक्तमुपपादयति—यद्यपीत्यादिना ।

* 'आगन्तुकादाधिक्यात्' इति क्वचित् पाठः ॥

चन्द्रिका

"न वेदो यत्र नो रथः" इति स्मृत्या रथस्य वेदं प्रति व्याप्यत्वेऽपि पूर्वपक्षिणा शूद्रेऽपि वेदाङ्गीकारान्न रथेन लिङ्गेन वेदानुमानद्वारा शूद्रत्वाभावसिद्धिः, तथाऽपि क्षत्रिये रथस्य स्वाभाविकत्वात्, तदन्यत्र चागन्तुकत्वात्, स्वाभाविकसम्भवे च नैमित्तिकग्रहणायोगात् साक्षाद्रथेनैव क्षत्रियत्वसिद्धिः। न च शूद्रश्रुतेः स्वारस्याय लिङ्गस्यास्वारस्यमिति युक्तं, "हारित्वा तवैव" इति इत्वशब्दार्थरथसम्बन्धवाचिन्याः 'तव' इति षष्ठ्याः क्षत्रियत्वे लिङ्गत्वेऽपि रथसम्बन्धे श्रुतित्वात्। वाक्यशेषस्थं क्लृप्तं शुचाऽऽद्रवणरूपं योगं

प्रकाशः

**स्मृत्येति**। "यत्र वेदो रथस्तत्र" इति स्मृत्येत्यर्थः। **वेदाङ्गाकीरादिति**। तथैव प्रागुक्तेरिति भावः। 'तथापि' इत्यभ्युपगमवादः। भाष्योक्तसमाधेरपि "भाष्ये तु" इत्यादिना उपपादयिष्यमाणत्वात्। **स्वाभाविकत्वादिति**। अयं च सूत्रे 'चैत्ररथेन' इति सम्बन्धवाच्यणप्रत्ययप्रयोगसूचितस्समाधिः। ननु दुर्बलेन लिङ्गेन कथं श्रुतिबाधः, वैपरीत्यस्यैवौचित्यादित्याशङ्क्य निराह—**न चेति**। 'अस्वारस्यं' आगन्तुकपरत्वम्। **सम्बन्धेति**। "षष्ठी शेषे" इति स्वस्वामिभावादौ षष्ठ्या विधानात् सम्बन्धस्यागन्तुकत्वेऽपि श्रुतिबाधादित्यर्थः। ननु उभयोः श्रुतित्वाविशेषे निर्णयो न स्यात्। प्रत्युत 'शूद्र' इति प्रातिपदिकश्रुत्या प्रबलया प्रत्ययश्रुतेरेवास्वारस्यं युक्तमित्यत आह—**वाक्येति**। "कंम्वर एनमेतत्सन्तं सयुग्वानं

चन्द्रिका

विहाय "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयांचक्रे । सर्वत एव मेऽत्स्यन्ति" इत्यादिपूर्ववाक्यस्थेन सर्वत आवसथनिर्माणादिना, तथा "अयं ग्रामो यस्मिन्नास्से" इत्याद्युत्तरवाक्यस्थेन ग्रामेशत्वादिना, तथा

राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः ।

इत्यादिस्मृत्या च क्षत्रियत्वावगतेस्तद्विरुद्धरूढिग्रहणायोगाच्च ।

प्रकाशः

रैक्कमिवात्थ" इति हंसकृतानादरश्रवणेन तस्य शोकोत्पत्तेः "स ह संजिहान एव क्षत्तारमुवाच" इति शयनादुत्थानानन्तरमेव रैक्कान्वेषणवचनलिङ्गेनावगमात्, तेन च मुनिं प्रत्याद्रवणात् शुचाद्रवणरूपो योगः स इत्यर्थः । 'विहाय' इत्यस्य 'तद्विरुद्धरूढिग्रहणायोगाच्च' इत्यन्वयः । एतच्च आद्यसूत्रभाष्यतात्पर्यादिकथनम् । ननु मुनिना सर्वज्ञेन तदीयं शुचा द्रवणं विज्ञाय तदभिप्रायेणैव 'शूद्र' इति सम्बोधितः पौत्रायण इत्यत्र न किञ्चित्कल्पकं, येन तथा जानीम इत्यत आह—**जानश्रुतिरति** । 'आवसथान्' आवासस्थानानि, सर्वत आगत्य मे अन्नमत्स्यन्तीति बुद्ध्या कारयामासेत्यर्थः । यस्मिन् 'आस्से' वर्तसे । "आस उपवेशने" इत्यस्य मध्यमपुरुषैकवचनम् अयं ग्रामस्तुभ्यं दीयत इत्यर्थः ।

........................................ मुनिनोदितः ।

चन्द्रिका

अत एव सूत्रे "क्षत्रियत्वावगतेः" इत्येवोक्तम् । भाष्ये त्वागन्तुकस्यापि रथस्य वेदं विनाऽयोगात्, वेदस्य च "संस्कारपरामर्शात्" इत्याद्युत्तरसूत्ररीत्या शूद्रे अयोगाद्रथेन वेदानुमानद्वारेणाशूद्रत्वसिद्धिरुक्ता । यद्वा—निषादस्य वेदाभावेऽपि तात्कालिको-

प्रकाशः

प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान् ।

इति च्छान्दोग्यभाष्योदाहृतस्मृत्येत्यर्थः । स्वाभाविकेन रथेनैव साक्षात् क्षत्रियत्वावगमो न वेदद्वारेत्युक्तम् । तत्र सौत्रं ज्ञापकमाह— अत एवेति । इत्येवोक्तं, नतु लिङ्गाद्वेदानुमानद्वारा क्षत्रियत्वावगतेरित्युक्तमित्यर्थः । यद्वा—न त्वशूद्रत्वावगतेरित्युक्तमित्येवकारार्थः, पारम्पर्याश्रयणे हि तथा निर्देशस्स्यादिति भावः । एवं सति भाष्ये पारम्पर्यानुसरणं किमर्थमाश्रितं, कथमुपपद्येत च, शूद्रेऽपि वेदाभ्युपगमात्, त्रैवर्णिकमात्रचिह्नेन रथेन त्रैवर्णिकविशेषक्षात्रियत्वावगमायोगाच्चेत्यतोऽभिप्रायं द्वेधा व्यनक्ति—भाष्ये त्विति । उत्तरसूत्रेति । व्यक्तमेतदनुपदमेवेति भावः । अशूद्रत्वेति । एतेनास्मिन् पक्षे भाष्यादौ क्षत्रियत्वपदमशूद्रत्वपरमिति सूचितम् । अत एव टीकायां "नन्वेवं वैदिकमात्रे विद्यमानं रथित्वं कथं क्षत्रियत्वे लिङ्गम्" इत्याक्षिप्य रथस्य क्षात्रिये स्वाभाविकत्वेनैव समाधानमुक्तमिति भावः । नन्वेवं सूत्रादावशूद्रत्वावगतेरित्येव वाच्यं, लाघवादिति चेन्न, वस्तुतस्तस्य क्षत्रियत्वेन तदभिप्रायात् । स्वाभाविकरथस्वीकारपक्षे तथैव वक्तव्यत्वाच्चेति ध्येयम् ।

चन्द्रिका

पदेशात् "एतया निषादस्थपतिं याजयेत्" इति वाक्यविहितस्थपतीष्टिमात्र इव पौत्रायणस्यापि शूद्रत्वेन वेदाभावेऽपि संवर्गविद्यामात्राधिकारोऽस्त्विति शङ्कानिरासायागन्तुकस्यापि रथस्य वेदव्याप्यतोक्ता भाष्ये। विप्रक्षत्रार्थमपलायनमपि शूद्रस्य पदातितयैवेति टीकायामेवोक्तम्। न च पौत्रायणेन रैक्काय दीयमानो रथोऽन्यदीय इति युक्तं, स्वत्वाभावे दानायोगात्। स्वतःप्राप्ततदीयत्वे बाधकाभावाच्च। "तवैव सह गोभिः" इति वाक्यशेषविरोधाच्च।

प्रकाशः

इति शङ्कानिरासायेति। विद्यामात्रेऽधिकाराभावेऽपि तद्विशेषसंवर्गविद्यायामधिकारोऽस्त्वित्याशङ्कायां, शूद्रे वेदाभावेन तद्व्याप्यरथोऽपि नेति नायं संवर्गविद्यायामधिकारीति वक्तुं वेदव्याप्यतोक्ता भाष्ये इत्यर्थः। ननु शूद्रे स्वाभाविकस्यागन्तुकस्य वा रथस्यायोगेन नायं शूद्रशब्दो रूढ इति यदुक्तं, तदयुक्तं,

अपलायनं हि शूद्रस्य विप्रक्षत्रार्थमिष्यते।

इत्यष्टादशाध्यायगीतातात्पर्योक्तस्मृत्या शूद्रस्यापि युद्धप्रतीत्या रथवत्त्वसिद्धेरित्यत आह—विप्रेति। "न च वाच्यं पौत्रायणेन दीयमानः" इत्यादिटीकां विवृण्वन् लिङ्गस्यान्यथासिद्धिमाशङ्क्य निरवकाशतामाह—न चेति। एवं पूर्वार्धविवरणमुखेन टीकाभाष्यार्थं प्रपञ्च्य "रथकार" इत्युत्तरार्धं व्यनक्ति—रथकारेति॥

स्वयं बाधकभावाभावाभ्यां रथकारशब्दवैषम्यमुक्त्वाऽन्योक्तं वैषम्य

चन्द्रिका

मनूद्य तस्माद्बाधकाच्छूद्रशब्दे रूढित्यागः, रथकारादिशब्देषु तु न रूढिबाधकमस्तीति वैषम्यम् ॥

यत्तूक्तं परैः, शूद्रशब्दस्यार्थवादस्थत्वात् रूढित्यागः, रथकारशब्दस्य तु विधिवाक्यस्थत्वात्तदत्याग इति वैषम्यमिति, तन्न, मीमांसकमते अर्थवादानां स्वार्थपरत्वाभावेऽपि परमते असति बाधकेऽर्थवादेष्वपि स्वार्थात्यागस्य, सति बाधके विधावपि स्वार्थत्यागस्य सत्त्वेन तौल्यात् । "अह हारेत्वा शूद्र" इत्यस्यार्थवादस्य विधिसन्निध्यभावाच्च । किञ्चाध्ययनमुपनयनसापेक्षं, शूद्रे उपनयनाभावश्च भाष्योक्तश्रुत्यादिसिद्ध इति कथं शूद्रस्याध्ययनम् ।

प्रकाशः

प्रत्याह—यत्त्विति । "वर्षासु रथकारोऽग्नीनादधीत" इत्याधानविधिवाक्यस्थत्वादित्यर्थः । स्वार्थात्यागस्येति । अन्यथा पूर्वाधिकरणे देवताविग्रहाद्यसिद्ध्यापत्तेरिति भावः । स्वार्थत्यागस्येति । "ब्रह्मजिज्ञासा, तद्विजिज्ञासस्व" इत्यादौ विचारलक्षकत्वाद्युक्तेरिति भावः । विधिसन्निधीति । तथात्वे वायुक्षेपिष्ठादिवाक्यवद्विध्येकवाक्यतया विधेयस्तुतिपरत्वेन स्वार्थे तात्पर्याभावात् तत्त्यागः स्यान्नचैवमित्यर्थः । एवं द्वितीयसूत्रभाष्याद्युक्तरथवत्त्वलिङ्गरूपबाधकोपपादनेन आद्यसूत्रभाष्याद्युक्तयोगं समर्थ्य न शूद्रस्याधिकार इत्युक्त्वा, यत्पूर्वमुक्तं शूद्रस्याप्यध्ययनादिसत्त्वादस्त्यधिकार इति, तदिदानीं "संस्कारपरामर्शात्" इति सूत्रभाष्यटीकार्थविवरणेन निराकर्तुमाह—किञ्चेति । श्रुत्यादीति । "नाग्निर्नयज्ञो न संस्कारो न व्रतानि

चन्द्रिका

न च "अष्टवर्षं ब्राह्मणमुपनयीत। तमध्यापयीत" इति श्रुतौ-ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा, नान्यत्रेति युक्तं, "तमध्यापयीत" इत्यत्रोपनीतमात्रपरामर्शात्। "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधेरनिर्दिष्टकर्तृकत्वेन प्रकृतोपनीतानामेव कर्तृत्वेनान्वयाच्च।

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना।

इति स्मृत्या उपनयनाख्यद्वितियजन्मवत एव अध्ययनविधानाच्च। न च "नाग्निर्न यज्ञो न संस्कारः" इत्यादिश्रुतौ शूद्रे संस्कारादेरभावोक्तिमात्रं न तु प्रतिषेध इति शङ्क्यम्, संस्काराभावेऽपि तत्सापेक्षाध्ययनाभावसिद्धेः। सामान्यविधिप्राप्तयज्ञाद्यभावोक्तेः तत्प्र-

प्रकाशः

शूद्रस्य" इत्यादिसिद्ध इत्यर्थः। यद्यप्यनुपनीतस्यैवाध्ययनमस्त्विति, तदाशङ्क्य सौत्रपरामर्शशब्दार्थव्यञ्जनेन निराह—**न चेति**। एतेन "अष्टवर्षं ब्राह्मणं" इत्यादिटीका विवृता। ननु तत्राध्यापनाङ्गत्वमेव श्रुतं, न त्वध्ययनाङ्गत्वमित्यत आह—**स्वाध्याय इति**। तथा चैतदनुरोधात् "अध्यापयीत" इत्यत्राप्यध्ययनविधावेव तात्पर्यं, हितैषिपित्रादिना शिक्षणीयो बालक इति भावेनाध्यापनोक्तिरिति भावः। **द्वितीयजन्मवत एवेति**। एतेन टीकायां स्मृत्युक्तेः फलं सूचितं भवति। "तदभावाभिलापात्" इत्यस्य अध्ययनाभावे हेतुत्वं स्पष्टयति—**न च नाग्निरिति**। **सामान्येति**। स्वर्गकामादिमात्रोद्देशेन यागादिविधिप्रवृत्तेः तादृशयागादेरभावोक्त्यन्यथा-

चन्द्रिका

तिषेधं विनाऽयोगाच्च। टीकायां प्रतिषेधं विनाऽप्यभावोक्तिसम्भवमुपेत्योत्तरसूत्रमवतारितम्। न च शूद्रस्याध्ययनाभावेऽपि लिखितपाठादिना वेदार्थावधारणं, भाष्योक्तश्रुत्याऽर्थावधारणादेरपि निषेधात्। विदुरादेस्तु जन्मान्तरसिद्धापरोक्षज्ञानत्वेनेतरशूद्रवैलक्षण्यान् वेदार्थावधारणेऽपि न दोषः। उत्तमस्त्रीणां तु,

सपत्नीं मे पराधम पतिं मे केवलं कुरु।

इत्यादिभाष्योक्तलिङ्गात्, तथा—

आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके।
यथोर्वशी यमी चैव शच्याद्याश्च तथा पराः॥

प्रकाशः

नुपपत्त्या निषेधसिद्धिरित्यर्थः। टीकाविरोधमाशङ्क्याह—**टीकायामिति**। यदप्युक्तमथवाऽनधीयानस्येति, तत् "श्रवणाध्ययनार्थ" इति सूत्रभाष्याद्यर्थव्यक्त्याऽपाकरोति—**न च शूद्रस्येति**। "श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणं" इत्यादिश्रुत्येत्यर्थः। "कथं विदुरधर्मव्याधादीनां वैदिकार्थावधारणमस्ति" इत्यादिटीकोक्तशङ्कां हृदि कृत्वा भाष्याद्युक्तमेव समाधिमाह—**विदुरादेस्त्विति**। "नन्वेवं संस्काराभावेन वेदानधिकारश्चेदुत्तमस्त्रीणां अनधिकारप्रसङ्गः" इत्यादिशङ्कोत्तरटीकां विवृणोति—**उत्तमेति**। **लिङ्गादिति**। शच्यादीनां "सपत्नीं मे" इत्यादिविद्याद्रष्टृत्वलिङ्गादित्यर्थः। 'अस्त्यधिकारः' इत्यन्वयः। एतद्भाष्याद्युक्तमुपलक्षणं मत्वाऽऽह—**तथेति**।

चन्द्रिका

इत्यादिस्मृतेः, तथा बृहदारण्यके "एतद्वै तदक्षरं गार्गि एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यक्षरविद्यायां गार्ग्याःसम्बोधनात्, तथा "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यत्र "अरे" इत्यनेन मैत्रेय्याःसम्बोधनात्, तथा "भवति ते व्याख्यास्यामि" इति मैत्रेयीं सम्बोध्य "व्याचक्षाणस्य तु मे निदिध्यासस्व" इति निदिध्यासनविधानात्, तथा प्रदानकर्मण एवोपनयनप्रतिनिधित्वेन संस्कारसद्भावाच्चास्त्यधिकारः। एतेन स्त्रीमात्रस्यानधिकार इति परमतं परास्तम्। एवञ्च शूद्रस्य "न यज्ञः" इत्यादिनिषेधादेव कर्मानधिकारः, न तु ज्योतिष्टोमादिकर्मणां आह-

प्रकाशः

**इत्यादिस्मृतेरिति**। जिज्ञासासूत्रभाष्योक्तस्मृतेरित्यर्थः। "भवति ते" इत्यत्र 'हे भवति' इति सम्बोधनं, 'ते' तुभ्यमित्यर्थः। **एतेनेति**। उदाहृतानेकमानसिद्धलिङ्गदर्शनेनेत्यर्थः। एवं रथवत्स्वरूपात् अध्यापनाङ्गोपनयनाभावादिरूपाच्च बाधकाच्छूद्रशब्दस्य रूढित्यागान्न शूद्रस्याधिकार इत्युक्तम्। इदानीं भाष्ये "न संस्करो न व्रतानि शूद्रस्य" इत्येतावत्येवोदाहर्तव्ये यत् "नाग्निर्न यज्ञः" इत्यंशस्याप्युदाहरणं, तेन शूद्रस्य यज्ञानधिकारोऽपि निषेधादेव, न तु मीमांसकरीत्येति सूचितमिति, तत्प्रपञ्चयति—**एवं चेत्यादिना**। "चातुर्वर्ण्यमविशेषात्" इति षष्ठाद्यपादीयापशूद्राधिकरणसिद्धान्तमनुवदति—**ज्योतिष्टोमेति**।

चन्द्रिका

वनीयाद्यग्निविद्यासाध्यत्वात्, । तयोश्चाधानोपनयनाधीनत्वात्, तयोश्च वसन्तादिवाक्याभ्यां त्रैवर्णिकानामेव विधानात्, तेषामेवाधिकारात्

प्रकाशः

**त्रैवर्णिकानामेवेति** । द्वितीयस्य तृतीयपादे "आधाने सर्वशेषत्वात्" इति तृतीयेऽधिकरणे "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति, तथा "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं" इति वाक्यद्वयमुदाहृत्य, किं ब्राह्मणादीनामाधानोपनयनयोः प्राप्तानां वसन्तादिकालविधानं प्रति निमित्तार्थान्येतानि वचनानि उत तेषामप्राप्ताधानोपनयनविधिपराणीति संशये, अग्निविद्याभ्यां विना क्रत्वनुष्ठानासंभवात् तयोश्च आधानो, पनयनाधीनत्वात् क्रतुविधिभिरेवाग्निविद्यासाध्यैस्तदुपायभूतयोराधानोपनयनयोराक्षेपतः प्राप्तेस्तयोः कालविधानाय निमित्तार्थानीति प्राप्ते वसन्तादिवाक्येषु तावत् यद्शब्दाभावाद्वाक्यान्तरविहिताधानो पनयनविपरिवृत्त्यभावाच्च क्रियादिविधिरेव प्रतीयते, क्रतुविधयोऽप्यग्निविद्यामात्रसाध्याः, तथाऽपि न सर्वे तेनैव निष्पाद्याः, अन्येन निष्पादितानामपि अन्येन क्रियादिभिः प्राप्तिसंभवात्, तथा विद्याऽपि पुस्तकनिरीक्षणाद्युपायसम्भवात् नैकान्तेनोपनयनमाक्षिपतीत्याधानोपनयनयोः प्रापकाणीति सिद्धान्तितत्वात् त्रैवर्णिकानामेव विधानमित्युक्तम् । 'तेषामेवाधिकारात्' इत्यनन्तरं 'शूद्रस्य आधानोपनयनयोरभावात् तत्साध्ये यज्ञादौ नाधिकारः' इत्येतावद्योज्यम् ।

चन्द्रिका

इति मीमांसकोक्तरीत्याऽनधिकारः, अनग्नित्वेनानधिकारे रथकाराख्यसङ्करजातेरप्यनधिकारापातात्, "वर्षासु रथकार आदधीत" इति श्रुत्या तस्याप्याधानोपगमात्। "कृत्तिकास्वग्निमादधीत; नक्तं

प्रकाशः

यत्तावदनग्नित्वादनधिकार इति तत्तावन्नेत्याह—**अनग्नित्वेनेति**। **सङ्करजातेरिति**।

शूद्रायां करणो वैश्यान्माहिष्यो विट्स्त्रियां नृपात्।
रथकारस्तु माहिष्यात्करण्यां यस्य सम्भवः॥

इत्युक्तसङ्करजातेरित्यर्थः। किञ्च शूद्रमात्रेऽप्यसिद्धमनग्नित्वं, तस्याप्याधानसम्भवात्। न च वसन्तादिवाक्यान्याधानपराणीत्युक्ततया तैर्ब्राह्मणादीनामेव आधानविधानं, न शूद्रस्येति वाच्यं, तेषां वाक्यानां प्राप्ताधानानुवादेन कालविधिपरतया ब्राह्मणादीनामाधानाविधायकत्वात्। न चाक्षेपतः प्राप्तेः निरस्तत्वात् "य एवं विद्वानग्निमाधत्ते" इत्यस्य च सामान्यवचनस्य वर्तमानापदेशकत्वेनाविधायकत्वात् प्राप्त्यभाव इति वाच्यं, वाक्यान्तरैः प्राप्तिसम्भवादिति भावेनाह—**कृत्तिकास्विति**। आदिपदेन "दिवाऽऽहवनीयं, त्रिभिर्गार्हपत्यमादधाति, पञ्चभिराहवनीयं" इति वचनं गृह्यते। तत्र कर्तृविशेषानुपादानेन चतुर्वर्णाधिकारिकत्वसम्भवादिति भावः। ननु कृत्तिकादिवाक्यप्राप्ताधानानुवादेन न वसन्तादिवाक्ये कालविधिश्शङ्क्यः, वसन्तादिब्राह्मणादिरूपगुणद्वयश्रवणात्।

चन्द्रिका

गार्हपत्यमादधीत" इत्यादिना शूद्रस्याप्याधानविधिः, वसन्तादिवाक्यानि तु गुणद्वययुक्तत्वेऽपि विधिलाघवाय सामान्यविषयेण कृत्तिकादिवाक्येन प्राप्तब्राह्मणादीनां वसन्तादिनियमपराणि, शूद्रस्य तु ऋत्वन्तरे आधानमित्यपि सुवचत्वाच्च। उपनयनहोमस्थपती-

प्रकाशः

प्राप्ते कर्मणि नानेको गुणो वाक्ये विधीयते।
अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नतः॥

इत्युक्तेः। 'आदधीतेति यत् तद्वसन्ते, स च ब्राह्मणः' इति वाक्यभेदापत्तेरित्यत आह—**वसन्तादीति**। अत्यन्ताप्राप्तविध्यपेक्षया नियमविधेर्लघुत्वादित्यर्थः। **प्राप्तेति**। तथा च ब्राह्मण आदधीतेति यत् तद्वसन्ते इत्यादिरूपेण अन्वयान्न वाक्यभेद इत्यर्थः। **शूद्रस्य** कालविधायकाभावादाह—**ऋत्वन्तर इति**। किञ्च किमेतेन अग्निमत्त्वोपपादनक्लेशेन, निषेधादेव शूद्रस्य अनधिकारानङ्गीकारे क्रतुविधीनां स्वर्गादिकामनावन्मात्राधिकारिकत्वाच्छूद्रस्यापि कामनावत्त्वेन तदधिकारप्राप्तौ नाग्न्यभावेन तन्निरासः, लौकिकेऽग्नावपि तदनुष्ठानसम्भवात्। न च वैदिककर्मणो अवैदिकेऽग्नावनुष्ठानमदृष्टचरं, बहुषु दृष्टत्वादित्याह—**उपनयनेति**। षष्ठस्याष्टमे पादे "उपनयन्" इति द्वितीयेऽधिकरणे उपनयनाङ्गभूता माणवककर्तृकहोमाः किं आहवनीये स्युरुत लौकिक इति संशये, तेषां माणवककर्तृकतया तद्भावेव कर्तव्यतयोपनयनात् प्रागधीत्य भार्या-

चन्द्रिका

ष्ट्यवकीर्णिब्रह्मचार्यधिकारिकयागादिवल्लौकिकाग्नौ शूद्रस्यापि यागसम्भवाच्च। उक्तं हि षष्ठे अनेकैरधिकरणैरुपनयनहोमादयो

प्रकाशः

मुद्वाह्याग्नीनाधायाहवनीये तान् कुर्यादिति प्राप्ते, आधानस्य विद्वदधिकारिकत्वात् उपनयनात्पूर्वं तदयोगान्नाधानमिति लौकिक एवोपनयनहोमा इत्युक्तम्। तथा "स्थपतीष्टिः प्रयाजवत् अग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत" इति तृतीयेऽधिकरणे "एतया निषादस्थपतिं याजयेत्" इति स्थपतीष्टिः किमाहितेऽग्नावुत लौकिक इति सन्देहे, प्रकृतितः आहवनीयादिप्राप्तेस्तस्य च आधानाधीनत्वात् असत्यप्याधानविधौ इष्टिविधिबलादेव तदाक्षेपादाहित इति प्राप्ते, वसन्तादिवाक्यविहिताधानजन्यसंस्कारवाचित्वादाहवनीयादिशब्दानां स्थपतिकृतेनाधानेन चाविहितेन संस्काराप्रातीतेर्नाधानस्याक्षेप इति लौकिक एवेत्युक्तम्। तथा "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्" इति चतुर्थेऽधिकरणे "यो ब्रह्मचार्यवकिरेत् स गर्दभं पशुमालभेत" इति विहितो यागः क्व कार्य इति पूर्ववत्सन्देहे, ब्रह्मचारिणः त्रैवर्णिकत्वात् विद्वत्त्वाच्च स्नात्वा भार्यामुद्वाह्याग्निमाधाय तत्र कुर्यादिति प्राप्ते, अपराधकृतब्रह्मचर्यविप्लवमसमाधाय गार्हस्थ्यप्रवेशायोगात्,

अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्।

इति विधानात् अपत्नीकस्याधानाभावात् लौकिक एवेत्युक्तमित्यर्थः।

चन्द्रिका

लौकिकाग्नाविति । अग्न्यसाध्यसन्ध्योपासनादौ उपनीतमात्रस्य ब्राह्मणादेरध्ययनात् प्रागिव शूद्रस्याप्यधिकारापरिहाराच्च । अत एव षष्ठे "उदङ्मुखो मूत्रं कुर्यात्" इत्यादिस्मार्तनियमाः अग्न्यसाध्यत्वादनुपनीतस्यापीति प्राप्ते, "उपनयनादिर्नियमः" इति वचनबलादेवोपनयनप्रभृति स्युरित्युक्तम् । नाप्यविद्यत्वादनधिकारः, अध्ययनाभावेऽपि रथकारादेराधानादिज्ञानस्येव, ब्राह्मणादेरपि स्वशाखेतरशाखाविहिताङ्गज्ञानस्येव, शूद्रादेरपि "ब्राह्मणो न हन्तव्यः" इत्यादिनिषेधवाक्यार्थज्ञानस्येव च उपदेशादिना शूद्रस्यापि ज्योतिष्टोमादिज्ञानस्यापि सम्भवात् । त्वन्मते "स त्रिभिर्वेदैर्विधीयते" इति वेदान्तराध्ययनस्य विहितत्वेऽपि "स्वाध्यायोऽध्येतव्यः" इत्यत्र स्वाध्यायशब्दस्य स्वस्वशाखामात्रपरत्वेनैकवेदगतशाखान्तराध्ययनस्याविहितत्वात् । किञ्च त्वया

प्रकाशः

निषेधाननुसरणे बाधकान्तरमाह—अग्न्यसाध्येति । एतेन विद्वत्ताभावादनधिकार इति निरस्तं, सन्ध्योपासनादाववर्जनीयत्वात् । अत एवेति । अग्न्यसाध्ये अनग्नेरप्यधिकारसम्भवादेवेत्यर्थः । षष्ठे द्वितीयपादे "तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्" इति षष्ठाधिकरणे इत्यर्थः । नियमः 'उपनयनादिः' उपनयनानन्तरभावीति वचनार्थः । एवमनग्नेरनधिकार इति निरस्तम् । अविद्वत्त्वात्स इत्येतन्निराचष्टे—नापीति । ब्राह्मणादेरपीत्येतदुपपादयति—त्वन्मत इति । मीमांसकमते । स्वस्वेति । स्वत्वस्य विव-

चन्द्रिका

सर्वशक्तिनये अन्धादेराज्यावेक्षणाद्यङ्गहानेन शक्याङ्गोपसंहारेण नित्यकर्माधिकारोऽङ्गीकृतः। एवञ्च तद्वदेव शूद्रादेरप्यग्निविद्याहानेनाङ्गान्तरोपसंहारेण नित्येष्वधिकारः किं न स्यात्। अग्निविद्ये प्रयोगात् बहिरेव सम्पाद्ये। आज्यावेक्षणादि तु प्रयोगमध्येऽनु-

प्रकाशः

क्षितत्वादित्यर्थः। **सर्वशक्तीति**। षष्ठस्य तृतीये पादे "सर्वशक्तौ प्रवृत्तिस्स्यात् तथाभूतोपदेशात्" इति प्रथमाधिकरणे "यावज्जीवमग्निहोत्रं जुहोति" इत्यादौ किं सर्वाङ्गोपसंहारशक्तानामेवाधिकार उत यस्तु यावन्ति शक्नोत्युपसंहर्तुं तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति सन्देहे, सर्वेषामङ्गानां समुच्चयेनेत्थम्भावसम्बन्धात्सर्वाङ्गोपेतमेव कर्म फलसाधनमिति न हीनाङ्गस्यानुष्ठानमिति प्राप्ते, यावच्छब्दोपबृंहितं जीवनं यागानुरक्तां भावनां प्रति निमित्तत्वेन ज्ञायते, दर्शपूर्णमासशब्दविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामेव वाचको नाङ्गानाम्, निमित्तस्य चैतद्रूपं, यस्मिंत्सति नैमित्तिकमवश्यं कार्यमिति, अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तावश्यकत्वानुरोधेन यथासम्भवमङ्गानि गृह्णातीति यथाशक्ति प्रयोग इति सिद्धान्तितत्वात् तद्वदेव शूद्रस्याप्यधिकारः स्यादित्यर्थः। ननु आज्यावेक्षणादेः प्रयोगात् प्रागनुपस्थितत्वादन्धादेरधिकारः तत्र युक्तो न त्वग्न्यादिहीनस्य, अग्न्याद्यभावस्य प्रागेवोपस्थित्या क्रत्वारम्भस्यैवायोगादित्यत आह— **अग्निविद्ये इति**।

चन्द्रिका

ष्टेयमिति तु वैषम्यमात्रं, प्रयोगात् प्रागेव प्रतिनियते काले अग्न्या-
दिवदाज्यावेक्षणादेरपि कर्तव्यतया प्रमातव्यत्वादित्यलम् ॥

अत्र चाद्ये सूत्रे 'तदाद्रवणात्' इत्यनेन शुचाद्रवणाच्छूद्र इति शूद्रश-
ब्दस्य यौगिकत्वोक्तिः, "शुगस्य तदनादरश्रवणात्" इत्यनेन शोके
कारणोक्तिः, 'सूच्यते हि' इत्यनेन शोके व्यग्रताख्यकार्यरूपलि-

प्रकाशः

किमिनेन प्रकृतानुपयुक्तप्रासङ्गिकप्रपञ्चनेनेत्याह—इत्यलमिति ॥

आद्ये सूत्रे इति । "शुगस्य तदनादरश्रवणात्तदा-
द्रवणात्सूच्यते हि" इत्यत्र "कम्बर एन मेतत्सन्तं सयुग्वानं
रैक्कमिवात्थ" इति तस्य हंसकृतस्यानादरस्य "तदुह जानश्रुतिः
पौत्रायण उपशुश्राव" इति पौत्रायणेन श्रवणादस्य शुक् शोक
आसीत्, तया शुचा आद्रवणात् पौत्रायणः "अह हारेत्वा शूद्र"
इति रैक्केण सम्बोधितो न तु वर्णावरत्वात् । सा हि शुक् "सह
सञ्जिहान एव क्षत्तारमुवाच" इत्युक्तव्यग्रतारूपकार्यलिङ्गेन सूच्यते
हीति टीकोक्तमर्थं निष्कृष्याह—तदिति । शुक्शब्दोपपदात्
"द्रु गतौ" इत्यस्माद्धातोरौणादिके डप्रत्यये गकारलोपे च 'शुद्र'
इति रूपम् । तथैव निर्देष्टव्ये यच्छूद्रेति उकारस्य दैर्घ्येण नि-
र्देशः, स तस्य शोकाधिक्यज्ञापनाय, "आधिक्येऽधिकम्"
इति सूत्रात् । अत एव सूत्रे तद्द्रवणादिति वक्तव्ये 'तदाद्रव-
णात्' इति आङ्प्रयोग ऊकाररूपदीर्घस्वरार्थज्ञापनाय प्रयुक्त

चन्द्रिका

ङ्गोक्तिः। द्वितीये वाक्यशेषस्थस्य रूढिबाधकस्योक्तिः। तत्र रथस्या-न्यदीयत्वशङ्कानिरासाय भावप्रधानेन चैत्ररथशब्देन पौत्रायणस्य चित्ररथसम्बन्धित्वमुक्तम्। अन्यथा 'चित्ररथेन' इत्येवावक्ष्यत्। तत्र च रथमात्रमेव लिङ्गं, चित्रपदं तु स्वरूपकथनार्थं, अश्वतरीयुक्तापूर्व-

प्रकाशः

इति टीकायामेव व्यक्तमिति भावः। 'द्वितीये' "क्षत्रियत्वावगते-श्चोत्तरत्र चैत्ररथेन लिङ्गात्" इत्यत्र। "अह हारेत्वा शूद्र" इति सम्बोधनादुत्तरवाक्ये "अयमश्वतरीरथः" इति चित्ररथब्दिता-श्वतरीयुक्तरथसम्बन्धित्वरूपाल्लिङ्गात् पौत्रायणस्य क्षत्रियत्वावगतेरि-त्युक्तत्वादिति भावः। तत्र 'चैत्ररथेन" इति तद्धितस्य भावा-र्थत्वप्रतीतिं वारयति—तत्रेति। चित्रश्चासौ रथश्च चित्ररथः, चित्ररथस्यायं चैत्ररथः, "तस्येदम्" इत्यण्प्रत्ययः, सम्बन्धश्च स्वाभाविकः स्वस्वामिभावरूपः। स च भावप्रधानः, चैत्ररथत्वेनेत्यर्थः। ननु चित्रशब्दस्यैव

रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते।

इति स्मृत्या अश्वतरीयुक्तरथवाचित्वाच्चैत्रेण लिङ्गादिति वक्तव्यं, न तु 'रथेन' इति चेत्, सत्यं, यथा भक्तिशब्दस्य ज्ञानस्ने-होभयवाचित्वेऽपि "ज्ञानभक्ती" इत्यादौ भक्तिशब्दस्य एकदे-शस्नेहमात्रार्थत्वं, तथेहाप्यश्वतरीयुक्तविशेषणमात्रार्थकत्वात् चित्रशब्द-स्य। चैत्रेणेत्युक्तौ तस्यानेकार्थत्वात् शिष्याणां व्यामोहः स्यात्।

चन्द्रिका

रथयोगेन क्षत्रियत्वसम्भावनार्थं वा। तृतीयापञ्चम्योर्हेतुरूपैकार्थत्वात्, व्यत्ययेन तृतीयायाः पञ्चम्यादेशाद्वा "रथेन लिङ्गात्" इति सामानाधिकरण्यम्। अत एवोक्तं भाष्ये—"चित्ररथसम्बन्धित्वेन लिङ्गेन" इति। तृतीये रूढिबाधके शूद्रस्याप्यध्ययनाङ्गोपनयनाभावे श्रुत्यन्तरोक्तिः। चतुर्थे तत्रैव श्रुत्यन्तरस्थलिङ्गोक्तिः। पञ्चमे तु उपनयनाद्यभावेऽपि

प्रकाशः

स मा भूदिति रथशब्दोऽपि प्रयुक्तः। तर्हि 'चैत्ररथाल्लिङ्गात्' इति वाच्यमित्यत आह—तृतीयेति। "हेतौ" इति सूत्रे हेतुत्वे तृतीयाविधानात् "विभाषा गुणेऽस्त्रियाम्" इत्यत्र 'हेतौ' इत्यनुवर्त्य पञ्चमीविधानात् परतन्त्रमात्रस्य गुणत्वोक्तेरित्यर्थः। 'तृतीये', "संस्कारपरामर्शात् तदभावाभिलापाच्च" इत्यत्र। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिश्रुतावध्ययनार्थमुपनयनरूपसंस्कारपरामर्शात्, "नाग्निर्न यज्ञः" इति श्रुतौ च शूद्रस्य तदभावाभिलापाच्चायं शूद्रशब्दो न रूढ इत्यर्थोक्तेरिति भावः। 'चतुर्थे' "तदभावनिर्धारणे च प्रवृत्तेः" इत्यत्र। गौतमस्य "नाहमेतद्वेद यद्गोत्रोऽहमस्मि" इति सत्यकामवचनेन "नैतदब्राह्मणो विवक्तुमर्हति" इति शूद्रत्वाभावनिर्धारण एव "समिधं सोम्याहरोप त्वा नेष्ये" इति तदुपनयने प्रवृत्तेः, सा च शूद्रोपनयननिषेधाभावे न युक्तेति श्रुत्यन्तरगतस्य शूद्रत्वाभावनिश्चयेन प्रवृत्तिरूपलिङ्गस्योक्तिरित्यर्थः। 'पञ्चमे' "श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च" इत्यत्र। "श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणं"

चन्द्रिका

अध्ययनाद्यस्त्विति शङ्काया निरासः। यद्यप्यत्राद्यसूत्रस्थपरपक्ष-साधकनिरासादपि द्वितीयादिस्थस्वपक्षसाधकमेव पूर्वं वक्तव्यं, तथा-ऽपि परेण शूद्रशब्दबलादेव सिद्धान्ते हेतूनामन्यथयितत्वेन तन्नि-रासं विना तेषामसिद्धेः, तथा परसाधकनिरासे यत्नाधिक्यात् स्वपक्षसाधकानां तु स्फुटत्वात् तेषां पश्चादुक्तिरिति सूत्रक्रमः॥

अन्ये तु अध्ययनस्य पिण्डपितृयज्ञादिवत् स्वर्गार्थत्वेन पुरुषार्थ-तया स्वाध्यायसंस्कारत्वाभावात्, अधीतेनैव स्वाध्यायेन जन्यब्र-ह्मज्ञानान्मोक्ष इति नियमाभावात्, शूद्रस्याप्युपनयनाभावेऽपि पुस्त-कपठितस्वाध्यायजन्यादपि ब्रह्मज्ञानान्मोक्ष इति शूद्रस्यापि ब्रह्म-

प्रकाशः

इत्यादिश्रुतौ शूद्रस्य वेदश्रवणाध्ययनार्थावधारणानां प्रतिषेधात्,

नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः।

इति स्मृतेश्चेत्युक्तेरिति भावः। **परपक्षसाधकेति**। शूद्रशब्दरूढेः परपक्षसाधकत्वात्, रथवत्त्वरूपलिङ्गस्य स्वपक्षसाधकत्वादित्यर्थः।

**अन्ये त्विति**। "स्वाध्यायोऽध्येतव्यः" इत्युक्ताध्ययनस्य प्रधान-कर्मत्वसंस्कारकर्मत्वाभ्यां ब्रह्मविद्या शूद्राधिकारा न वेति संशये, भामत्युक्तौ पूर्वोत्तरपक्षौ अनुवदति—**अध्ययनस्येति**। अनिर्दिष्टफल-कानां स्वर्गफलकत्वस्य—"स स्वर्गः स्यात्" इति विश्वजिदधिकरणे दर्शितत्वात् "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इत्या-देरनिर्दिष्टफलस्य स्वर्गफलकत्ववत्, "स्वाध्यायोऽध्येतव्यः" इत्यु-

चन्द्रिका

विद्याधिकार इति प्राप्ते, दृष्टे सम्भवत्यदृष्टस्याकल्पयत्वेनाध्ययनस्य स्वाध्यायसंस्कारत्वेनोक्तनियमसद्भावात्, पुस्तकपठितस्वाध्यायजन्यज्ञानान्न मोक्ष इति न शूद्रस्य वेदविद्याधिकार इति सिद्धान्तः। न चैवं पूर्वतन्त्रस्थापशूद्राधिकरणेन गतार्थता, तत्रापि अनधीयानस्य शूद्रस्याधीतस्वाध्यायजन्यविद्यासाध्यकर्मानधिकारार्थं विद्याभावोक्तेरिति वाच्यं, तत्रानग्नेः शूद्रस्याग्निसाध्यकर्मानधिकार इत्ये-

प्रकाशः

क्ताध्ययनस्याप्यनिर्दिष्टफलकत्वात् अनारभ्याधीततया फलवत्कर्मारम्यानाम्नानात् जुह्वादिवत्क्रत्वव्यभिचरितत्वाभावात् क्रत्वर्थत्वासंभवेन स्वर्गार्थतया पुरुषार्थत्वस्यैव वाच्यत्वात् । तथा च अध्ययनस्य 'स्वाध्यायेनाधीयीत स्वर्गकामः' इति वचनव्यक्त्या दर्शादिवत् प्रधानकर्मतया स्वाध्यायसंस्कारकत्वरूपगुणकर्मत्वं प्रोक्षणादिवन्नास्तीत्यर्थः। **दृष्टेति** । स्वाध्यायसंस्कारद्वारा निश्रेयसहेतुः कर्मब्रह्मरूपार्थावबोधोऽध्ययनस्य दृष्टं फलमित्यर्थः। **उक्तनियमेति** । अधीतेनैव स्वाध्यायेन जन्यब्रह्मज्ञानान्मोक्ष इति नियमसद्भावादित्यर्थः। **न शूद्रस्येति**। उपनयनसाध्याध्ययनाभावादिति भावः। अध्ययनाभावादागन्तुकसामर्थ्याभावे सत्यनधिकार इति चेत्, हन्त आधानाभावे सत्यग्न्यभावादग्निसाध्ये कर्मणि मा भूदधिकारः। न च ब्रह्मविद्यायां अग्निः साधनमिति किमित्यनाहिताग्नयो नाधिक्रियन्त इति भामत्युक्तगतार्थताशङ्कासमाधाने तदभिप्रायव्यञ्जनेन अनुवदति—**न चैवमिति**।

चन्द्रिका

वोक्त्या विद्याभावानुक्तेरित्याहुः। तन्न, तत्रापि "अवैद्यत्वादभाव-कर्मणि स्यात्" इति सूत्रे अवैद्यत्वग्रहणेन शूद्रस्य विद्याभावोक्तेः। ननु तत्रावैद्यत्वमभ्युच्चयमात्रं, अध्ययनस्य संस्कारत्वानुक्तेः। इह तु "संस्कारपरामर्शात्" इत्यनेन तदुक्तिरिति चेन्न, त्वयाऽपाहि सूत्रे संस्कारशब्द उपनयनरूपसंस्कारार्थ इत्युक्तत्वेनाध्ययनस्य स्वाध्यायसंस्कारत्वानुक्तेः। किञ्चास्मद्रीत्या "स्वाध्यायोऽध्येतव्यः" इति तव्योक्तस्य दृष्टार्थगुणकर्मत्वस्य स्वीकारेण पूर्वपक्षसंम्भवे तदस्वीकारेण स न युक्तः। अपि च पूर्वतन्त्रे

प्रकाशः

"अवैद्यत्वादभावः कर्मणि स्यात्" इति सूत्रेण विद्याभावोक्तेरित्यर्थः। **तत्रापीति**। पूर्वतन्त्रापशूद्राधिकरणे। **सूत्र इति**। गुणसूत्र इत्यर्थः। विद्यावान् वैद्यः, स न भवतीत्यवैद्यः, तत्त्वात्कर्मणि शूद्राधिकाराभाव इत्यर्थः। अवैद्यत्वमभ्युच्चयमात्रम्। अभ्युच्चयत्वं च अध्ययनविधेः पुरुषार्थत्वशङ्कायास्तत्र निरासात्, इह "संस्कारपरामर्शात्" इति अध्ययनविधेः संस्कारकर्मविषयत्वसमर्थनादिति कल्पतरूक्तमाशङ्कते—**ननु तत्रेति**। नन्वयमप्यर्थोऽत्राभिप्रेयत इत्यत आह—**किञ्चेति**। **तव्योक्तेति**। तव्यस्य कर्मणि स्मरणेनाध्ययनस्य स्वाध्यायसंस्कारकत्वरूपगुणकर्मत्वस्यैव प्रतीतेः, अन्यथा "ज्योतिष्टोमेन" इतिवत् 'स्वाध्यायेनाधीयेत' इति स्यादित्यर्थः।

चन्द्रिका

प्रथमसूत्र एवाध्ययनस्य दृष्टार्थताया उक्तत्वात् तेन गतार्थत्वस्य न परिहारः। कथं च त्वन्मते गतार्थत्वाशङ्का, ऐकशास्त्र्याभावात्। तत्रोक्तस्य वेदनित्यत्वादेरिहापि "अत एव च नित्यत्वम्" इत्यादा-वुक्तत्वङ्गीकाराच्च। किञ्च सिद्धान्ते "तदभावाभिलापाच्च" इति सूत्रे शूद्रोपनयनाभावस्य, "श्रवणाध्ययनार्थप्रतिषेधाच्च" इति सूत्रे अध्यय-नाभावस्य चोक्तत्वेनोपनयनाध्ययने उपेत्यैव पूर्वपक्षयितव्यम्। अध्यय-नस्य प्रधानकर्मत्वेन पूर्वपक्षे हि सिद्धान्ते तस्य गुणकर्मतैव वाच्या। अपि च

दशमस्त्वमसीत्यादिवाक्यादिव भवेद् ध्रुवम्।
तत्त्वमस्यादिवाक्याच्च शूद्रस्याप्यपरोक्षधीः॥

प्रकाशः

**प्रथमसूत्र इति।** "अथातो धर्मजिज्ञासा" इत्यत्र अध्ययनविधौ फलाश्रवणात् विश्वजिन्न्यायेन स्वर्गः कल्प्य इति प्राप्ते, दृष्टे सम्भवत्यदृष्टायोगादर्थावबोधः फलमित्युक्तत्वादित्यर्थः। **ऐकेति।** रामानुजमत इव पूर्वोत्तरतन्त्रयोरित्यर्थः। 'अत एव' जगतो वेदशब्द-प्रभवत्वादेव वेदशब्दनित्यत्वमपि प्रत्येतव्यमिति त्वया भाषितत्वा-दित्यर्थः। पूर्वपक्षस्य सूत्रावतारिकारूपस्य सूत्रपदनिवर्त्यस्यैव वक्तव्यत्वादेवंरूपपूर्वपक्षश्च न सूत्रानुगुण इत्याह—**किञ्चेति।** मोक्ष-हेतुशाब्दापरोक्षज्ञानस्यानधीयाने शूद्रेऽपि सम्भवात् सिद्धान्तोऽप्य-युक्त इत्याह—**अपि चेति।** नन्वप्रतिबद्धापरोक्षज्ञानमेव मोक्ष-

चन्द्रिका

अतिक्रान्तनिषेधस्य व्युत्पन्नस्य शूद्रस्य ब्राह्मणादेरिव पुस्तकपठितादविधिनाऽधीतादनधीताद्वा तत्त्वमस्यादिवाक्यात् 'दशमस्त्वमसि' इति वाक्यादिव ज्ञानं तावज्जायत एव। साक्षात्त्वं च ब्राह्मणादेरिवास्यापि विषयस्वभावादेव भविष्यति। प्रतिबन्धनिरासोऽपि मननानिदिध्यासनाभ्यां सेत्स्यति। यदि च परोक्षस्वभावस्यापि ब्रह्मण आपरोक्ष्यं लोकविलक्षणत्वाददृष्टविशेषसाध्यं, तर्हि तत एव तदापरोक्ष्यं सत्यस्यापि बन्धस्य निवर्तकं स्यात्। न च जातमपि ज्ञानं शूद्रकृतयागवन्न सफलमिति वाच्यं, अज्ञाननिवृत्त्याख्यदृष्टफले ज्ञानस्यान्यानपेक्षत्वात्। 'इयं शुक्तिः' इति वाक्यजं हि ज्ञानं शूद्रस्यापि शुक्त्यज्ञाननिवर्तकम्। अदृष्टद्वारा ईश्वरप्रसादद्वारा वा ज्ञानस्य बन्धनिवर्तकत्वं च परैर्नाङ्गीकृतम्। अङ्गीकारे च बन्धस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वोक्तिरयुक्ता स्यात्, अदृष्टनिवर्त्यत्वात्। विध्यतिक्रमेणोत्पन्नप्रत्यवायस्तु शूद्रस्य प्रपञ्चान्तर्गतत्वात् ज्ञानेन निव-

प्रकाशः

हेतुः, शूद्रस्य तु न तादृशमित्यत आह—प्रतिबन्धेति। **अदृष्टेति।** शूद्रस्य तदभावादिति भावः। 'तत एव' अदृष्टविशेषसाध्यत्वादेवेत्यर्थः। ननु उत्पन्नेऽपि ज्ञाने विध्यतिक्रमप्रत्यवायप्रतिबद्धत्वान्न कार्यक्षममित्यत आह—**विध्यतिक्रमेणेति।** त्रैवर्णिकेतरस्य अधिकारनिषेधः स्वन्यायविरुद्धश्च। अतोऽपि न सिद्धान्तो युक्त

चन्द्रिका

र्तिष्यते। किञ्च त्वयाऽध्यासभाष्ये "तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणि। तत्र जात्यध्यासो ब्राह्मणो यजेत" इत्यादि वदता ब्राह्मणत्वादिमच्छरीराभेदाध्यासवत एवाधिकारस्वीकारात् ब्राह्मणीप्रभृतिषु जातानामब्राह्मणादीनामपि ब्राह्मण्याद्यध्यासवत्त्वेनाधिकारः स्यात्। विस्तृतं चैतदन्यत्र। किञ्च

ऋजूपायेन तर्केण तत्त्वनिश्चयसम्भवे।
विप्रादेरपि वक्रैः किं साध्यं वेदविचारणैः॥

त्वन्मते मोक्षसाधनस्य 'चिन्मात्रं तत्त्वमन्यदारोपितम्' इति ज्ञानस्य खण्डनकारादिभिर्विज्ञानवाद्यादिभिर्वोक्तेन प्रमाणप्रमेयाद्यनुपपत्तिरूपतर्कानुगृहीतेन दृश्यत्वाद्यनुमानरूपेण ऋजूपायेन सिद्धौ, किं ब्रह्मा-

प्रकाशः

इत्याह——**किञ्चेति**। ब्राह्मणी-क्षत्रिया-वैश्यासु अब्राह्मणादिभ्यो जातानामित्यर्थः। क्षेत्रस्य ब्राह्मण्यादिना तेषु ब्राह्मणत्वादिजात्यध्याससम्भवादिति भावः। 'अन्यत्र' न्यायामृते देहात्मैक्याध्यासभङ्ग इत्यर्थः। एवं मोक्षहेतुज्ञानस्य स्वाध्यायजन्यत्वमुपेत्य तस्य त्वन्मते शूद्रेऽपि सम्भवात् अनधिकारसिद्धान्तो न युक्त इत्युक्तम्। इदानीं विनाऽपि स्वाध्यायमन्यस्मादपि जातात् ज्ञानान्मोक्षसम्भवात् मोक्षहेतुज्ञाने शूद्रोऽप्यधिक्रियेत। न च त्रैवर्णिकानां वेदजन्यमेव तथा दृष्टमिति वाच्यं, तत्राप्येवमेवोपपत्तेरित्याह— **किञ्चेत्यादिना**। **तर्केणेति**। प्रमाणादिनिर्वचनानुपपत्त्यादिरूपतर्केणेत्यर्थः।

चन्द्रिका

देरपि मानान्तराप्राप्तं सर्वकर्तृत्वसर्वज्ञत्वादिकं प्रापय्य पुनस्तन्निषेधमुखेन चिन्मात्रप्रतिपादकेन अनेकनियमपूर्वकाध्ययनशमदमादिसापेक्षेण वक्रोपायेन वेदान्तविचारेण। न च खण्डनाद्युक्तस्तर्को दृश्यत्वाद्यानुमानं च श्रुतिसहकार्येव, न तु शब्दैकसमधिगम्ये तत्त्वे स्वतन्त्रमिति वाच्यं, तथात्वे वाक्यार्थनिर्णायकोपक्रमाद्यतिरेकेण यागादेः स्वर्गादिसाधनतायामिव चिन्मात्रेतरस्य मिथ्यात्वेऽप्यनुमानोक्त्ययोगात्। न च शब्दे प्रत्यक्षेण प्रतिबद्धे प्रतिबन्धनिरासायानुमानोक्तिः, शब्दप्रतिबन्धकेन प्रत्यक्षेणानुमानस्य सुतरां प्रतिबन्धात्। न च प्रत्यक्षादेस्स्वरूपतोविषयतश्च दुर्निरूपत्वव्युत्पादकैः खण्डनतर्कैः शब्दविरोधिप्रत्यक्षाद्यप्रामाण्यसिद्धिरिति वाच्यं, शब्दस्यापि स्वरूपतो विषयतश्च दुर्निरूपत्वव्युत्पादकैस्तर्कैरेव प्रत्यक्षाविरोधिशब्दाप्रामाण्यस्याप्यापातात्। तस्माच्छब्दप्रामाण्योपयुक्ताकाङ्क्षायोग्यतादेः शब्दप्रतिपाद्यब्रह्मणश्च निर्वचननिरासमुखेन शब्दप्रतिकूलः खण्डनादितर्को न शब्दसहकारी। यदि च ब्रह्मनिर्वच-

प्रकाशः

कि **वेदान्तेति**। तथा च शूद्रस्यापि तज्जन्यज्ञानजननं संभवतीत्यधिकारस्स्यादित्यर्थः। ननु अनुमानं न स्वातन्त्र्येण ज्ञानजनकं, किन्तु शब्दोपसर्जनतया। अतो न दोष इत्याशङ्क्याह—**न चेति**। अनुमानोक्तेरुपयोगमाशङ्क्याह—**न चेति**। प्रयोजनान्तरमाशङ्कते—**न च प्रत्यक्षादेरिति**।

चन्द्रिका

ननिरासितर्को न ब्रह्मस्वरूपविरोधी, तर्हि द्रव्यगुणादिनिर्वचननिरासितर्कोऽपि न द्रव्यादिस्वरूपविरोधीति निर्वचननिरासो निष्फलः स्यात्। न च तार्किकादिरीतिं बाधितुं तान्प्रति खण्डनतर्कोक्तिः, न त्वद्वैतं साधयितुमिति वाच्यं, स्वव्याघातकानां ब्रह्मप्रमाणभेदादिनिरासितर्काणां तैर्बाधकत्वानङ्गीकारात्, तैरेव तर्कैरद्वैतप्रमाणोपनिषद्रीतेरपि बाधापाताच्च ॥

केचित्तु शूद्रस्योपनयनाध्ययनाभावेऽपि, कर्मकाण्डापशूद्राधिकरणन्यायेन कर्मानधिकारेऽपि, अध्ययनस्य स्वाध्यायसंस्कारतया लिखितपठितस्वाध्यायजन्यज्ञानस्याश्रेयस्साधनत्वेऽपि, "श्रावयेच्चतुरो वर्णान्" इत्यादिवचनादितिहासपुराणश्रवणेऽधिकारात् तज्जन्यब्रह्मज्ञानसद्भावादस्ति ब्रह्मोपासनेऽधिकार इति प्राप्ते,

प्रकाशः

उपयोगान्तरमाशङ्कते—**न च तार्किकेति**। स्वव्याघातकत्वं व्यनक्ति—**तैरिति** ॥

**केचित्त्विति**। ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति न वेति संशयो बोध्यः। **न्यायेनेति**। अग्निविद्ययोरभावादित्येवंरूपेणेत्यर्थः। एतेन पूर्वतन्त्रापशूद्राधिकरणेनागतत्वमुक्तम्। अनिर्ज्ञातप्रकारस्य कथमधिकार इत्यत आह—**श्रावयेदिति**। प्रयोज्याभावे प्रयोजकासिद्धेः प्रयोज्योपादानमर्थसिद्धम्। न च "अन्नाद्यकामं याजयेत्" इतिवत् प्रयोज्यव्यापारविधिः, अधिकारविशेषाश्रवणादिति भावः।

चन्द्रिका

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

इति वचनेन तयोर्वेदोपबृंहकमात्रत्वेन स्वातन्त्र्येण ज्ञानहेतुत्वाभावात् न शूद्रस्याधिकार इति सिद्धान्त इत्याहुः । तत्र पूर्वपक्षे कर्माधिकाराङ्गीकरणमयुक्तं, शूद्रेऽग्नेर्वेदजन्यकर्मविद्यायाश्चासम्भवेऽपीतिहासादिना ब्रह्मज्ञानवत् स्मृतिभिः कर्मज्ञानस्यापि सम्भवेनाग्न्यसाध्यसन्ध्योपासनादिकर्माधिकारसम्भवात् । किञ्चास्मिन् पक्षे सूत्रे इतिहासादेरुपबृंहकत्वमेव सिद्धान्तहेतुतया वक्तव्यं, न तु शूद्रस्योपनयनाद्यभावः ।

प्रकाशः

भावः । "अग्नेर्वेदजन्यकर्मविद्यायाश्च असम्भवेऽपि" इत्यभ्युपगमवादोऽयम्, पूर्वतन्त्रन्यायेन अग्न्याद्यभावेन कर्मानधिकारस्य "अनग्नित्वेन कर्मानधिकारे" इत्यादिना निरस्तत्वादिति ध्येयम् । **सन्ध्योपासनादीति** । एतेन, यदुक्तं श्रुतप्रकाशे कर्मणामितिहासपुराणेषु सामान्यतः कीर्तनेऽपि विशेषोपदेशाभावात् वैदिकेषु शूद्रस्यानधिकार इति, तन्निरस्तम्, सन्ध्यावन्दनादेर्विशेषोपदेशादिति । एतेनैव कर्माङ्गवैदिकमन्त्राध्ययनाभावात् न शूद्रस्य कर्मण्यधिकार इति केनचिदुक्तं निरस्तं, अविहितस्य स्वशाखेतरशाखागतमन्त्राध्ययनस्येव तदङ्गमन्त्रमात्राध्ययनस्योपपत्तेः । नित्ये कर्मणि शक्याङ्गमात्रोपसंहारेण अनुष्ठानस्योक्तत्वाच्चेति । सौत्रपदव्यावर्त्यपूर्वपक्षस्यैवोचितत्वेन इतिहासादिजन्यज्ञानमादायाधिकारपूर्वपक्षकरणं सूत्राननुगुणं चेत्याह—**किञ्चेति** । **न त्विति** । तथा च उपनयनाद्यङ्गीकारेण

चन्द्रिका

किञ्च वैदिकसंवर्गविद्याश्रोतुः 'शूद्र' इति सम्बोधनेन वैदिकविद्याश्रवणाधिकारे शङ्किते, सिद्धान्तिना "शुगस्य" इति सूत्रे तत्रैवानधिकार उक्तः। तस्मादितिहासदिना शूद्रस्य ज्ञानसम्भवासम्भवचिन्ता सूत्रविरुद्धा। अपि चेतिहासादेरुपबृंहकत्वेऽपि वेदानुपबृंहकेण वेदसमानार्थेन भाषाप्रबन्धादिना शूद्रस्य ब्रह्मज्ञानसम्भवात् तदुपासनाधिकारप्रसङ्गः। कर्मानधिकारादेव तदङ्गकोपासनानधिकारे तु इतिहासादितो ज्ञानाभावव्युत्पादनवैयर्थ्यम्। किञ्च "इतिहासपुराणाभ्यां" इति वाक्यमितिहासाद्यनुसारिण्येवार्थे वेदस्य तात्पर्यमित्येवम्परम्, न तु वेदनिरपेक्षेतिहासादिर्न बोधक इति,

प्रकाशः

अस्मद्रीत्यैव पूर्वपक्षो वाच्य इति भावः। सिद्धान्तोऽपि सूत्राननुगुण इत्याह—**किञ्च वैदिकेति**। अत एव श्रुतप्रकाशे 'संवर्गविद्यावाक्यगतशूद्रशब्दनिर्वाह एव सौत्रः, अन्यत् पूर्वपक्षहेतुजातं सूत्रकाराभिप्रेतं स्वयमुपन्यस्तम्' इत्याद्युक्तमिति भावः। अभ्युपेत्यापि सिद्धान्तप्रमेयमतिप्रसङ्गमाह—**अपि चेति**। **भाषेति**। त्वदीयद्राविडप्रबन्धादिनेत्यर्थः। ननु न ज्ञानासम्भवादुपासनानाधिकारः, किन्तु अङ्गेऽप्यनधिकारादेवेत्याह—**कर्मेति**। 'इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतो न स्वातन्त्र्येण' इत्यादिना त्वद्भाष्ये ज्ञानाभावोपपादनं व्यर्थमित्यर्थः। अयुक्तं च तद्व्युत्पादनमित्याह—**किञ्चेति**।

चन्द्रिका

अनेकशाखाभिज्ञमुनिकृतात् निर्णयरूपाद्वाक्यात् वेदनिरपेक्षादपि ब्राह्मणादीनामपि ज्ञानोत्पत्तेः। न चोत्पन्नमपि ज्ञानं शूद्रस्य न फलदं, तस्यापि "य इदं श्रुणुयात्" इत्युक्त्वा "शूद्रस्सुखमवाप्नुयात्" इत्युक्त्येतिहासादिश्रवणविधानात्।

प्रकाशः

**अनेकेति**। अनेनाप्तमूलतामाह। 'निर्णय' इत्यन्यानपेक्षताम्। **ब्राह्मणादीनामिति**। यथा प्रबलेन "अथातोऽग्निमग्निष्टोमेनानुयजन्ति" इति वाक्येनेष्टकचितस्थण्डिलरूपाग्नेराहवनीयाधारतया ज्योतिष्टोमाङ्गत्वे सिद्धे दुर्बलप्रकरणोपनीतोत्तरवेदिरप्यग्नचाधारतया तदङ्गम्, एवं पुराणादिजन्यमपि तज्ज्ञानमुपासनाङ्गं, अन्यथा तज्ज्ञानस्य व्यर्थतापत्तेः। तथा च शूद्रस्यापि तज्जन्यं ज्ञानं उपासनाङ्गं स्यादिति भावः। **न फलदमिति**। विहितसाधनाजन्यत्वादिति भावः। **इत्युक्त्वेति**।

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्।
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः॥
वेदान्तगो ब्राह्मणस्स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धस्स्याच्छूद्रस्सुखमवाप्नुयात्॥

इतिसहस्रनामसूक्तेचत्यर्थः। एतेन 'श्मशानवत् शूद्रपतितौ' इति प्रतिषिद्धस्य समीपपाठस्य प्रतिप्रसवमात्रं श्रवणविधिः, न तु ज्ञानान्त इति निरस्तं, "सुखं" इति श्रवणफलनिर्देशात्। न

चन्द्रिका

न च श्रवणं न ज्ञानार्थं, किन्तु पापक्षयार्थमिति शङ्क्यं, दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वायोगात् ।

स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा ।

इत्यारभ्य

इति भारतमाख्यानं कृपया मुनिना कृतम् ।

इत्यादिस्मृत्या भारतादेः शूद्रान्प्रति वेदकार्यकारित्वोक्तेश्च । यथा च त्वन्मते शूद्रादेः मुक्तिसाधनब्रह्मोपासनानधिकारेऽपि तत्साधनप्रपत्ताव-धिकारः, यथा वा स्वर्गसाधनज्योतिष्टोमादावनधिकारेऽपि तत्साध

प्रकाशः

ह्यविहितसाधनजन्यात्फलोदयोक्तिर्युक्तेति भावः । इतिहासपुराण-श्रवणानुज्ञानं पापक्षयार्थं नोपासनार्थमिति तद्भाष्योक्तमाशङ्कते—**न चेति । स्मृत्येति ।**

................न श्रुतिगोचरा ।

कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥

इति भारतं .............................. ।

इति भागवतप्रथमस्कन्धगतया स्मृत्येत्यर्थः । **वेदकार्येति** । तस्य यथा ब्रह्माद्यर्थावबोधद्वारा फलहेतुत्वं तथा श्रवणस्यापीत्यर्थः । ननु वेदानधिकारे कथं तत्कार्ये ब्रह्मज्ञानादावधिकारः स्यात् । "इति भारतमाख्यानं" इति स्मृतिस्तु भारतप्रशंसापरत्वेनोपपद्यत इत्यत आह—**यथा चेति** । 'प्रपत्तिः' भरन्यासः ।

चन्द्रिका

नत्रैवर्णिकसेवादावधिकारः, तथा वेदात् ब्रह्मज्ञानेऽनधिकारेऽपीतिहासादिना तज्ज्ञानादावधिकारे बाधकाभावाच्च ।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥

इत्यादेश्च । तदेतदभिप्रेत्याह टीकाकारः "हरिः शूद्राद्यैः वेदविद्याज्ञेयो न भवति" इति, भाष्यकृच्च "ज्ञेयो न वेदैश्शूद्राद्यैः" इति ॥

यच्चोक्तं परैः पौत्रायणस्य या शुक् सा रैक्केण शूद्रशब्देन सूच्यत इत्येव सौत्रस्य 'सूच्यते' इति पदस्यार्थ इति, तन्न, यौगिकेन शूद्रशब्देन शोकस्योक्ततया सूचनाभावात् ।

प्रकाशः

इत्यादेश्च गीतायामित्यर्थः । **भाष्येति** । अणुभाष्यकृदित्यर्थः । अन्यथा "न ज्ञेयः" इत्येवावक्ष्यदिति भावः ॥

एवं मतद्वयेऽपि अधिकरणशरीरं निरस्य आद्यसूत्रार्थं तावन्निरस्यति—**यच्चेत्यादिना** । "कम्वर एनं" इति वाक्यात् 'अस्य' जानश्रुतेः स्वस्मिन्ननादरश्रवणात् या शुगुत्पन्ना सा रैक्केण शुचा द्रवणात् शूद्रेति शब्देन सूच्यते 'हि' यस्मात्तस्मान्नायं जात्या शूद्र इत्यर्थः । **उक्ततयेति** । योगव्युत्पत्त्येत्यर्थः ॥

**केचिन्त्विति** । 'अस्य' शुश्रूषोर्जानश्रुतेः ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्कस्य सकाशं प्रत्याद्रवणा-

चन्द्रिका

केचित्तु "शुचेर्दश्च" इति उणादिसूत्रेण रप्रत्यये धातोश्च दीर्घे चकारस्य च दकारे कृते शूद्र इति भवति। तेन शोचितृत्वमेव शूद्रशब्दार्थ इति सूत्रे विवक्षितं, न तु शुचा द्रवणं तस्यार्थ इति। "तदाद्रवणात्" इत्याद्रवणोक्तिस्तु शोके लिङ्गतया, न तु शूद्रशब्दार्थतया, अनादरश्रवणवदाद्रवणस्यापि पञ्चमीनिर्देशेन प्रथमानिर्दिष्टायां शुचि हेतुत्वस्यैव न्याय्यत्वात्। अनादरणश्रवणं हि शुचि कारणतया लिङ्गम्, आद्रवणं तु कार्यतयेत्याहुः। तन्न, आद्रवणस्यापि शुचि हेतुत्वे चशब्दापातात्। पञ्चमी तु शुचा द्रवणाच्छूद्रो न तु चतुर्थजातियोगादित्यवश्याध्याहार्यप्रधानसाध्यान्वयात्। किञ्चात्र शूद्रशब्दस्यौणादिकरप्रत्ययान्ततायां न जात्यर्थत्वनिरासासिद्धिः, जातिवचिनोऽपि तदन्तत्वात्।

प्रकाशः

च्छुगस्य सञ्जातेति सूच्यते 'हि' यतः, अतः शूद्रेत्यामन्त्र्यते, न वर्णावरत्वेनेत्यर्थः। **शुचेर्दश्चेतीति**। उणादौ द्वतीयपादे "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपि" इत्यादिसूत्रोक्तप्रकारेण "अमितम्योर्दीर्घश्च" इति सूत्रान्तरात्, "शुचेर्दश्च" इति सूत्रात् प्रक्रियामाहुरित्यर्थः। ननु हेतुद्वयं व्यर्थमित्यत आह—**अनादरेति**। तथा च त्वत्पक्षे एकेन कृतकार्यत्वात् तत्रैव हेत्वन्तरत्वे अतिशयालाभः, प्रधानसाध्यानन्वयः, अध्याहारश्चेत्येते दोषा इति भावः। **जातिवाचिनोऽपीति**। अत एव "शुचेर्दश्च" इत्यत्र वृत्तौ

चन्द्रिका

तस्माद्रुगुद्द्रावणाद्रुद्र इतिवच्छुचाद्द्रवणाच्छूद्र इति नैरुक्तः शूद्रशब्दः ॥

यच्चोक्तमुभाभ्यां, अस्यामेव संवर्गविद्यायां उत्तरत्र "अथ ह शौनकं च कापेयमभिप्रतारिणं च कार्क्षसेनिं" इत्यभिप्रतारिनामा पुरुषः कीर्तितः। स चाभिप्रतारी चैत्ररथ इति तावद् वक्तव्यं, कापेयाख्येन याजकेन योगात्। कापेयेन याज्यतया योगो हि श्रुत्यन्तरे "एतेन वै चित्ररथं कापेया अयाजयन्" इति चित्ररथस्यावगतः। न चैवं सत्यभिप्रतारी चित्ररथ एव स्यात्, न

प्रकाशः

'शोचतीति शूद्रः वृषलः' इत्युक्तमिति भावः। **रुग्द्रावणादिति**। यथा "रोदेर्णिलुक् च" इति सूत्रेण रोदयतीति रुद्र इति व्युत्पादितत्वेऽपि "रुजं द्रावयते यस्माद्रुद्रः" इति निरुक्तिबलात् प्रकृतिप्रत्ययान्तरकल्पनेन रुद्रशब्दनिष्पत्तिः, तथेहापीत्यर्थः।

वर्णागमो विपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

इति ऋग्भाष्यटीकोक्तदिशा वर्णविकारादिना शुचा द्रवणादेव हेतोः शूद्रशब्दनिष्पत्तिः ध्येयेति भावः। एतेन यदुक्तं श्रुतप्रकाशे, औणादिकनिर्वाहापेक्षया नैरुक्तप्रक्रियया निर्वाहस्यामुख्यत्वान्न नैरुक्तनिर्वाहः कार्य इति, तन्निरस्तं, तथात्वे जातिवाचित्वानपायात्, सूत्राननुगुणत्वाच्चेति। द्वितीयसूत्रार्थमपि प्रत्याह—**यच्चेति**। कापेययोगेऽपि चित्ररथत्वं कुत इत्यत आह—**कापेयेनेति**।

चान्द्रिका

तु चैत्ररथ इति शङ्क्यं, तस्याभिप्रतारीति संज्ञाभेदेन चित्ररथादन्यत्वात् । चित्ररथादन्यस्य च चित्ररथयाजककापेययोगः चैत्ररथत्वं विना न युक्तः, समानान्वयानां हि प्रायेण समानान्वयाः याजका भवन्ति । चैत्ररथस्य क्षत्रियत्वं च "तस्माच्चैत्ररथानामेकः क्षत्रपतिरजायत" इति श्रुत्यन्तरेऽवगतम् । एवञ्चाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेण सह समभिव्याहाराल्लिङ्गात् पौत्रायणोऽपि क्षत्रिय इति द्वितीयार्थ इति, तन्न, 'समभिव्याहारात्' इत्यस्याध्याहार्यत्वात् ।

प्रकाशः

**संज्ञाभेदेनेति** । "अथैष ज्योतिः" इत्यादौ संज्ञाभेदेन कर्मान्यत्वस्य द्वितीये स्थितत्वादिति भावः । एतावता तत्त्वं कुत इत्यत आह—**समानेति** । तथा च अभिप्रतारिणश्चित्ररथयाजककापेयेन याज्यतया योगस्तस्य चित्ररथान्वयजत्वेनेति चैत्ररथत्वमित्यर्थः । भवत्वभिप्रतारी चैत्ररथः, ततश्च किमित्यत आह—**चैत्ररथस्येति** । **द्वितीयेति** । यद्यपि रामानुजमते "क्षत्रियत्वावगतेः" इत्येव द्वितीयं, "उत्तरत्र" इत्यादि तृतीयं, तथाऽपि "क्षत्रियत्वावगतेः" इत्यत्र हेत्वनुक्तेः, "उत्तरत्र" इत्यत्रैव हेतूक्तेः, ग्रामेशत्वादिलिङ्गाध्याहारेण योगविभागे ज्ञापकाभावात्, हेत्वध्याहारस्य क्लिष्टत्वात्, "चैत्ररथेन" इत्यस्य क्षत्रियत्वावगतौ हेत्वन्तरपरत्वे चशब्दापातेन च सर्वस्यापि द्वितीयत्वमेव युक्तमिति वा, परमते द्वितीयत्वात्तदभिप्रायेण वा, स्वमतरीत्या वा

चन्द्रिका

"कापेयमभिप्रतारिणं" इत्यत्राभिप्रतारिणः कापेयेन सह पाठेऽपि याज्यत्वेन तद्योगाप्रतीतेश्च। अस्तु वा याज्यत्वेन तदन्वयस्तथाऽपि अभिप्रतारिणो न चैत्ररथत्वसिद्धिः, 'प्रायेण' इति वदता त्वयाऽपि अचैत्ररथानामपि कपियाज्यत्वाङ्गीकारात्। अस्तु वाऽभिप्रतारिणः कापेययोगात् क्षत्रियत्वं, तथाऽपि न तत्समभिव्याहारमात्रेण पौत्रायणस्य क्षत्रियत्वं, कापेय एवानैकान्त्यात्। निश्चितब्राह्मण्येन कापेयेन रैक्केण वा समभिव्याहारात्पौत्रायणस्य

प्रकाशः

'द्वितीय' इत्युक्तमिति बोध्यम्। अत्र रैक्कान्वितस्य जानश्रुतेः क्षत्रियत्वनिर्धारणं क्षत्रियप्रायपाठाधीनं, तदभिप्रतारिणः क्षत्रियत्वाधीनं, तदपि तस्य चैत्ररथत्वनिर्धारणाधीनं, तच्च तस्य कापेययाज्यत्वावधारणाधीनमित्युक्तम्। तत्र किमपि निर्धारयितुमशक्यं, निर्धारकाभावादिति क्रमेणाह—**कापेयमिति**। **कापेय एवेति**। अभिप्रतारिसहपाठेऽपि कापेये क्षत्रियत्वाभावादिति भावः। ननु सन्दिग्धक्षत्रियभावस्यैव निश्चितधर्मान्तरोपेतान्यसहपाठेन तादृशत्वनिश्चयः, "विशये प्रायदर्शनात्" इत्युक्तेः। नचैवं कापेयः, येनातिप्रसङ्ग इत्यत आह—**निश्चितेति**। ननु कापेयादिसहपाठेऽपि न पौत्रायणस्य ब्राह्मण्यं, तत्सन्देहस्य तस्मिन् बीजाभावेनाभावादिति चेन्न, संवर्गविद्याश्रोतृत्वादेस्तद्बीजत्वसम्भवात्। ननु तथाऽपि ग्रामेशत्वादिना क्षत्रियलिङ्गेन ब्राह्मणसहपाठो बाध्यत इति चेत्, तर्हि शूद्रश्रुत्या क्षत्रियसहपाठोऽपि बाध्यताम्, तद्यौगिकत्वस्याद्याप्यसिद्धेरिति भावः। ननु ब्राह्मणसहपाठः क्षत्रियत्वस्यैव लिङ्गं, न ब्राह्मण्य-

चन्द्रिका

ब्राह्मण्यापाताच्च। न च निश्चितब्राह्मण्येन कापेयेन समभिव्याहृतस्याभिप्रतारिणः क्षत्रियत्ववान्निश्चितब्राह्मण्येन रैक्केण समभिव्याहारात्पौत्रायणस्यापि क्षत्रियत्वमिति वाच्यं, ब्राह्मणसमभिव्याहृतस्य क्षत्रियत्वनियमाभावात्, रैक्कसमभिव्याहारस्यैव लिङ्गतया वक्तव्यत्वेन चैत्ररथसमभिव्याहारस्य सूत्रे लिङ्गत्वोक्त्ययोगाच्च ॥

यच्चोक्तं तृतीये "संस्कारपरामर्शात्" इत्यस्य "तं होपनिन्ये" इत्येतद्विषयवाक्यमिति, तन्न, अस्माकं मते "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्यत्र तच्छब्देन प्रकृतसंस्कारपरामर्शवत्, "तं होपनिन्ये" इत्यत्र उपनयनाख्यसंस्कारोक्तिमात्रसद्भावेऽपि तत्परामर्शाभावात्। यच्चोक्तं चतुर्थे 'प्रवृत्तेः' इत्यस्य ब्रह्मोपदेशे प्रवृत्तेरित्यर्थ इति, तन्न, "नैतदब्राह्मणो विवक्तु मर्हति, समिधं सोम्याहरोप त्वा नेष्ये" इति त्वयाऽप्युदाहृते वाक्ये उपनयने प्रवृ-

प्रकाशः

स्येति शङ्कते—**नचेति** ॥

**यच्चेति**। 'उभाभ्यां' इति च सर्वत्र सम्बध्यते। "उप त्वा नेष्ये" "तं होपनिन्ये" इति जानश्रुतेः उपनयनसंस्कारपरामर्शात्,

न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति।

इति "संस्काराभावाभिलापाच्च" इति सूत्रार्थः। **चतुर्थ इति**। "नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याहर" इति शूद्रत्वाभावनिर्धारणे जात एव तं प्रति ब्रह्मोपदेशे प्रवृत्तेरिति सूत्रार्थः।

चन्द्रिका

त्तेरेव साक्षाच्छ्रवणात् । यच्चोक्तं शूद्रस्य स्मृत्या श्रवणादिप्रतिषेधादिति पञ्चमार्थ इति, तन्न, भाष्योक्ते श्रौतनिषेधे सम्भवति स्मार्तप्रतिषेधपरत्वायोगात् । स्मृतेः श्रवणादिप्रतिषेधाच्चेति चशब्दस्य भिन्नक्रमत्वापाताच्चेति ॥

प्रकाशः

**यच्चोक्तमिति ।** "अथ हास्य वेदं शृण्वतः त्रपुजतुभ्यां श्रोत्रपरिपूरणमुदाहरणे शरीरभेदः" इति स्मृत्या शूद्रस्य वेदश्रवणादिप्रतिषेधाच्च न तस्याधिकार इत्यर्थः ॥ एतेन रामानुजरीतिदूषणेनैव तद्रीत्यविशिष्टं कस्यचिच्छैवस्य मतमपि प्रत्युक्तं, सूत्रार्थोऽपि तथैव निरस्यः । यदत्रोक्तं द्वितीयसूत्रार्थदूषणे अभिप्रतारिणः कापेयसम्बन्धः प्रतीयमानः श्रुत्यन्तरप्रसिद्धः तद्याज्यत्वलक्षण एव पर्यवस्यतीति याज्यत्वेन तद्योगाप्रतीतेरिति दोषो नेति, तन्न, तथा विशिष्य श्रुत्यन्तराभावात् । "चित्ररथं कापेया अयाजयन्" इत्यस्य सामान्यत्वात् । अन्यथा अभिप्रतारिणः कापेययाज्यत्वे सिद्धे चैत्ररथत्वसिद्धिः, तत्सिद्धौ कापेययाज्यत्वसिद्धिरत्यन्योन्याश्रयापत्तेः । किञ्चात्र सहपाठस्यैव श्रवणेन सम्बन्धस्यैवाप्रतीतेश्च । अत एव 'सहपाठेऽपि' इत्युक्तम् । भोजनार्थं सहोपविष्टा इति हि पाठः सहपाठः । न च तावन्मात्रेण कश्चन सम्बन्धः सिध्यति । एतेनैव हस्तिहस्तिपयोस्सह स्थितयोर्दर्शने अयमस्य हस्तिप इतिवदत्राप्ययमस्य याजक इति ज्ञानं भवतीति

चन्द्रिका

टीकाक्षरार्थस्तु—**सेदुराजेत्यादिवदिति**। यथा 'स': इत्यत्र छान्दसेन विसर्गलोपेन 'सेत्' इति गुणः, तथा 'हारः इत्वा' इत्यत्रापि 'हारेत्वा' इति गुण इत्यर्थः। यद्वा—'हारेत्वा' इत्येकं पदम्। व्यत्ययेन च द्विवचनस्यैकवचनमित्याह—**हारेत्वानाविति**। **दीर्घस्वरार्थत्वेनाद्रवणादित्युक्तमिति**।

संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते।
उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्॥

प्रकाशः

निरस्तं, याजकत्वप्रत्यायकाभावात्। अत एव "याज्यत्वेन" इत्युक्तमिति॥

"-'हारेत्वा' इति 'सेदु राजा' इत्यादिवत् विसर्गलोपेन भवति। हारेत्वानाविति वा" इति वाक्यद्वयं क्रमेण व्यनक्ति—**यथेति**। "सेदु राजा क्षयति चर्षणीनां" इत्यत्र 'स इदु राजा' इति वक्तव्ये पदकाले श्रूयमाणस्य विसर्गस्य लोपे "आद्गुणः" इति गुणे च सति रूपमाश्रित्य 'सेत्' इति निर्देशः, तथेत्यर्थः। ननु "सोऽचि लोपे चेत्पादपूरणम्" इत्यनेन सुप्रत्ययस्यैव लोपो विहितो न विसर्गस्य, तत्कथं 'विसर्गलोपेन' इत्युक्तिः, सत्यं, पदकाले विसर्गस्यैव श्रवणेन संहिताकाले तस्यैवाश्रवणेन 'विसर्गलोपेन' इत्युक्तावपि तत्रैव तात्पर्यादित्याहुः। "दीर्घ" इति वाक्यं दुर्गमत्वात्सप्रमाणं व्यनक्ति—**संहितायामिति**।

चन्द्रिका

इत्यादिवचनैः श्रुतौ शूद्रशब्दे 'ऊ' इति दीर्घस्वरः शोकाधिक्यज्ञापनार्थ इति सूचयितुं सूत्रे 'आद्रवणात्' इत्युक्तमित्यर्थः। **ब्रह्माणनयोग्यानां त्रैवर्णिकानामिति।**

आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः।

इति श्रुतिव्याख्यानरूपायां स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानात्, श्रुतावपि ब्राह्मणशब्दः त्रैवर्णिकपर एवेत्यर्थः। **अविहितोपनयनानामेवेति।** अविहितोपनयनत्वे सत्यनिषिद्धाध्ययनानामुत्तमस्त्रीतिर्यगादीनामेवापवादविषयता, न तु निषिद्धाध्ययनानामित्यर्थः॥

प्रकाशः

**ऊ इति दीर्घस्वर इति।** शूद्रेत्येव पदकाले अभिप्रेतत्वादित्यर्थः। **इत्युक्तमिति।** सूत्रे आङुच्चारणं कृतमित्यर्थः। "**तदभाव**" इति सूत्रटीकायां "नैतदब्राह्मणो विवक्तुमर्हति" इति वाक्ये ब्राह्मणपदस्यैव श्रवणेन "शूद्रत्वाभावनिर्णय एव प्रवृत्तेः" इति भाष्यादि कथमित्याशङ्क्य, "ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेः" इत्युक्तं वाक्यं रूढार्थत्यागेन यौगिकार्थग्रहणे हेतुं वदन्व्याचष्टे—**आर्जवमिति।** "अविहित" इत्याद्यन्तिमवाक्यमस्पष्टत्वाद्व्याचष्टे—**अविहितेति।** शिष्टं स्पष्टमिति भावः॥

इत्यपशूद्राधिकरणम्.

---